# ŚRĪ VINĀYAKARAHASYAM

## JÑĀNASĀRAM

## PART – I

*Editor* :

Kunnam Brahmaśrī
**V. VISWANATHA SARMA, M.A.,**
Śrauta-Salakṣaṇa-Sāmaveda-Vidvān, Vyākaraṇa-Vedānta Śiromaṇi, Professor of Vedānta
Sanskrit College, Madras-4.

**Published by :**

**SRI G. RAMASWAMY**
*Additional Solicitor General*
*Government of India, New Delhi.*
*Dr. Radhakrishnan Road, Madras-4.*

# विषयानुक्रमः

## आमुखम्

विदितमेवैतत् समेषामास्तिकानां, यत् सर्वशुभकर्मणां सर्वदेवतापूजायाश्चारम्भे श्रीविनायक आराध्यत इति। तत्र प्रमाणं 'ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते' इति श्रुतिरेव। अस्यां श्रुतौ ब्रह्मणस्पतिः (तै.सं.का.२,प्र. ३) श्रीविनायकः मन्त्राणामधिपतित्वेन सर्वासां देवतानां ज्येष्ठत्वेन च वर्ण्यते। सर्वदेवानां ज्येष्ठत्वात् श्रीविनायकस्याग्रपूज्यत्वं साम्प्रतमेव। किञ्च चम्पकारण्यवासिभिः श्रीत्यागराजाध्वरीन्द्रैः 'तद्धेतु' न्यायपुरस्सरं श्रीविनायकस्याग्रपूज्यत्वं प्रसाधितं न्यायेन्दुशेखरग्रन्थस्यारम्भे—

"अप्यन्यामरमारिराधयिषतां यत्पादपङ्केरुह-
द्वन्दाराधनमन्तरायहतये कार्यं त्ववश्यं विदुः।
'तद्धेतो'रिति नीतिवित्तु भजते देवं यमेकं परं
सर्वार्थप्रतिपादनैकचतुरो द्वैमातुरोऽव्यात्स नः"॥ इति

एवं सर्वदेवताज्येष्ठत्वेन निगदितस्य श्रीविनायकस्य तत्त्वं सर्वैरवश्यं ज्ञातव्यमेव। श्रीविनायकस्य तत्त्वमस्मिन् विनायकरहस्यग्रन्थे समग्रतया प्रतिपादितम्। अयं विनायकरहस्याख्यो ग्रन्थः ब्रह्मज्ञानसुखोदयाख्ये ग्रन्थे ओङ्कारखण्डे वैष्णवसंहितायां प्रथमांशत्वेन निगदितः।

ब्रह्मज्ञानसुखोदयाख्ये ग्रन्थे ओङ्कारखण्डे वैष्णवी संहिता कथिता । इयं च वैष्णवसंहिता पञ्चत्रिंशत्सहस्रग्रन्थैः परिकर्मिता । अस्यां वैष्णवसंहितायां चत्वारः अंशाः विद्यन्ते । विनायकरहस्याख्यः प्रथमांशः, गाणपत्यप्रभावाख्यः द्वितीयांशः, भक्तमाहात्म्यसंज्ञकः तृतीयांशः, व्रतमाहात्म्यसंज्ञः चतुर्थांशः । एवं चतुरंशयुता वैष्णवी संहिता । विष्णुना लोमशादिमहर्षिभ्यः कथितत्वात् अस्याः संहिताया वैष्णवसंहिता इति आख्या संजाता । विनायकरहस्याख्येऽस्मिन् ग्रन्थे १ ज्ञानामृतं २ ज्ञानानन्दं ३ लीलासारं ४ बीजागमं, ५ योगानन्दम् इति पञ्च काण्डानि सन्ति । अयं च ग्रन्थः अष्टादशसहस्रग्रन्थैः परिशोभितो भवति । ज्ञानानन्दादीनि चत्वारि काण्डानि गाणेशदीक्षायुक्तेभ्य एव कथनीयानि । ज्ञानामृताख्यं प्रथमं काण्डं तु गाणेशदीक्षारहितेभ्योऽपि कथयेत् ।

ज्ञानामृतकाण्डप्रथमभागस्य **ज्ञानसार** इति उत्तरभागस्य **योगसार** इति च संज्ञा उक्ता । अयं ज्ञानसारः शतोपनिषन्निर्दिष्टानामर्थानां सारभूतः । अतएव अस्य भागस्य **ज्ञानसार** इति संज्ञा समजनि ।

जानसारेऽस्मिन् गणेशपूर्वहृदयं, गणेशोत्तरहृदयं, सिद्धिबुद्धिहृदयं चेति हृदयत्रयं विराजते । गणेशपूर्वहृदयं परमेश्वरेण सनकादिभ्यः, उत्तरहृदयं गणकेन सनकादिभ्यः, सिद्धिबुद्धिहृदयं सूर्येण नारदादिमहर्षिभ्यश्च उपदिष्टम् ।

अस्मिन् ग्रन्थे, सर्वकर्मणामादौ गणेशपूजाया अनुष्ठाने कारणं, दूर्वोत्पत्तिः, गणपतिस्वरूपनिरूपणं, गणपतेः पत्नी-

हीनत्वं, गणपतेः ब्रह्मचारित्वम्, गणेशस्य मलजातत्वं, वाहन-स्वरूपनिरूपणं, कुट्टने मन्त्रनिरूपणम्, गणेशपूजायाः फलं, लम्बोदरनामनिरूपणं, दूर्वादिश्रैष्ट्यं, तुलस्याः निन्दितत्वम् इत्यादयः सर्वैरवश्यं ज्ञातव्या विषयाः सहेतु प्रतिपादिताः ।

सर्वकर्मणामादौ **गणेशस्य पूजने कारणम्**—गणेशः सिद्धिबुद्धिपतिः । तदुक्तम्—

बुद्धिः कर्ममयी प्रोक्ता सिद्धिः कर्मफलात्मिका ।
बुद्धिर्ज्ञानमयी प्रोक्ता सिद्धिर्ज्ञानफलात्मिका ।।
सिद्धिबुद्धिपतिश्चायं गणेशः पञ्चमो विभुः । (पृ.४७)

इति । तेन कर्मज्ञानतत्फलानां प्रदाता गणेश एव इति ज्ञायते ।

किञ्च—"सदसद्भावसंयुक्तः स कालो द्विविधो मतः ।
असद्भावमयो विघ्नः सत्कालोऽविघ्न उच्यते ।।
चतुर्विधानां जगतां कारणं यः परेश्वरः ।
कालस्यापि कारणं सः कर्मणामपि सत्तमः ।।"
(पृ. ४७) इति ।

विघ्नाविघ्नज्ञानकर्मजगतां जनकस्स्मृतः । एवं विघ्ना-दीनां जनकत्वात् सर्वकर्मणामादौ विघ्ननिवृत्त्यर्थं गणेशः प्रथमं पूजनीयः ।

किञ्च तैत्तिरीयश्रुतौ—"ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते" इति उक्तम् । सर्वदेवताभ्यो ज्येष्ठत्वादपि गणेशः प्रथमं पूजनीयः ।

दूर्वोत्पत्तिः—पुरा इन्द्रादयो देवाः सुधालाभार्थं क्षीराब्धिममथ्नन् । चिरकालमुन्मथ्यापि सुधां न प्रापुः । ततः ब्रह्मा सिद्धिबुद्धी सस्मार । ते बीजद्वयं समुद्धृत्य ब्रह्मणे दत्त्वा प्राहतुः—

"बीजाभ्यां संभवेद् दूर्वा गणेशप्रियकारिणी ।
आवयोरंशसंभूता तया पूजय विघ्नपम् ॥" (पृ. ५०)

इति -

ततः ब्रह्मादयो देवाः दूर्वाभिः गणेशं संपूज्य सुधामलभन्त । एवं सिद्धिबुद्ध्यंशजत्वात् दूर्वा गणेशस्य प्रिया भवति ।

**गणपतिस्वरूपनिरूपणम्—**

अस्मिन् ग्रन्थे गणपतेस्स्वरूपमनेकधा वर्णितम् । प्रथमतः गुहाहितब्रह्मत्वेन गणेशः वर्ण्यते ।

तथाहि—

गुहायां निहितं ब्रह्म सत्यं ज्ञानमनन्तकम् ।
सत्यं तु सगुणं ब्रह्म त्वंपदार्थमयं स्मृतम् ।
ज्ञानं तु निर्गुणं ब्रह्म तत्पदार्थमयं स्मृतम् ॥

स्वस्वरूपमनन्ताख्यम् असिरूपमिति स्मृतम् ।
एवं तु त्रिविधं प्रोक्तं ब्रह्म वेदे गुहाहितम् ॥ (पृ. ७०)

इति ।

एवं सगुणनिर्गुणब्रह्मणोरैक्यरूपेण गणेशः वर्ण्यते । त्रथा हि—

नानाभाववधारकं तु सगुणं तद् गकारकम् ।
नानाभावविहीनं तन्निर्गुणं तण्णकारकम् ।।

एवं द्विभावसंयुक्तम् ईश्वराख्यं द्वयोरपि ।
स्वस्वरूपं परं ब्रह्म गणेशश्चेति कथ्यते ।। (पृ.७०) इति।

एवं गजाननस्वरूपं सगुणनिर्गुणब्रह्मणोरैक्यरूपेण कथ्यते तथा हि—

तस्यैव मस्तकं प्रोक्तं निर्गुणं गजवाचकम् ।
कण्ठाधः सगुणं ब्रह्म तस्यैव नरवाचकम् ।।
द्वयोरभेदभावे तु गजाननस्वरूपकम् ।। (पृ.७०) इति ।

किञ्च गजाननस्वरूपं 'तत्त्वमसि' इति महावाक्य" त्वेन वर्ण्यते—

तथाहि—गजाननस्वरूपं तु महावाक्यस्वरूपकम् ।।
कण्ठाधः त्वंपदं प्रोक्तं नराकारं जगन्मयम् ।
कण्ठादूर्ध्वं तत्पदं स्यात् गजाकारं तु निर्गुणम् ।।
द्वयोरभेदभावे असिपूर्णकमकूबरम् ।
प्रत्यक्षं तत्त्वमस्याख्यं ब्रह्म गाणपतं वरम् ।। (पृ. ७१) इति ।

मायायाः सत्ताप्रदातृत्वेन गजाननमनिर्वचनम् ताथहि—

माया गजेति कथिता माया सा जडरूपिणी ।
सत्ताप्रदानान्मायायाः प्राणदायक उच्यते ।।

निर्गुणस्तेन वेदेषु गजानन इति स्मृतः ।। (पृ.७१) इति ।

एवं गणेशस्य ब्रह्मरूपत्वेन निर्वचनादेव अस्य ग्रन्थस्य 'विनायकरहस्यम्' इति संज्ञा संजाता इति मन्ये ।

गणपतेः पत्नीहीनत्वम्—

दीपस्य वर्तिः तैलं च यथा द्वे शक्ती, तथा गणपतेः सिद्धिबुद्धी द्वे शक्ती वर्णिते । मायारूपसिद्धिबुद्धिसहितः गणपतिः जगत् सृजति । सृष्ट्यनन्तरं गणेशः शक्तिविहीनः सृष्टिव्यापाररहितः शुद्धब्रह्मरूपेण वर्तते । तस्यामवस्थायां पत्नीहीन इति उच्यते ।

तथाहि—

मायायोगेन सृष्ट्वा तान् ततस्साक्षी बभूव ह ।
भुक्तभोगां तु तां मायां त्यक्त्वा सत्यस्वरूपिणीम् ।
महिम्नि संस्थितोऽभूच्च सा माया जडरूपताम् ।।
संप्राप्य बहुरूपासौ बभूव विश्वरूपिणी ।
अतोऽयं पत्नीहीनेति कथ्यते योगपारगैः ।। (पृ.४२)

इति ।

गणेशस्य ब्रह्मचारित्वम्—

ब्रह्मसंज्ञकस्य प्रणवस्य वर्णनादरूपेषु संचारात्, ज्ञानोपास्तिकर्मभक्तिप्रतिपादकेषु वेदेषु संचारात्, नानादेवतामध्ये अग्रपूज्यत्वेन संचारात्, ब्रह्मचर्यरक्षणार्थं ब्रह्मचर्याश्रमे संस्थितत्वात्, रुद्रादिदेववत् सिद्धिबुद्धिसहितोऽपि ताभ्यां सह सङ्गरहितत्वाच्च गणेशः ब्रह्मचारीति वर्ण्यते ।

**गणेशस्य मलजातस्वरूपत्वम्—**

पार्वती देवी कदाचित् अत्युग्रतपसा धूलिधूसरितदेहा शङ्करं तोषयामास । तपसा तुष्टः शङ्करः एवं वरं ददौ पार्वतीदेव्यै—"तव देहजं मलं सर्वैर्देवैः पूजनीयं भवेत्" इति । ततः कदाचित् पार्वती स्नात्वा स्वदेहजं मलं गृहीत्वा भूमौ स्थापयामास । स एव गणेशस्संजातः ।

अन्यथापि गणेशस्य मलजातत्वं वर्ण्यते । पुरा **शक्तिभक्त** इति मुनीश्वरः शाक्तदीक्षाविरहितः भक्तिमार्गेण शङ्करं त्यक्त्वा शक्तिं तोषयामास । भक्तिवैभवात् शक्तेः सायूज्यमाप । अन्यकल्पे स एव महादेवपुत्रस्समजनि । कदाचित् पार्वती गृहद्वारे तं संस्थाप्य "अन्तर्गृहे कोऽपि न प्रवेश्यः" इत्युक्त्वा स्नानार्थमगमत् । तदा पार्वतीं द्रष्टुं शङ्करः आगमत् । 'अन्तर्गृहं न प्रवेष्टव्यम्' इति रुरोध शिवपुत्रः शङ्करम् । रुष्टश्शङ्करः तस्य शिरोऽच्छिनत् । पुत्रमरणेन रुष्टा पार्वती सर्वलोकानां शक्तिं जग्राह । ततः ब्रह्मादयो देवाः शक्तिगेहमागत्य क्रोधशान्तिं प्रार्थयामासुः । तदा काचित् नभोवाणी एवमाह—"अस्य शिवपुत्रस्य शरीरे गजासुरस्य शीर्षं संयोज्य शतलक्षसंख्यया एकाक्षरमन्त्रजपं कुरुत, अयं पुनराविर्भवेत्" इति । ब्रह्मादयोः देवाः तथा चक्रुः । ततः गणेशानः मलजातकलेवरे आविरासीत् ।

**वाहनस्वरूपनिरूपणम्—**

गुणेशः देहिनां हृदये स्थित्वा चोरवद् भोगभोक्ता भवति । अतः सः **चौर्यब्रह्म** इति कथ्यते । 'मुष-स्तेये' इति

धातुः । तस्मात् निष्पन्नः मूषकशब्दः । सर्वेषां प्राणिनां हृदि स्थित्वा चोरवत् भोगभोक्ता भवति गुणेशानः । सः ब्रह्मणस्पतेः गणेशस्य वाहको भवति ।

तथाचोक्तम् —

"मूषकश्चेति कथितः मूषकाख्यो गुणेश्वरः ।
चतुर्ब्रह्ममयोऽयं तु पञ्चमस्य परात्मनः ।।
सेवार्थं वाहनो जातस्तेन मूषकवाहनः ।

इति वेदेषु कथितः पञ्चमो ब्रह्मणस्पतिः (पृ.१२५) ।। इति ।

**कुट्टननिरूपणम्—**

सर्वकर्मणादौ कुट्टनं सूक्ष्मपूजात्वेन उच्यते । मूर्ध्नि कुट्टनसमये 'गणानां त्वा' इति मन्त्रो वा 'शुक्लाम्बरधरम्' इति श्लोको वा उच्चारणीयः ।

तथाचोक्तम्—

'गणानां त्वे'ति मन्त्रस्तु प्रशस्तं कुट्टनेऽथवा ।
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।
मन्त्र एषोऽथवा जप्यो भावेन मूर्ध्नि कुट्टने ।।'

(पृ. १४७) इति ।

**गणेशपूजायाः फलनिरूपणम्—**

इदं जगत् गणेशस्य देहो भवति । सः जगतः आत्मा भवति । तस्मिन् पूजिते सर्वं पूजितं भवति । गणेशपूजनेन

चित्तशुद्धिं प्राप्य ततः ज्ञानसिद्धिं लब्ध्वा अन्ते कैवल्यमाप्नोति गाणपतः ।

तथा चोक्तम्—

चतुर्विधमिदं विश्वं जडजीवेशरूपकम् ।
इदं देहो गणेशस्य स चात्मा जगतस्स्मृतः ।
जगद्ब्रह्ममयो देवो गणेशः पञ्चमो विभुः ।
विघ्नेशे पूजिते सर्वं भवेच्च तेन पूजितम् ।
गणेशपूजनेनैव चतुर्विधमिदं जगत् ।
पूजितं च भवेत्सत्यं तेन गाणपतः क्रमात् ।।
चित्तशुद्धिं च ज्ञानं च संप्राप्य बुद्धिवैभवात् ।
ज्ञानसिद्धिं च संप्राप्य स्वानन्दं ब्रह्मभूयकम् ।
लभेच्च ह्यथवा योगसिद्ध्या कैवल्यमाप्नुयात् ।।

(पृ. १६१) इति ।

**लम्बोदरनिर्वचनम्—**

लम्बोदरोपनिषदि गणेशस्योदरादेव जगत्सृष्टिरुदीरिता । अतः गणेशस्य लम्बोदर इति नाम सम्पन्नम् । अथवा गुणेशः गणेशस्य देहरूपः । गुणेशस्य रोमकुपेषु ब्रह्माण्डानि लम्बन्ते । अतः गणेशस्य लम्बोदर इत्याख्या सम्पन्ना ।

तथाचोक्तम्—

लम्बोदरोपनिषदि प्रोक्तमेवं मुनीश्वराः! ।
उदरादेव सृष्टिस्तु लोकेष्वद्य प्रदृश्यते ।।
उदरात्पञ्चमस्यैव गणेशस्य परात्मनः ।
चतुर्विधमिदं विश्वं जडजीवेशरूपकम् ।।

जातमन्ते स्थितं तत्र भवेदेव न संशयः ।
उदरे तस्य लम्बन्ते जगज्जीवेश्वरादयः ।
तेन लम्बोदरः प्रोक्तो गणेशो ब्रह्मणस्पतिः ।
गुणेशस्यैव देहस्थरोमकूपेषु भास्कर ! ।
ब्रह्माण्डानामनेकानि लम्बन्ते वेदशासनात् ।।
गुणेशस्तु गणेशस्य देहरूपो न संशयः ।
लम्बोदर इति प्रोक्तः............... ।। (पृ.१८७) इति ।

एवमस्मिन् विनायकरहस्ये गणेशपूजायां दूर्वाशमी-मन्दारश्वेतार्ककुसुमानां प्रशंसा तुलस्याः निन्दा च साख्यायिकं निरूपिता । विस्तरभयात् ते विषयाः न लिख्यन्ते ।

किञ्च अस्मिन् ग्रन्थे गणेशनित्यपूजा, सिद्धिबुद्धिपूजा, गणेशक्षेत्राणि, उत्सवक्रमः, गणेशस्य षोडशावरणस्तवः, त्रिशतीनामस्तोत्रम्; अष्टोत्तरशतनामस्तोत्रं, सिद्धिबुद्ध्योः अष्टोत्तरशतनामस्तोत्रं, गणेशस्य मानसपूजाकल्पः इत्यादयो बहवो विषया निर्दिष्टाः । अतः गणेशतत्त्वविविदिषुभिरयं ग्रन्थः अवश्यं पठनीयः ।

अस्य विनायकरहस्यस्य प्रणेता क इति न निर्णेतुं पार्यते । किन्तु पञ्चकाण्डात्मकेऽस्मिन् विनायकरहस्ये बीजगमकाण्डं व्यासेन प्रणीतमिति अडयार् पुस्तकालयबीजागममूलग्रन्थात् ज्ञायते । अतोऽयमपि ग्रन्थः व्यासेन प्रणीतो भवेदिति ऊह्यते । इतः पूर्वममुद्रितोऽयं ग्रन्थः इदानीं मुद्राप्य प्रकाश्यते ।

येषामनुग्रहविशेषेण त्रयी स्वार्थसमन्विता अद्यापि विराजते, येषां करुणादृष्ट्या सर्वे जनाः निर्धूतकल्मषाः शान्तान्तरङ्गाश्च शोभन्ते, येषामाज्ञामवलम्ब्यैव अयं ग्रन्थो मुद्राप्य प्रकाश्यते, तेषां श्रीकाञ्चीकामकोटिपीठमधिष्ठितवतां जगद्गुरूणां श्रीपरमाचार्याणां पादारविन्दयोः सभक्तिश्रद्धं सपादप्रणिपातं ग्रन्थमिमं समर्पये ।

ये तावत् दीनजनदैन्यनिरासार्थं सततमुद्युक्ताः, तदर्थं जनकल्याणायोगं स्थापितवन्तः, तेषां श्रीकाञ्चीकामकोटिपीठाधिपतीनां जगद्गुरूणां श्रीजयेन्द्रसरस्वतीश्रीपादानां चरणकमलयोः मदीयाः प्रणामपरम्पराः समर्पये ।

अनवरताद्वैतविद्याविनोदरसिकानां स्वतेजोविशेषेण जगदावर्जयतां श्रीकाञ्चीकामकोटिपीठाधिपानां जगद्गुरूणां श्रीशङ्करविजयेन्द्रसरस्वतीसंयमीन्द्राणां पादपङ्कजयोः मामिकाः नमस्कारततीः समर्पये ।

इमं ग्रन्थतल्लजं बहुकालं संरक्षितवतां अस्य ग्रन्थरत्नस्य मुद्रणे प्रभूतधनमुपकृतवतां उदारमनसां श्रीविनायकोपासकानां भारतसर्वकारस्य नीतिमार्गोपदेशकानां ब्रह्मश्रीसम्पन्नानां जि. रामस्वाम्यार्याणां श्रीपरमाचार्यानुग्रहमाशासे । एतद्ग्रन्थमुद्रापणाय बहुप्रयत्नमारचितवतां श्री एस्. राधाकृष्णार्याणां, श्रीशङ्करभक्तजनसभाकार्यदर्शिनां श्री जि. वैद्यनाथार्याणां च परमाचार्याणां निरवग्रहानुग्रहमाकाङ्क्षे ।

अस्य ग्रन्थस्य मूलकोशात् ग्रन्थाक्षररूपात् प्रतिलिपिं देवनागराक्षरैः सम्यक् सम्पाद्य उपकृतवते मीमांसाशिरोमणि-बिरुदभाजे चिरायुषे ए. जि. रामशर्मणे श्री सर्वेश्वरः सर्वं श्रेयः वितरतात् इति सर्वमङ्गलाजानिं प्रार्थये ।

मुद्रणसमये अक्षरपरिशोधनादिकं कृत्वा मह्यं महोप-कारं रचितवद्भ्यः साहित्यवेदान्तशिरोमणिबिरुदभूषितेभ्यः अस्मत्सुहृद्भ्यः श्री आर्. नटराजशर्मभ्यः परमाचार्याणां निर-वधिकमनुग्रहविशेषमाशासे ।

स्वकीये इळङ्गोमुद्रणालये सुकोमलैरक्षरैः इमं ग्रन्थं मुद्रितवतः श्री मणियवन् इति नाम्नः सर्वैश्वर्याभिवृद्धिं परमाचार्याः वितरन्तु इति तान् प्रार्थये ।

यद्यपि अस्य ग्रन्थस्य मुद्रणसमये मदीयबुद्धिविक्षेपात् प्रमादापतिता दोषा भवेयुः, तथापि तान् दोषान् दूरीकृत्य गुणैकपक्षपातिनो विद्वद्वरिष्ठाः गुणान् गृहीत्वा मदीयमुद्यमं सफलयन्तु, इति तान् प्रार्थये । आस्तिकाग्रेसरास्सर्वे इमं ग्रन्थं पठित्वा श्रीविनायकानुग्रहभाजो भवेयुः इति चाशासे ।

शुभं भूयात्

इत्थम्
विदुषामाश्रवः
कुन्नं. वे. विश्वनाथशर्मा
सम्पादकः

॥ श्रीः ॥

॥ ओं श्रीगणेशाय नमः ॥

# श्रीविनायकरहस्यम्

## ज्ञानामृतकाण्डम्—(पूर्वभागः)

### ज्ञानसारः—गणेशपूर्वहृदयम्

### प्रथमोऽध्यायः

स्वानन्देशं गणेशानं महावाक्यस्वरूपिणम् ।
तत्त्वमस्याकृतिधरं सिद्धिबुद्धियुतं भजे ॥ १ ॥

त्रय ऊचुः—

परब्रह्मगुरो हंस सर्वविद्याविशारद ।
ओंकारखण्डे प्रथमे ब्रह्मज्ञानसुखोदये ॥ २ ॥

चतस्रस्संहिता देव भवता परिकीर्तिताः ।
पञ्चमीं संहितामद्य वैष्णवीं ब्रूहि नो विभो ! ॥ ३ ॥

गणक उवाच—

पञ्चत्रिंशत्सुसाहस्रग्रन्थैश्चेयं समन्विता ।
अंशाश्चत्वार आख्याता अस्यान्तु प्रथमांशकः ॥ ४ ॥

विनायकरहस्यांशो गाणपत्यप्रभावकः ।
द्वितीयो भक्तमाहात्म्यसंज्ञिकस्तु तृतीयकः ॥ ५ ॥

व्रतमाहात्म्यसंज्ञस्तु चतुर्थश्चेति कथ्यते ।
चत्वारांशयुता चेयं संहिता वैष्णवी वरा ॥ ६ ॥

विष्णुना कथितत्वाच्च वैकुण्ठे तु पुरा सुरैः ।
प्रोक्ता विष्णुसंहितेति तामेवाद्य ब्रवीम्यहम् ॥ ७ ॥

भूवैकुण्ठे महापुण्ये क्षीरसागरमध्यगे ।
श्वेतद्वीपे सुखासीनं श्रीधरासहितं हरिम् ॥ ८ ॥

लोमशाद्या मुनीशाना नत्वा पप्रच्छुरादरात् ।

लोमशादयः—

एते दिव्यदेहयुता गजाननसमन्विताः ।
अस्मिन् लोके विशेषेण भवता चापि पूजिताः ॥ ९ ॥

तिष्ठन्तीच्छाविहाराढ्या नानाभोगसमन्विताः ।
एते के वै स्वरूपं चाप्येतेषां वद केशव! ॥ १० ॥

विष्णुः—

एते भक्ता गाणपताः पञ्चायतनपूजकाः ।
सारूप्यं गणनाथस्य भक्त्या प्राप्तास्सुयोगिनः ॥ ११ ॥

ब्रह्मादिलोकदेवानां सदनेषु यथेप्सितान् ।
भोगान्भुक्त्वात्र लोके हि तिष्ठन्ति समुपागताः ॥१२॥

भुक्त्वा भोगान् शम्भुशक्तिसूर्याणां सदनेषु च ।
स्थित्वा भुक्त्वा भोगवरान् तत्र तत्र समुद्भवान् ॥१३॥

संपूजिताश्शम्भुपूर्वैः भक्तिभावपुरस्सरम् ।
ततश्चिन्तामणिद्वीपं यास्यन्ति गणपाज्ञया ॥ १४ ॥

स्थित्वा तत्र महाकल्पं गुणेशेन परात्मना ।
स्वानन्दभवनं पश्चात् प्राप्नुयुर्प्रकृतेर्लये ॥ १५ ॥

अतो मया पार्षदैर्मे पूज्यते परमादरात् ।
वैभवो गाणपानान्तु ज्ञायते केन वा द्विजाः! ॥ १६ ॥

लोमशादयः—

एतादृशवैभवस्तु मानवैः प्राप्यते कथम् ।
यद्यस्ति चेदुपायस्तु तन्नस्त्वं ब्रूहि देशिक! ॥ १७ ॥
एतादृशानां भक्तानां चरित्रमपि नो वद ।

केशवः —

गाणेशेष्वपि सर्वेषु देवमर्त्यमुनिष्वपि ।
आद्यस्सिद्धो महायोगी गुणेशांशसमुद्भवः ॥ १८ ॥

पञ्चदेवादिदेवैश्च सिद्धैश्च मुद्गलादिभिः ।
भृग्वादिमुनिभिश्चैव पूजितोऽयं गुरोर्गुरुः ॥ १९ ॥

आद्यश्श्रेष्ठो गाणपतो गणकोऽयं महान् गुरुः ।
गाणेशज्ञानसिद्ध्यर्थं ब्रह्मज्ञानसुखोदयम् ॥ २० ॥

ब्रह्मविष्णुमहेशेभ्यः कल्पादौ समुपादिशत् ।
अन्यस्मिन्नपि काले तु तन्त्रं गाणपतं वरम् ॥ २१ ॥

चतुर्भेदयुतं कृत्वा शिवादिभ्यः क्रमाद्ददौ ।
वैदिकं मिश्रतन्त्रञ्च पाषण्डं शुद्धतन्त्रकम् ।। २२ ।।

चतुर्भेदयुतं चैव तन्त्रं गाणपतं स्मृतम् ।
अन्यस्मिन्नपि काले वै महावाक्यप्रदर्शनम् ।। २३ ।।

कृत्वाऽद्वैतमार्गमेव स्थापयामास विष्टपे ।
पुनश्चायं द्वापरान्ते सन्ध्याकाले समागते ।। २४ ।।

विनायकरहस्यन्तु ब्रह्मज्ञानसुखोदये ।
कथितन्तु समुद्धृत्य तपोलोकान्महीतले ।। २५ ।।

जातेभ्यो गृत्समादिभ्यो ददौ लोकगुरुर्महान् ।
शिवमुद्गलभृग्वाद्याश्शिष्यास्सत्यं गुरोर्गुरोः ।। २६ ।।

लीलाश्च गणकस्यैव प्रबन्धान् तत्कृतानपि ।
शक्यते केन वा वक्तुं गणको गाणपोत्तमः ।। २७ ।।

भुसुण्डिमुद्गलाद्याश्च गाणेशास्सन्ति विष्टपे ।
एतेषां वैभवं वक्तुं नाहमीशो द्विजोत्तमाः! ।। २८ ।।

लोमशादयः—

गणकेन द्वापरान्ते विनायकरहस्यकः ।
अंशस्तु केवलः प्रोक्तस्तपोलोकाद्धरातलम् ।। २९ ।।

आगतेभ्यश्चेति हरे! भवता परिकीर्तितम् ।
अतोऽस्माकं वासुदेव! कृपया ज्ञानसिद्धये ।। ३० ।।

विनायकरहस्यांशं प्रथमं ब्रूहि केशव! ।
भक्तानां वैभवं पश्चात् कृपया वक्तुमर्हसि ।। ३१ ।।

विष्णुः—

गुणेशांशसमुद्भूतो गणको ब्रह्मवित्तमः ।
परं ब्रह्म गुरुश्चेति कथ्यते मन्त्रदृष्टिभिः ॥ ३२ ॥

चत्वारो गुरवस्तस्य शिष्या वेदप्रविश्रुताः ।
ब्रह्मविष्ण्वीशसूर्यांशसंभवास्ते तपोधनाः ॥ ३३ ॥

गुरुः परमगुरुश्च परात्परगुरुस्तथा ।
परमेष्ठिगुरुश्चेति शिष्यास्ते गणकस्य वै ॥ ३४ ॥

एतानेव पुरस्कृत्य गृत्समप्रमुखान् मुनीन् ।
वेदे मन्त्रादिभागानां दर्शनार्थं धरातलम् ॥ ३५ ॥

आगतान् प्रावदद्योगी विनायकरहस्यकम् ।
तदेवाद्य प्रवक्ष्यामि यूयं शृणुत सादरम् ॥ ३६ ॥

विनायकरहस्यांशः पञ्चकाण्डसमन्वितः ।
अष्टादशसुसाहस्रग्रन्थैश्च परिशोभितः ॥ ३७ ॥

ज्ञानामृतन्तु प्रथमं ज्ञानानन्दं द्वितीयकम् ।
लीलासारं तृतीयं स्याद्बीजागममतः परम् ॥ ३८ ॥

योगानन्दं पञ्चमं स्यात् पञ्चकाण्डसमन्वितः ।
विनायकरहस्यांशो ब्रह्मज्ञानप्रदायकः ।
तत्राहं प्रथमं काण्डं ज्ञानामृतमुदीरये ॥ ३९ ॥

गुरवः—

विनायकरहस्येऽस्मिन् काण्डं ज्ञानामृतं वरम् ।
कृपया ब्रूहि गणक! ह्येतेषां तु हिताय वै ॥ ४० ॥

गणकः—

कैलासशिखरे रम्ये सुखासीनं सदाशिवम् ।
षडाननो महासेनो नत्वा पप्रच्छ सादरम् ।। ४१ ।।

षण्मुखः—

गणकस्य मुखाम्भोजाद्ब्रह्मज्ञानसुखोदयम् ।
विष्णुब्रह्मादिभिस्सार्द्धं कल्पादौ भवता श्रुतम् ।
सङ्ग्रहं तस्य मे ब्रूहि कृपया परमेश्वर ।। ४२ ।।

शिव उवाच—

विनायकरहस्यांशो ब्रह्मज्ञानसुखोदये ।
तस्यैव सङ्ग्रहः प्रोक्तो गणेशज्ञानदायकः ।। ४३ ।।

पञ्चकाण्डयुतश्चायं ब्रह्मज्ञानप्रदायकः ।
गणेशदीक्षायुक्तेभ्यः काण्डानाञ्च चतुष्टयम् ।। ४४ ।।

दीक्षया रहितेभ्योऽपि प्रथमं परिकीर्तितम् ।
ज्ञानामृतं तत् प्रथमं ब्रुवे त्वं शृणु सादरम् ।। ४५ ।।
अस्यैव प्रथमो भागो ज्ञानसार इति स्मृतः ।
उत्तरो योगसारस्स्यात् प्रथमं शृणु पुत्रक! ।। ४६ ।।

शिव उवाच—

मणिद्वीपे सुधासिन्धौ चिन्तारत्नविनिर्मिते ।
मध्ये श्रीचक्रराजस्य बिन्दुपीठे सुशोभिते ।। ४७ ।।

वामाङ्के कामराजस्य सन्निषण्णां पराम्बिकाम् ।
नमस्कृत्वाथ पप्रच्छुः कामेशीं ललितां पराम् ।
हयाननादयश्शाक्ता मन्त्रिणीप्रमुखा गणाः ।। ४८ ।।

हयग्रीवादयः—

ब्रह्मविष्णुमहेशेभ्य श्रेष्ठा त्वं भुवनेश्वरि ! ।
भण्डासुरवधे पूर्वं गणेशो वल्लभापतिः ।। ४९ ।।
संपूजितस्त्वया ध्यात्वा सिद्धये प्रार्थितोऽपि च ।
अतस्त्वत्तो वरश्चायं ब्रह्मेति भाति नशिशवे! ।। ५० ।।
अतस्तस्य स्वरूपं त्वं ब्रूहि शास्त्रसुनिश्चितम् ।

ललितोवाच—

तत्स्वरूपज्ञानसिद्ध्यै ज्ञानसारप्रबन्धकः ।
उद्दालकादियोगिभ्यो ब्रह्मणा परिकीर्तितः ।। ५१ ।।
तदेवाद्य प्रवक्ष्यामि यूयं शृणुत श्रद्धया ।

उद्दालकादयः—

पितामह ! जगन्नाथ ! गाणेशज्ञानसिद्धये ।
ब्रूहि नो ज्ञानसारं त्वं कृपया भारतीपते ! ।। ५२ ।।

ब्रह्मा—

शतोपनिषदां सारो ज्ञानसारप्रबन्धकः ।
ज्ञानसारोपनिषदि शतोपनिषदस्स्मृताः ।। ५६ ।।
तासामर्थसुसिद्धान्तमयोऽयं ज्ञानसारकः ।
हृदयत्रयसंयुक्तो गाणेशज्ञानदायकः ।। ५४ ।।
गणेशपूर्वहृदयमुत्तरञ्च ततः परम् ।
सिद्धिबुद्ध्योश्च हृदयं तृतीयं चेति कथ्यते ।। ५५ ।।
हृदयं प्रथमं प्रोक्तं दक्षिणामूर्तिरूपिणा ।
महेशेन तदद्याहं वक्ष्ये शृणुत सादरम् ।। ५६ ।।

कैलासशिखरे रम्ये नानागणनिषेविते ।
वटमूले सन्निषण्णं दक्षिणामूर्तिमीश्वरम् ।। ५७ ।।

नत्वा स्तुत्वा रुद्रमन्त्रैरथर्वशीर्षपूर्वगैः ।
अपृच्छन् सनकाद्याश्च नारदाद्याश्शुकादयः ।। ५८ ।।

सनकाद्याः—

ब्रह्मस्वरूपं नो ब्रूहि सम्भूतिं जगतामपि ।
देवेषु तारतम्यञ्च महादेव! जगत्पते! ।। ५९ ।।

नत्वा विनायकं भक्त्या महालक्ष्मीं सरस्वतीम् ।
चिन्तामणिद्वीपसंस्थान् प्रावदत् परमेश्वरः ।। ६० ।।

इति श्रीविनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे
ज्ञानसारे गणेशपूर्वहृदये प्रथमोऽध्यायः

———

## द्वितीयोऽध्यायः

### त्रिविधब्रह्मस्वरूपनिरूपणम्

शिव उवाच—

सत्यं ज्ञानमनन्तं तद् ब्रह्म प्रोक्तं गुहाहितम् ।
समाधिना योगिवरा गच्छन्ति यत्र गस्स्मृतः ।। १ ।।

बिम्बप्रतिबिम्बतया निर्गुणात् परमात्मनः ।
नरात्मकं जगद्यस्माज्जायतेति स जस्स्मृतः ।। २ ।।

गश्चासौ जश्च योगीन्द्रैर्गजेति परिकीर्तितः ।
अत एव निर्गुणस्य गजनामप्रकल्पितम् ।। ३ ।।

शब्दार्थसत्तया वेदे तापिन्यां ब्रह्मणस्पतेः ।
तद् ब्रह्मेति च तत्प्रोक्तं निर्गुणं गजवाचकम् ।। ४ ।।

स्वतो व्युत्थानभावेन जाता प्रकृतिरव्यया ।
ओङ्काररूपिणी शक्तिः गुणत्रयविराजिता ।। ५ ।।

तद्युक्तं ब्रह्मपरमं बिन्दुगं सगुणं स्मृतम् ।
ओमित्येकाक्षरं चेति तापिनीश्रुतिकीर्तितम् ।। ६ ।।

इदमोङ्कारब्रह्मैव चिन्मायायोगरूपकम् ।
जगद्रूपमिति प्रोक्तं जगत् पादसमन्वितम् ।। ७ ।।

अव्याकृताद्याश्चत्वारः पादास्स्युः प्रणवात्मनः ।
विद्याविद्योपाधियुतं ताभ्यामपि विहीनकम् ।। ८ ।।

स्वानन्दं ब्रह्म परमम् असिसत्पदसंज्ञिकम् ।
भावद्वयसंयुतत्वात् प्रोक्तं सकलनिष्कलम् ।। ९ ।।

भावद्वयविहीनत्वात् स्वस्वरूपमिति स्मृतम् ।
ऐक्यत्वाद् गजनरयोर्निर्गुणस्य गुणस्य च ।। १० ।।

गजानन इति प्रोक्तमसिरूपं सदात्मकम् ।
उत्तमं निर्गुणं ब्रह्म चिद्रूपं गजवाचकम् ।। ११ ।।

उत्तमाङ्गमिति प्रोक्तमसिरूपं परात्मनः ।
नरात्मकन्तु सगुणमधमाङ्गमतस्स्मृतम् ।। १२ ।।

अभेदसंयोगभावे गुणस्य निर्गुणस्य च ।
गजाननः परं ब्रह्म स्वानन्दसंज्ञिकं स्मृतम् ।। १३ ।।

अप्राप्यं चेति श्रुत्येदं तापिन्यां परिकीर्तितम् ।
त्वंपदं सगुणं ब्रह्म तत्पदं निर्गुणं स्मृतम् ।। १४ ।।

असिरूपं स्वसंवेद्यं महावाक्यस्वरूपकम् ।
पूर्णोङ्कारमयं ब्रह्म सगुणं बिन्दुरूपकम् ।। १५ ।।

तत्पदं निर्गुणं ब्रह्म सत्पदमसिरूपकम् ।
तत्त्वं पदैक्यरूपाढ्यं साक्षादसिपदात्मकम् ।। १६ ।।

तत्त्वमस्यात्मकं ब्रह्म स्वस्वरूपात्कं परम् ।
अयमात्मा स्वयं ज्योतिस्सदेवेति श्रुतौ स्मृतः ।। १७ ।।

जीवात्मपरमात्माऽसौ साक्षादात्मा गजाननः ।
गणेशाख्यं परं ब्रह्म प्रोक्तमेवं त्रिधा श्रुतौ ।। १८ ।।

तापिन्यामुत्तरायां वै ओंतत्सदिति भेदतः ।
गाणेशाख्यं परं ब्रह्म वर्णितं त्रिविधं क्रमात् ।। १९ ।।

तत्त्वमस्यात्मकं चैतदथर्वशीर्षके वरे ।
वेदेन संस्तुतोऽयन्तु गणपत्यादिनामभिः ।। २० ।।

सूक्तेषु संस्तुतोऽयन्तु ब्रह्मणस्पतिपूर्वकैः ।
तथैव परवेदेषु ब्राह्मणस्पत्यकेषु च ।। २१ ।।

ब्रह्मणस्पतिपूर्वाद्यैः नामभिः परिकीर्तितः ।
एवं गाणपतं ब्रह्म सत्यज्ञानमनन्तकम् ।। २२ ।।

गुहाहितं त्रिधा प्रोक्तं गुहा बुद्धिरिति स्मृता ।
तदुद्योगकरी सिद्धिस्ताभ्यां युक्तो गणेश्वरः ।। २३ ।।
स्वसंवेद्यं परं ब्रह्म महावाक्यस्वरूपकम् ।। २४ ।।

गुणनिर्गुणभावाभ्यां विहारकारकं स्मृतम् ।
हृदि बुद्धिगतत्वाच्च महावाक्यमयो विभुः ।। १५ ।।

निरोधचित्तभूम्यान्तु ध्यातुं द्रष्टुञ्च शक्यते ।
सोपाधिकेषु श्रेष्ठस्स्यात् पूर्णप्रणवरूपवान् ॥ २६ ॥
गुणनिर्गुणमूर्तित्वात् महावाक्यस्वरूपवान् ।
प्रकृतेः पुरुषाच्चापि वरः प्रोक्तश्श्रुतिष्वपि ॥ २७ ॥
सगुणं निर्गुणं तस्मिन् दृश्येते गणनायके ।
सोपाधिनिरुपाधिभ्यां मायाभ्यां संयुतो विभुः ॥ २८ ॥
हृदि बुद्ध्यां तथा बाह्ये द्रष्टुं शक्यो न संशयः ।
सोपाधिमायायुक्तत्वाद्भवेच्च मूर्तिधारकः ॥ २९ ॥
अनुग्रहार्थं भक्तानां दुष्टानां निधनाय च ।
सिद्धिबुद्धीपतिरयं भवेच्च मूर्तिधारकः ॥ ३० ॥
एवं ब्रह्मस्वरूपन्तु त्रिधा वेदे प्रकीर्तितम् ।

इति त्रिविधब्रह्मस्वरूपनिरूपणम्

## अविद्यासृष्टिनिरूपणम्

शिवः—

मूलप्रकृतिरव्यक्ता बिन्दुमाया सनातनी ।
गुणत्रयशान्तिमयी संस्थिता निरुपाधिका ॥ ३१ ॥
अधिष्टानं समाश्रित्य गुणभावविवर्जिता ।
अस्या योगयुतं ब्रह्म बिन्दुकं सगुणात्मकम् ॥ ३२ ॥
वेदान्तेषु च तत्प्रोक्तं चिन्मायायोगरूपकम् ।
पूर्णोङ्कारस्वरूपत्वे पुरायं परिकीर्तितः ॥ ३३ ॥
अस्यैव महिमा वेदे पञ्चमस्थितिरुच्यते ।
सृष्टेः पूर्वं व्याकृतानां जगतां गणनायकः ॥ ३४ ॥

चक्रे शब्दं बिन्दुगोऽयम् अमात्रप्रणवात्मकः ।
तस्य ध्वनिस्वरूपेयं शुद्धसत्वमयी वरा ।। ३५ ।।

महामायागतं तत्तु बिम्बं तस्य परात्मनः ।
गुणेशश्चेति कथिता वेदवेदान्तपारगैः ।। ३६ ।।

ओमिति ध्वनिरभवद् गजाकारो गुणेश्वरः ।
तस्मादविद्या सञ्जाता सत्वमालिन्यसंयुता ।। ३७ ।।

एतद्गतं ब्रह्मबिम्बं क्षेत्रज्ञ इति कथ्यते ।
तमःप्रधानमव्यक्तं ततो भिन्नं बभूव च ।। ३८ ।।

अव्याकृतो गुणेशानश्शुद्धसत्वमयीं गतः ।
'विश्वतश्चक्षुरि'त्यादिश्रुतिभिस्सुनिरूपितः ।। ३९ ।।

'स विश्वकृदि'त्यादिवेदवाक्यैरपि स्तुतः ।
तुरीयोऽयं गुणेशानो व्याकृतानाञ्च कारणम् ।। ४० ।।

असङ्ख्यवक्त्रनयनोऽसंख्याङ्घ्रिकरश्रुतिः ।
उदरे रोमकूपेषु कोटिब्रह्माण्डसंयुतः ।। ४१ ।।

विश्वमूर्तिरयं वेदे गजाकार इति श्रुतः ।
एकैकाण्डधरोऽयन्तु व्यष्टिभावधरो मतः ।। ४२ ।।

मध्ये नारायणमुखो दक्षिणे च शिवाननः ।
वामे ब्रह्ममुखोऽनन्ते पद्मासनगतो नरः ।। ४३ ।।

गजाकार इति प्रोक्तस्समष्टिभावधारकः ।
नराकार इति च प्रोक्तो व्यष्टिभावधरो ह्ययम् ।।४४।।

द्विभावयोरभेदे वै प्रोक्तोऽयन्तु गजाननः ।
एवं तुरीयं ब्रह्मापि भावत्रययुतं मतम् ।। ४५ ।।

त्रिविधं गाणपं ब्रह्म पूर्वमेव प्रकीर्तितम् ।
चतुर्विधानां जगतां तदेव कारणं स्मृतम् ।। ४६ ।।
इदं तुरीयं ब्रह्मैव कार्यब्रह्मेति कीर्तितम् ।
गणेशस्य कार्यमूर्तिं प्राहुरेनन्तु गाणपाः ।। ४७ ।।
ईश्वराणामीश्वरोऽयं तुरीयो गुणनामकः ।
पञ्चविंशाख्यपुरुषो गुणेशस्तुर्यधारकः ।। ४८ ।।
स ईक्षत गणेशानस्सिद्धिबुद्धिसमन्वितः ।
मायां विशुद्धसत्वाख्यां तुरीयब्रह्मरूपिणीम् ।। ४९ ।।
गुणेशाच्च समुद्भूता व्याकृता भिन्नदेहिनः ।
ईश्वराः पञ्चदेवास्ते केशशक्तिदिनेश्वराः ।। ५० ।।
अविद्यायां समुत्पन्ना बहवो जीवकोटयः ।
आकाशादीनि जातानि तामस्यां ब्रह्मवीक्षणात् ।।५१।।
चराचरमिदं सर्वं पञ्चदेवात्मकं मतम् ।
जाग्रद्विश्वमिदं सर्वं सृज्यते पद्मयोनिना ।। ५२ ।।
पाल्यते वासुदेवेन ह्रियते शङ्करेण च ।
संसारे मुह्यते शक्त्या भास्करेण महात्मना ।। ५३ ।।
अभिमानधारकं च भवत्येव मुनीश्वराः! ।
तदीक्षणेन सञ्जातमिदमेतादृशं महत् ।। ५४ ।।

इत्यविद्यासृष्टिनिरूपणम्

## विद्यासृष्टिनिरूपणम्

शिवः—

विद्यासृष्टिं प्रवक्ष्यामि यूयं शृणुत सादरम् ।
ओंकारध्वनिरूपोऽयं तुरीयोऽयं गुणेश्वरः ।। ५५ ।।

"अस्य महतो भूतस्य निश्वसितमि'ति श्रुतेः ।
बुद्धया नादस्वरूपिण्या सृष्टा वेदादयः क्रमात् ॥५६॥

ओङ्काररूपबुद्धयान्तु गायत्री समजायत ।
अङ्गानि वेदाश्चत्वारो गायत्रीप्रभवा मताः ॥ ५७ ॥

इतिहासपुराणानि तन्त्राणि विविधानि च ।
स्मृतयो न्यायविस्तारो मीमांसा द्विविधापि च ॥ ५८ ॥

योगशास्त्रञ्च जातानि क्रमेण वेदसञ्चयात् ।
ऋग्वेदोऽथ यजुर्वेदस्सामवेदोऽप्यथर्वणः ॥ ५९ ॥

परापरप्रभेदाढ्या इति वेदविदो विदुः ।
उपनिषदो विख्याताः परविद्या इति स्फुटम् ॥ ६० ॥

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ ६१ ॥

आयुर्वेदो धनुर्वेदो गान्धर्वो वेदसंज्ञकः ।
अर्थवेदो महाभागा! विद्या ह्यष्टादश स्मृताः ॥ ६२ ॥

शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा ।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥ ६३ ॥

द्विजाः! सहस्रशाखाभिस्सामवेदस्समन्वितः ।
नवोत्तरशताभिस्तु यजुर्वेदस्समन्वितः ॥ ६४ ॥

एकविंशतिशाखाभिः ऋग्वेदस्संयुतस्स्मृतः ।
अथर्वणस्तुरीयस्तु पञ्चाशद्भिस्समन्वितः ॥ ६५ ॥

मन्त्रब्राह्मणभेदेनापरवेदा द्विधास्स्मृताः ।
उपनिषदो वेदेषु श्रेष्ठास्सुवररूपकाः ॥ ६६ ॥

एकैकायास्तु शाखाया एकैकोपनिषन्मता ।
अशीतिशतसाहस्रसंख्याकानां क्रमेण च ।। ६७ ।।

उपनिषदां नामानि ज्ञानोपनिषदि द्विजाः! ।
कथितानि मुनीन्द्रेण गणकेन महात्मना ।। ६८ ।।

चतुर्विंशत्युत्तरत्रिशतोपनिषदामपि ।
नामानि कथितान्येव योगोपनिषदि क्रमात् ।। ६९ ।।

अष्टोत्तरशतं चासु ज्ञानसारे प्रकीर्तितम् ।
गणेशं निर्गुणं प्राहुरिति गाणकसम्मतम् ।। ७० ।।

परशौ च तथा प्रोक्तं गणेशं सगुणं विभुम् ।
वदन्तीति वरेण्यस्या तं चेति कथितं योगिसत्तमाः ।।

मौद्गलेऽपि तथा प्रोक्तं पूर्णयोगसुसिद्धये ।
सिद्धिबुद्धित्यागमार्गः कथितस्त्वाच्च सत्तमाः! ।। ७२ ।।

सिद्धिबुद्धी वदन्तीति प्राहुरेव द्विजोत्तमाः! ।
सूर्येण कीर्तितास्सूर्यं पराशक्त्या प्रकीर्तिताः ।। ७३ ।।

शक्तिं शिवेन कथिताश्शिवं विष्णुप्रकीर्तिताः ।
विष्णुञ्चेति वदन्त्येव सर्वास्त्रिशतगा मताः ।। ७४ ।।

अन्या ब्रह्ममुखान् देवान् साङ्ख्यं योगं च कर्म वै ।
नित्यं नैमित्तिकं काम्यं नानारूपप्रबोधकम् ।। ७५ ।।

द्विजानां वैभवं पुण्यपापानाममलेक्षणम् ।
ब्रह्माण्डलक्षणं चापि स्वर्गानामपि लक्षणम् ।। ७६ ।।

नरकानां स्वरूपञ्च निजलोकस्वरूपकम् ।
पञ्चायतनदेवानां लोकस्थितिस्वरूपकम् ।। ७७ ।।

इष्टीनामपि यज्ञानां स्वरूपमपि कीर्तितम् ।
अन्यासूपनिषत्स्वेव कर्मातिबोधकासु च ।। ७८ ।।

ऋग्वेदस्य विधिर्देवो यजुषो विष्णुरुच्यते ।
सामवेदस्य रुद्रोऽहं तुरीयस्य सुरा स्मृताः ।। ७९ ।।

रामायणं भारतञ्च ब्रह्मज्ञानसुखोदयम् ।
तथा शिवरहस्यञ्च ब्रह्मविद्यारहस्यकम् ।। ८० ।।

पञ्चेतिहासाः कथिताः आख्यानपञ्चकात्मकाः ।
भारताख्यानकर्तायं व्यासस्स्याद् बादरायणः ।। ८१ ।।

रामायणस्य वाल्मीकिर्गणको ब्रह्मवित्तमः ।
सुखोदयस्य कर्तेति कथ्यते वेदपारगैः ।। ८२ ।।

हयग्रीवजैगिषव्यौ शिवाशिवरहस्ययोः ।
तथा विद्यारहस्यस्य योगिनस्सनकादयः ।। ८३ ।।

नरनारायणौ देवौ भारताख्यानकस्य च ।
रामायणस्य विष्णुस्तु शिवौ शिवरहस्य च ।। ८४ ।।

सुखोदयस्य देवोऽयं महावाक्यगणेश्वरः ।
विद्यारहस्यदेवास्ते सिद्धिबुद्धिदिनेश्वराः ।। ८५ ।।

पुराणमेकमेवासीच्छतकोटिप्रविस्तरम् ।
पुराणसंहिता विप्राः! द्विधा चेति च कीर्तिता ।। ८६ ।।

परापरप्रभेदेन परा तु कल्पसंज्ञिका ।
अपरा मनुसंज्ञाढ्या मुख्या चेति प्रकीर्तिता ।। ८७ ।।

अष्टादश महाशाखा राजिता संहिता वरा ।
गाणेशं भुवनेशीयं साम्बं शैवञ्च मानवम् ।। ८८ ।।

दौर्वाससं याज्ञवल्क्यं मारीचं कापिलं तथा ।
सानत्कुमारं वासिष्ठं नारदीयञ्च वारुणम् ॥ ८९ ॥
आङ्गीरसं च नन्दीशं नारसिंहमतःपरम् ।
आदित्यं मौद्गलं चैव पुराणानामनुक्रमः ॥ ९० ॥
पुराणे परसंहिता शाखारूपाणि योगिनः! ।
एतत्कल्पपुराणानि कल्पेकल्पे भवानि च ॥ ९१ ॥
कल्पादौ पद्मजस्यैव शासनाद् भृगुपूर्वगैः ।
वेदशाखा दृष्टवच्च कृतानि पद्यरूपतः ॥ ९२ ॥
मन्वन्तरभवैर्व्यासैः संशोद्धच च खिलान्यपि ।
कृत्वा च पूर्ववत् सर्वं स्थाप्यन्ते च धरातले ॥ ९३ ॥
ब्राह्मं पाद्मं भागवतं वायव्यं वैष्णवं तथा ।
भविष्यं नारदीयञ्च मार्कण्डेयमतःपरम् ॥ ९४ ॥
आग्नेयं ब्रह्मवैवर्तं लैङ्गं वाराहमेव च ।
स्कान्दं मात्स्यञ्च कौर्मञ्च गारुडं वामनं तथा ॥९५॥
ब्रह्माण्डञ्चेति पुण्योऽयं पुराणानामनुक्रमः ।
एतन्मनुपुराणानि मन्वन्तरभवानि च ॥ ९६ ॥
तथापरसंहितेति शाखारूपाणि सत्तमाः! ।
परविद्यामया वेदा वेदेषु च वरा मताः ॥ ९७ ॥
तथाप्यपरवेदाश्च नृणां मुख्याः प्रकीर्तिताः ।
अपराणाञ्च वेदानां वेदनाम प्रविश्रुतम् ॥ ९८ ॥
तद्वच्चापरसंहिता पुराणानि महान्ति च ।
मुख्यानीति कीर्तितानि व्यासादिमुनिसत्तमैः ॥ ९९ ॥

अङ्गान्यपि च वेदानां मुख्यकल्पप्रभेदतः ।
संहिताद्वययुक्तानि नवशाखामयानि च ।। १०० ।।
एवं वै पूर्वमीमांसा संहिता नवधा स्मृता ।
तथैवोत्तरमीमांसा षण्महादर्शनान्विता ।। १०१ ।।
षड्विधं तर्कशास्त्रं तु संहिताभेदतस्स्मृतम् ।
उपवेदश्च चत्वारस्संहिताद्वयसंयुताः ।। १०२ ।।
नवशाखायुताः प्रोक्ता मुख्यकल्पप्रभेदकाः ।
एवमेव धर्मशास्त्रं संहिताद्वयसंयुतम् ।। १०३ ।।
पृथगष्टादशशाख्या महान्तः परिकीर्तिताः ।
मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।। १०४ ।।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ।
संवर्तोशनसौ शङ्खलिखितावत्रिरेव च ।। १०५ ।।
विष्ण्वापस्तम्भहारीता धर्मशास्त्रप्रवर्तकाः ।
जाबालिर्नाचिकेतश्च स्कन्दो लोकाक्षिकाश्यपौ ।।१०६।।
व्यासस्सनत्कुमारश्च शन्तनुर्जनकस्तथा ।
व्याघ्रः कात्यायनश्चैव जातुकर्णकपिञ्जलः ।। १०७ ।।
बोधायनश्च काणादो विश्वामित्रस्तथैव च ।
पैठीनसिर्गोबिलश्चेत्युपस्मृतिविधायकाः ।। १०८ ।।
भेदद्वयेन तत्प्रोक्तं तन्त्रं वैनायकं शुभम् ।
तथैव वैष्णवं प्रोक्तं शाक्तं तु बहुभेदकम् ।। १०९ ।।
सौरं ब्राह्मश्च कौमारमेकरूपविराजितम् ।
अष्टाविंशतिभेदेन शैवं प्रोक्तं मनीषिभिः ।। ११० ।।

सांख्यकर्ता तु कपिलो योगकर्ता पतञ्जलिः ।
याज्ञवल्क्यमुद्गलाद्यैः कृतं योगप्रबोधकम् ।। १११ ।।

षड्दर्शनगतान्येव ज्ञानयोगमयानि च ।
पातञ्जलं योगशास्त्रं मीमांसान्तर्गतं न च ।। ११२ ।।

सांख्यं पातञ्जलं चापि तन्त्रशास्त्रवदीरिते ।
अष्टादशमहाविद्याबहिर्भूते न संशयः ।। ११३ ।।

चतुर्दशमहाविद्या कथिता मुनिसत्तमैः ।
वेदेष्वन्तर्गता प्रोक्ता उपवेदा तथा द्विजाः! ।। ११४ ।।

योगागमेभ्यः संप्रोक्ता विद्याष्षोडशसंज्ञकाः ।
वैनायकन्तु प्रणवाद्यजुर्वेदाच्च वैष्णवम् ।। ११५ ।।

साम्नः पाशुपतं सौरं ऋचश्शाक्तमथर्वणात् ।
सावित्र्याश्चैव स्मार्तन्तु जातान्येव मतानि हि ।।११६।।

वैनायकस्य देवोऽयं महावाक्यगणेश्वरः ।
वैष्णवस्य वासुदेवश्शैवस्य तु परशिवः ।। ११७ ।।

सौरस्य पुरुषो देवो रविमण्डलमध्यगः ।
शाक्तस्य परमा शक्तिस्स्मार्तस्य पञ्चदेवताः ।। ११८ ।।

वैनायकस्य गुरवो ब्रह्मविष्णुमहेश्वराः ।
आदिशक्तिर्दिनेशानो गणकाख्यगुणेश्वरः ।। ११९ ।।

प्रजापतिस्तु सौरस्य शाक्तस्य सुरनायकः ।
शैवस्य तु महासेनो वैष्णवस्य फणीश्वरः ।। १२० ।।

स्मार्तस्य गुरवः प्रोक्ता ब्रह्माद्या लोकदेवताः ।
वैनायकस्य कपिलो गृत्समः कश्यपस्तथा ।। १२१ ।।

दत्तात्रेयश्शुको व्यासो भृसुंढी मुद्गलो भृगुः ।
मरीचिश्चापि गार्ग्यश्च मुनयो विश्रुताश्श्रुतौ ॥ १२२ ॥

दधीचिर्गौतमः कण्वो दूर्वासाः कुम्भसम्भवः ।
शैवस्य मुनयः प्रोक्ता वैष्णवस्य पराशरः ॥ १२३ ॥

याज्ञवल्क्यस्तु सौरस्य शाक्तस्यैव हयाननः ।
स्मार्तस्य मुनयः प्रोक्ता मनुव्यासपुरोगमाः ॥ १२४ ॥

ऊर्ध्वपुण्ड्रं वैष्णवस्य त्रिपुण्ड्रं शैवशाक्तयोः ।
वर्तुलं चार्द्धपुण्ड्रं वा सौरस्य परिकीर्तितम् ॥ १२५ ॥

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चार्द्धपुण्ड्रं तु वर्तुलम् ।
कुलक्रमागतं पुण्ड्रं स्मार्तस्य परिकीर्तितम् ॥ १२६ ॥

एवं गाणपतस्यापि पुण्ड्रं भद्रमुदीरितम् ।
गणेशस्यैव वेदेषु सुगन्धतिलकं स्मृतम् ॥ १२७ ॥

सुगन्धरूपिणी सिद्धिर्वर्तुली बुद्धिरुच्यते ।
बिन्दुपुण्ड्रन्तु तिलकं गणेशस्य प्रियंकरम् ॥ १२८ ॥

पूर्वाचरितपुण्ड्रेण तिलकं परिकीर्तितम् ।
सृष्टिकर्त्र्यौ सिद्धिबुद्धी साक्षिभूतो गजाननः ॥ १२९ ॥

इति विद्यासृष्टिनिरूपणम्

## मण्डलमध्यस्थपुरुषस्वरूपनिरूपणम्

सनकादयः —

सावित्रीं वेदजननीं सौरमण्डलवासिनीम् ।
ब्रह्मतेजःप्रदात्रीं तां गणेशमहिषीमिति ॥ १३० ॥

वदन्ति वेदतत्त्वज्ञा वसिष्ठाद्या मुनीश्वराः ।
सिद्धिबुद्धी गणेशस्य शक्तीति वदसि प्रभो! ।
अनेन संशयो जातस्तन्नुद त्वं शिवापते! ।। १३१ ।।

शिव उवाच —

स्वानन्देशो गणेशानो महावाक्यार्थरूपवान् ।
गङ्कारस्तस्य बीजस्स्यादेकाक्षर इति स्मृतः ।। १३२ ।।

गुणनिर्गुणरूपस्तु प्रणवो वेदकीर्तितः ।
सगुणो बिन्दुरूपस्स्यान्निर्गुणश्शून्य उच्यते ।। १३३ ।।

सगुणे निर्गुणे चापि स्वानन्देशो विहारकः ।
अत एकाक्षरस्यैव प्रणवश्शक्तिरुच्यते ।। १३४ ।।

बिन्दुरूपगणेशानस्सगुणप्रणवात्मकः ।
चतुर्विधमिदं विश्वं तस्य देह उदीरितः ।। १३५ ।।

अकारोकारमकारनादरूपधरः प्रभुः ।
प्रणवो विश्वरूपी स्यात् तेनायं पञ्चमो विभुः ।।१३६।।

प्रणवात्मक इत्येव कथ्यते वेदपारगैः ।
गायत्री वेदमाता स्यात् पिता प्रणव उच्यते ।। १३७।।

एवं वेदेषु प्रोक्तत्वाद् ब्रह्मणो ब्रह्मणस्पतेः ।
गणेशस्य वेदमाता शक्तिरित्यभिधीयते ।। १३८ ।।

अयं बुद्धिपतिः प्रोक्तो गुहा बुद्धिरिति स्मृता ।
बुद्धेर्नियामकश्चायं बुद्धीशो गणनायकः ।। १३९ ।।

आत्मानं बुद्धिगं माता स्वयं ज्योतिस्स्वरूपिणम् ।
सद्वृत्तौ प्रेरणार्थञ्च बुद्धेस्तु भर्गरूपिणम् ।। १४० ।।

वेदैस्सह वेदमाता ध्याति स्वात्मनि तं विभुम् ।
गायत्रीमन्त्रशब्दार्थगम्योऽयं गणनायकः ।। १४१ ।।
गायत्र्या प्रतिपाद्योऽयं गायत्रीपतिरुच्यते ।
ओङ्काररूपी भगवान् गणेशो ब्रह्मणस्पतिः ।। १४२ ।।
चतुर्विधजगद्देहयुतो विश्वविहारकः ।
गायत्रीमन्त्रशब्दार्थगम्यत्वान्मुनिसत्तमैः ।। १४३ ।।
वेदमातुश्च गायत्र्या नायकश्चेति कथ्यते ।
स्वानन्दभवनं चास्य महिमा चेति कथ्यते ।
सिद्धिबुद्धिपतिश्चायं खेलकस्तत्र तिष्ठति ।। १४४ ।।
महाकैलासभवनं ब्रह्माण्डस्य शिरस्पृहम् ।
स्वानन्दभवनं तत्तु कैलासादुपरि स्थितम् ।। १४५ ।।
मायाव्यक्तमहच्चाहङ्कारा वेदेषु सत्तमाः ।
अन्तःकरणरूपास्स्युस्समष्टयां तद्गतं परम् ।। १४६ ।।
जाग्रत्स्वाप्नसुसौषुप्ततुरीयभावसंयुतम् ।
चतुर्षूपहितं ब्रह्म पञ्चमं प्रणवात्मकम् ।। १४७ ।।
जाग्रद्भावधरो ब्रह्मा स्वप्नभावधरो हरिः ।
सौषुप्तसंयुतो रुद्रो गुणेशस्तुर्यधारकः ।। १४८ ।।
तुर्यातीतभावधरो गणेशः पञ्चमो विभुः ।
राजसः पद्मजो ब्रह्मा सात्विको विष्णुरीश्वरः ।।१४९।।
तामसो रुद्र ईशानः शक्तिस्तु त्रिगुणात्मिका ।
त्रिगुणाहंकृतिधरो भास्करो हेमपूरुषः ।। १५० ।।
जगद्भावधरा शक्तिर्जीवभावधरो रविः ।
ईशभावधरो विष्णुः साक्षिभावधरश्शिवः ।। १५१ ।।

ब्रह्मभावधरो देवो गणेशस्सिद्धिबुद्धिपः ।
जगद्रूपे शक्तिमये सूर्यो मण्डलरूपवान् ।। १५२ ।।

जगतामात्मरूपेण जीवात्मा सुविराजति ।
मण्डलाधिष्ठानदेवो हिरण्यपुरुषो रविः ।। १५३ ।।

हिरण्मयपुरे रम्ये तत्र तिष्ठति शक्तिभिः ।
वर्णत्रयात्मकः प्रोक्तो वेदेषु प्रणवो द्विजाः! ।। १५४ ।।

गुणात्मकास्त्रयो वर्णास्तेषां देवास्त्रयस्सुराः ।
गुणेष्वहंकृतिधरो जगदात्मा दिनेश्वरः ।। १५५ ।।

अतो मण्डलमध्यस्थः प्रणवात्मक उच्यते ।
गायत्री वेदजननी शक्तिस्सा प्रणवात्मनः ।। १५६ ।।

चतुर्विधमूर्तिधरा कालभेदेन सा सती ।
अतो वै वेदमातुस्तु देवता सविताऽथवा ।। १५७ ।।

परमात्मा च कथितौ मन्त्रकल्पानुसारतः ।
गणेशश्चापि सूर्यश्च गायत्रीमन्त्रदेवते ।। १५८ ।।

सास्बभूतो गणेशानो बिम्बितो दिननायकः ।
उपहितो गणेशानो विशिष्टः पुरुषो रविः ।। १५९ ।।

जगद्गतानां सर्वेषां मुख्योऽयं दिननायकः ।
अयमत्र मण्डले तु स्वस्वरूपेण राजति ।। १६० ।।

गणेशांशमयस्सूर्यस्सावित्रीनायको ह्यतः ।
उपासकास्तु सूर्यस्य सौराश्चेति श्रुतौ स्मृताः ।।१६१।।

सिद्धिबुद्धीनायकस्य स्वानन्दभवनेशितुः ।
उपासका गाणपता इति प्रोक्ताश्श्रुतौ द्विजाः ! ।
सौरेभ्यस्ते श्रेष्ठतमा गाणेशा ब्रह्मधारकाः ।। १६२ ।।

इति मण्डलमध्यस्थपुरुषस्वरूपनिरूपणम्
ओम् इति श्रीविनायकरहस्ये ज्ञानामृतकाण्डे पूर्वार्द्धे
ज्ञानसारे गणेशपूर्वहृदये द्वितीयोऽध्यायः

—०—

## तृतीयोऽध्यायः

### आदिकल्पादिकल्पसृष्टिनिरूपणम्

सनकादय ऊचुः —

केचिद्वदन्ति ब्रह्माणं जनकं विष्णुरुद्रयोः ।
केचिद्वदन्ति गौरीशं जनकं विष्णुब्रह्मणोः ।। १ ।।

केचिद्वदन्ति गोविन्दं जनकं ब्रह्मरुद्रयोः ।
एभिर्नस्संशयो जातस्सिद्धान्तं वक्तुमर्हसि ।। २ ।।

शिव उवाच —

सृष्टयः कल्पभेदेन कथ्यन्ते भिन्नमार्गतः ।
मुख्यानूपानुकल्पान्तराख्याः इति कल्पाश्चतुर्विधाः ।।
एकरूपो मुख्यकल्पः षट्द्वयं ह्यनुकल्पकाः ।
उपकल्पा द्वादश स्युरन्तराश्चापि षोडश ।। ४ ।।
आद्यन्तिकमहाकल्पो ह्येकरूपो न संशयः ।
आद्यन्तिकमहाकल्पे ब्रह्मैकं संस्थितं भवेत् ।। ५ ।।

स्वसंवेद्यं परं तत्तु महावाक्यस्वरूपकम् ।
स्वसंवेद्यं परं ब्रह्म तदेव द्विविधं बभौ ।। ६ ।।

खेलनार्थं तयोरेकः पुरुषो निर्गुणो मतः ।
एका तु प्रकृतिः प्रोक्ता तुर्यातीतस्वरूपिणी ।। ७ ।।

तया संमोहितश्चायं तदधीनो भवत्प्रभुः ।
कलया मोहितो भूत्वा मोहहीनस्स्वयं स्थितः ।। ८ ।।

तत्र मोही च साकारो निराकारस्स्वयं प्रभुः ।
साकारस्सगुणः प्रोक्तो निराकारस्तु निर्गुणः ।। ९ ।।

प्रकृत्या सङ्गतं ब्रह्म सगुणं चेति कथ्यते ।
मायाचिद्योगमयमित्येतत् परिकीर्तितम् ।। १० ।।

बिन्दुरूपधरं चैतदोङ्कारगणनायकः ।
जगद्रूपधरश्चायं तुर्यातीतमयस्स्मृतः ।। ११ ।।

अनादि नित्यं ब्रह्मैव द्विविधं संबभूव च ।
द्वयोरभेदभावे वै स्वस्वरूपन्तु तिष्ठति ।। १२ ।।

त्रिविधं भावनारूपं नात्र सृष्टिः प्रकीर्त्यते ।
मायासङ्गयुता देवसृष्टिर्वेदेषु कथ्यते ।। १३ ।।

शुद्धसत्वप्रधानाढ्या माया तस्मादजायत ।
तद्गतं ब्रह्मणो बिम्बमीश्वरश्चेति कथ्यते ।। १४ ।।

मायागुणत्रययुतो गुणेशश्चेति कथ्यते ।
माययोपहितश्चायं विशिष्टो माययापि च ।। १५ ।।

तेन भावद्वययुतो गुणेशस्त्रिगुणेश्वरः ।
तदंशरूपी जीवस्स्यादविद्यासंयुतो मतः ।। १६ ।।

अव्याकृतोऽयं पुरुषस्तुरीय इति कथ्यते ।
अव्याकृतो गुणेशानः पञ्चमाद् गणनायकात् ॥ १७ ॥

समुद्भूतो विश्वकर्ता तुरीयदेहधारकः ।
अव्याकृतस्य सृष्टिस्तु मुख्यसृष्टिरिति स्मृता ॥ १८ ॥

पञ्चप्रज्ञायुता माया विशुद्धसत्वरूपिणी ।
पञ्चप्रज्ञामयो देहयुतोऽभूद् गुणपो विभुः ॥ १९ ॥

आनाभेर्ब्रह्मरूपाढ्यो मुखान्तं विष्णुरूपवान् ।
तदूर्ध्वं रुद्ररूपाढ्यो वामे शक्तिस्वरूपवान् ॥ २० ॥

दक्षिणाङ्गे सूर्यरूपधरोऽयमिति कीर्तितः ।
सौषुप्तमपि स्वाप्नञ्च जाग्रद्भावधरं तथा ॥ २१ ॥

सृष्ट्वा क्रमेण गुणपः पञ्चदेवान् ससर्ज च ।
सृष्टं चराचरं तेन पञ्चस्वेकेन ब्रह्मणा ॥ २२ ॥

एषा सृष्टिर्मुख्यसृष्टिरिति वेदविदो विदुः ।
चतुर्णामपि जगतां लयोत्पत्तिश्श्रुतौ द्विजाः! ॥ २३ ॥

कल्पो वैनायकः प्रोक्तो ह्यादिकल्प इतीति च ।
माया तु प्रकृतिः प्रोक्ता स्थूलसूक्ष्मसमात्मिका ॥२४॥

अव्याकृतस्तुरीयोऽयं पुरुषश्चेति कथ्यते ॥ २५ ॥

त्रिविधानाञ्च जगतां स्रष्टा देवो गुणेश्वरः ।
त्रिविधानां लयोत्पत्तिरनुकल्प इति स्मृतः ॥ २६ ॥

अनुकल्पस्तु वेदेषु पञ्चधा परिकीर्तितः ।
यदैनं वामनेत्रेण पश्यति गणनायकः ॥ २७ ॥

तदा शक्तिस्स्वयं भूत्वा विश्वं सृजति स प्रभुः ।
'भुवनेशीमहाकल्प' इत्ययं कल्प ईरितः ॥ २८ ॥

यदैनं दक्षिणेनैव पश्यति विघ्ननायकः ।
तदा सूर्यस्स्वयं भूत्वा विश्वं सृजति पूरुषः ।। २९ ।।

'आदित्यकल्प' इत्येव कल्पोऽयं परिकीर्तितः ।
मध्यनेत्रसार्द्धदृष्टया यदा पश्यति पूरुषम् ।। ३० ।।

तदा नारायणो भूत्वा सृजति त्रिविधं जगत् ।
'भूतिविष्णुकल्प' इति कल्पोऽयं श्रुतिषु स्मृतः ।। ३१ ।।

मध्यनेत्रपूर्णदृष्टया यदा पश्यति पूरुषम् ।
तदा परशिवो भूत्वा करोति विश्वसर्जनम् ।। ३२ ।।

'भूतिशम्भुकल्प' इति कल्पोऽयं कीर्तितश्श्रुतौ ।
नेत्रत्रयैर्गणेशानो यदा पश्यति पूरुषम् ।। ३३ ।।

पञ्चदेवैकाकृतियुग्गुणेशः पुरुषः परः ।
स्वयं सृजति वै विश्वं स्ववीक्षणप्रभावतः ।। ३४ ।।

'गाणेश्वरः कल्प' इति कल्पोऽयं श्रुतिषु स्मृतः ।
एक एव गुणेशानः पञ्चधैवं प्रकीर्तितः ।। ३५ ।।

उपकल्पा द्वादश स्युर्मुख्याश्चत्वार ईरिताः ।
जाग्रत्स्वाप्नञ्च सौषुप्तं स्थूलसूक्ष्मसमात्मकम् ।। ३६ ।।

देहत्रयञ्चैवेति कथितं देही देहस्तुरीयकः ।
सृष्ट्यादौ गुणपश्चायं देहत्रययुतोऽभवत् ।। ३७ ।।

देहत्रययुतश्चायं पुरुषश्चेति कथ्यते ।
गुणत्रयाधारमयो गुणत्रयधरो मतः ।। ३८ ।।

जागृत्सृष्टिरस्य वेदे 'ह्युपकल्प' इति स्मृतः ।
कालभेदेन सृष्टिस्तु प्रोक्ता द्वादशभेदतः ।। ३९ ।।

सङ्कीर्णकाले भगवान् परमात्मा विनायकः ।
सोऽरक्षद महामायां जाग्रद्विश्वस्वरूपिणीम् ।। ४० ।।

जागृद्देहात्समुत्पन्ना ब्रह्मविष्णुमहेश्वराः ।
पृथग्भावधरा लोके सृष्ट्यादिकृत्यकारिणः ।। ४१ ।।

गुणेशस्य सत्वकाले गणेशस्यैव वीक्षणात् ।
जागृद्ब्रह्मशरीराच्च स्वयं जातः परशिवः ।। ४२ ।।

वामाङ्गादभवद्विष्णुर्दक्षिणाङ्गाच्चतुर्मुखः ।
महादेवस्य रुद्रस्य शिवस्य परमात्मनः ।। ४३ ।।

तथा राजसकाले तु समुत्पन्नश्चतुर्मुखः ।
भ्रूमध्यमुखदेशाभ्यां जातौ कस्य हरीश्वरौ ।। ४४ ।।

तथा तामसकाले तु समुत्पन्नो जनार्दनः ।
भ्रूमध्यनाभिदेशाभ्यां जातौ रुद्रपितामहौ ।। ४५ ।।

चतुर्णामपि सृष्टीनामेवं हेतुर्विनायकः ।
तस्येक्षणं विना सृष्टिर्नास्ति वेदेषु योगिनः! ।। ४६ ।।

त्रयस्ते कारणात्मानस्साक्षाज्जाता गुणेश्वरात् ।
चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः ।। ४७ ।।

पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु ।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः ।। ४८ ।।

तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः ।
तपसा तोषयित्वा ते पितरं कुञ्जराननम् ।। ४९ ।।

ब्रह्मनारायणौ रुद्रः पूर्वं कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ।। ५० ।।

विष्णुश्च भगवान् रुद्रं ब्रह्माणमसृजत् पुनः ।
तथा कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।। ५१ ।।

परस्परस्माज्जायन्ते परस्परजयैषिणः ।
उपकल्पेष्वेवमेव जायन्ते कृत्यकारिणः ।। ५२ ।।

अवान्तरसृष्टयस्स्युर्ललितासृष्टिपूर्वगाः ।
शिवविष्णुशक्तिसूर्यास्तुरीयपदसंस्थिताः ।। ५३ ।।

प्रज्ञारूपा गुणेशस्य नैवं जाता मुनीश्वराः! ।
तेषामंशसमुद्भूता जाताश्चैवं गुणात्मकाः ।। ५४ ।।

इति आदिकल्पादिकल्पसृष्टिनिरूपणम् ।

पञ्चमस्य गजाननत्वकथनम्

सनकादयः—

विनायको गणेशानः पञ्चमस्थितिगो मतः ।
गजानन इति प्रोक्तो वेदेषूपनिषत्सु च ।। ५५ ।।

हेतुना केन भगवानिभास्यस्संबभूव ह ।
तत्कारणञ्च नो ब्रूहि सर्वज्ञ! परमेश्वर! ।। ५६ ।।

शिव उवाच—

गजाननस्वरूपन्तु स्वानन्दस्य प्रकीर्तितम् ।
गजाकारो गुणेशानस्तापिनीश्रुतिवाक्यतः ।। ५७ ।।

व्याकृतं त्रिविधं विश्वं नराकारमिति स्मृतम् ।
द्वयोरभेदभावे तु पञ्चमोऽयं गजाननः ।। ५८ ।।

यस्यैव प्रथमं कार्यं गुणेशो गजरूपधृक् ।
तेनैवायं गजमुख इत्येवं पञ्चमस्स्मृतः ।। ५९ ।।

स्वस्वरूपदर्शनार्थं विश्वस्मिन् गणनायकः ।
गजाननयुतां मूर्तिं गृह्णाति स्वेच्छया विभुः ।। ६० ।।

गजाननशरीरेऽस्मिन् महावाक्यगणेश्वरः ।
सान्निध्यं कुरुते यद्वत्तद्वन्नान्यत्र दृश्यते ।। ६१ ।।

इति पञ्चमस्य गजाननत्वकथनम् ।

## शिवादीनां पुत्रावतारत्वनिरूपणम्

सनकादयः—

केचिद्वदन्ति विघ्नेशं तनयं पार्वतीपतेः ।
वरेण्यतनयं केचित् केचित् कश्यपनन्दनम् ।। ६२ ।।

वदसि त्वं गणेशानं परब्रह्मस्वरूपिणम् ।
एभिर्नस्संशयो जातस्तत्त्वं नो वद देशिक! ।। ६३ ।।

शिव उवाच—

ज्ञानानन्दमयं ब्रह्म स्वानन्दं परिकीर्तितम् ।
सगुणं निर्गुणञ्चेति तदेव द्विविधं बभौ ।। ६४ ।।

मूलप्रकृतियोगाढ्यं सगुणञ्चेति कथ्यते ।
भक्तानां पालनार्थन्तु दुष्टानां निधनाय च ।। ६५ ।।

भवेच्च मूर्तिसंयुक्तस्स्वेच्छयायं स्वमायया ।
ब्रह्माण्डे धृतमूर्तेर्वै अवतार इति श्रुतौ ।। ६६ ।।

नाम संस्थापितं विप्राः! अवतारे गजाननः ।
ममापि कश्यपस्यापि शक्त्यादीनां जगत्तले ।। ६७ ।।

पुत्रोऽभूत्तपसा देवो धर्मसंस्थापनाय च ।
अवतारा अनन्ताश्च आगमेषु प्रकीर्तिताः ।। ६८ ।।

अष्टोत्तरशतास्तेषु मुख्या इति प्रकीर्तिताः ।
अवतारहेतुभूतकार्यं देवो गजाननः ।। ६९ ।।

कृत्वा लोके तिरोभावं प्राप्नुयान्नात्र संशयः ।
बहुवारं गणेशानो मम पुत्रोऽभवत्प्रभुः ।। ७० ।।
शिवपुत्र इति ख्यातिं प्राप तेन गजाननः ।।

इति शिवादीनां पुत्रावतारत्वनिरूपणम्

कैलासादिलोकस्थगणेशादिपूजककथनम्

सनकादयः—

केचिद्वदन्ति हेरम्बश्शिवलोके तु तिष्ठति ।
तथा वैकुण्ठभवने तिष्ठतीति च केचन ।। ७१ ।।

ब्रह्मणो भवने चेति केचिच्च सूर्यमण्डले ।
शक्तिलोके तथा केचिद्वदन्ति वैदिका जनाः ।। ७२ ।।

स्वानन्दभवने रम्ये विश्वातीतपदे वरे ।
वदसि त्वं तिष्ठतीति तत्त्वं त्वं ब्रूहि शङ्कर! ।। ७३ ।।

शिव उवाच—

सिद्धिबुद्धीपतिरयं गणेशो ब्रह्मणस्पतिः ।
स्वसंवेद्यमयस्स्थित्यां स्वयं ज्योतिस्स्वरूपवान् ।। ७४ ।।

स्वानन्दभवने नैजे शक्तिभ्यां सह तिष्ठति ।
ब्रह्मप्रियमुखास्तस्य गणास्तत्र प्रकीर्तिताः ।। ७५ ।।
स्वस्वरूपमयास्सर्वे स्वात्मानन्दपरायणाः ।
कैलासादिषु लोकेषु तत्र तत्र सुसंस्थिताः ।। ७६ ।।

पूजार्थमालयं तत्र कृत्वा च विधिपूर्वकम् ।
प्रतिष्ठाप्य गणेशानं स्वस्वानुग्रहदायकम् ।। ७७ ।।

कुर्वन्ति पूजनं भक्त्या जपध्यानपुरस्सरम् ।
तत्क्रमं वः प्रवक्ष्यामि यूयं शृणुत सादरम् ।। ७८ ।।

एकाक्षरगणेशानं शिवलोके परशिवः ।
कैलासभवने रम्ये हेरम्बन्तु सदाशिवः ।। ७९ ।।

जम्बूद्वीपस्थकैलासे महेशः पार्वतीपतिः ।
चिन्तामणिगणेशानं चिन्तितार्थप्रदायकम् ।। ८० ।।

सर्वलोकमणिद्वीपे वल्लभेशं पराम्बिका ।
दुर्गागणपतिं दुर्गा काली चण्डिगणेश्वरम् ।। ८१ ।।

स्कन्दलोके महासेनो लक्षेशं गणनायकम् ।
शूलटङ्कगणेशानं रुद्रलोके तु भैरवः ।। ८२ ।।

सहस्रास्यं गणेशानं वीरभद्रो निजालये ।
मार्गेश्वरं गणेशानं शास्ता हरिहरात्मजः ।। ८३ ।।

गजोद्भूतं शम्भुपुत्रं नन्दिकेशादयो गणाः ।
हयग्रीवमुखाश्शाक्ता गौरीमलसमुद्भवम् ।। ८४ ।।

आज्ञागणेशं वैकुण्ठे लक्ष्मीनारायणो हरिः ।
श्रीवासुदेवो गोलोके कृष्णसंज्ञं गणेश्वरम् ।। ८५ ।।

श्वेतद्वीपे महाविष्णुस्तथा श्वेतविनायकम् ।
गव्यं गणेशं राधांबा लक्ष्मीर्लक्ष्मिगणेश्वरम् ।। ८६ ।।

दूर्वागणेशं तुलसी धरणी भूविनायकम् ।
उच्छिष्टं मन्मथो गौरीगर्भजं विष्णुलोकगाः ।। ८७ ।।

ब्रह्मलोकगतो ब्रह्मा सर्वविघ्नविनाशनम् ।
मनोवत्यां सिद्धिनाथं सत्ये सत्यविनायकम् ।। ८८ ।।

शारदागणपं वाणी गायत्री चन्दनात्मकम् ।
हारिद्रकन्तु सावित्री मन्त्रा मन्त्रगणाधिपम् ।। ८९ ।।

ब्रह्मलोकगतास्सर्वे वरदं गणनायकम् ।
ओंकारगणपं सूर्यो रविमण्डलमध्यगः ।। ९० ।।

सन्ध्या शक्तिगणेशानं गायत्री बालविघ्नपम् ।
सावित्री तरुणं देवं वृद्धरूपं सरस्वती ।। ९१ ।।

मुहूर्तं ब्रह्मसूर्यस्तु विकटं शिवसूर्यकः ।
सूर्यनारायणो वक्रतुण्डं सौरास्तु विघ्नपम् ।। ९२ ।।

अविमुक्तं तपोलोके योगिनस्सनकादयः ।
मरीचिप्रमुखा ब्रह्मतनया ज्ञानविघ्नपम् ।। ९३ ।।

पितरस्स्वधया युक्ता जनोलोके सुमङ्गलम् ।
एकदन्तं महर्लोके मुनयः कल्पजीविनः ।। ९४ ।।

सुवर्लोके तु सुमुखं देवास्सर्वे सवासवाः ।
महामेरोरष्टदिक्षु निवसन्ति दिगीश्वराः ।। ९५ ।।

रत्नगर्भगणेशानं देवराजस्स्वपट्टणे ।
अग्निर्वह्निगणेशानं तेजोवत्यां गणान्वितः ।। ९६ ।।

कालं संयमिन्याञ्चण्डोद्दण्डन्तु गौणपः ।
रक्षोवत्यां अपां नाथो पाशपाणिं गणाधिपम् ।। ९७ ।।

शीतावत्यां धूम्रवर्णं गन्धोवत्यां समीरणः ।
अलकायां यक्षपतिः कुबेरस्तु निधिप्रदम् ।। ९८ ।।

कैलासे रुद्र ईशानः प्रचण्डं गणनायकम् ।
भुवर्लोके ग्रहेशानस्सूर्यः श्वेतार्कविघ्नपम् ॥ ९९ ॥

फालचन्द्रं निशानाथस्संकष्टहारकं कुजः ।
नवनीतं सोमपुत्रस्सन्तानन्तु बृहस्पतिः ॥ १०० ॥

एकोऽभयप्रदं मन्दश्शुक्रः क्षिप्रप्रसादनम् ।
छायारूपमयावाशापूरकं ध्रुवमध्यगः ॥ १०१ ॥

रक्तं सप्त मुनीशाना मदोत्कटमनामयम् ।
नदीनदयुतस्सिन्धुर्मणिकर्णिगणेश्वरम् ॥ १०२ ॥

पातालोके कालाग्निरुद्रो वीरगणेश्वरम् ।
कूश्माण्डरुद्रः कूश्माण्डगणेशानं महातले ॥ १०३ ॥

हाटकेशो महादेवः पिङ्गलाभं तलातले ।
रसातले सर्पराजमुखा वीरगणाधिपम् ॥ १०४ ॥

सुतले कपिलं योगी कपिलश्चिन्तितार्थदम् ।
दुर्मुखं वितले दैत्या ह्यतले दिग्गजावराः ॥ १०५ ॥

चतुर्दन्तगणेशानाममराः कल्पकं विभुम् ।
आजानजाः प्रमोदं वै आमोदं कर्मदेवताः ॥ १०६ ॥

लोकालोकाबहिस्स्थाने ज्योतिर्भूम्यां सदा मुदा ।
अन्धकारमये स्थाने घूर्णिताक्षं गणेश्वरम् ॥ १०७ ॥

भूतप्रेतपिशाचाद्यौ पुष्करे च्यवनो नृपः ।
गजकर्णं मुनीशानाश्चतुर्वक्त्रगणेश्वरम् ॥ १०८ ॥

गोमेदके नृपो भव्यो गजदन्तगणेश्वरम् ।
सिद्धरूपं सिद्धवराः क्रौञ्चे तु स्थूलदन्तकम् ॥ १०९ ॥

ज्योतिष्मानुरगास्तत्र षण्मुखं गणनायकम् ।
द्युतिः कुक्षिगणेशानं द्वीपे शाल्मलिसंज्ञिके ।। ११० ।।

त्रिमुखं गरुडास्तत्र कूटदन्तं कुशाभिधे ।
वपुष्मान् गुह्यका वीराः पञ्चवक्त्रं गणेश्वरम् ।। १११ ।।

शके गोमेदको राजा लम्बोदरविनायकम् ।
द्विमुखं तद्गता दैत्यराक्षसा गणसंयुताः ।। ११२ ।।

जम्बूद्वीपं कर्मभूमिर्लवणाम्भोधिवेष्टितम् ।
अस्य मध्यगतो मेरुः कनकाचलसंज्ञिकः ।। ११३ ।।

दक्षिणोत्तरप्रभेदेन भूमिरेषा द्विधा मता ।
मेरोरुत्तरभागे तु कुरुवर्षे नृपः कुरुः ।। ११४ ।।

ज्येष्ठराजं गणेशानं तत्रस्थैस्सर्वमानवैः ।
मरुद्गणास्तत्र संस्था वामनं गणनायकम् ।। ११५ ।।

हिरण्यवर्षे नृपतिः प्रवालं गणनायकम् ।
विद्याधरा दन्तहस्तं रम्ये रम्यस्तु मोदकम् ।। ११६ ।।

गन्धर्वास्संस्थितास्तत्र गणेशं नृत्तकारकम् ।
मेरोस्तु दक्षिणे पार्श्वे कपर्दी गणनायकम् ।। ११७ ।।

इलावृते नरपतिर्यक्षायक्षगणाधिपम् ।
हरिवर्षे सिद्धवक्त्रं साध्यास्तु देहलीभवम् ।। ११८ ।।

किंपुरुषे भूमिभागे महागणपतिं नृपः ।
मित्रं तत्र देवगणाः पश्चिमे केतुमालके ।। ११९ ।।

कालानलप्रशमनं नृपो मानवपुङ्गवैः ।
चित्रघण्टागणेशानं चारणास्तत्र संस्थिताः ।। १२० ।।

पूर्वभागे तु भद्राश्वे धूम्रकेतुं नृपोत्तमः ।
व्योमविघ्नेश्वरं देवं किन्नरास्तत्र संस्थिताः ।। १२१ ।।

भारते संस्थिता देवा डुण्डिराजं गणेश्वरम् ।
अष्टाशीतिसहस्रौघा मयूरेशं मुनीश्वराः ।। १२२ ।।

बल्लालगणपं वैश्याश्शूद्रा मन्दारविघ्नपम् ।
वर्णाश्रमविहीनास्तु कलिप्रियविनायकम् ।। १२३ ।।

अर्चयन्ति सदा भक्त्या जपध्यानपुरस्सरम् ।
किञ्च भारतवर्षे तु कुमारी खण्डसंज्ञिके ।। १२४ ।।

अष्टोत्तरशताश्चापि मूर्तयो ब्रह्मणस्पते ।
स्थापिताः परया भक्त्या पूज्यन्ते तत्र तत्र च ।।१२५।।

अत एव वरं प्रोक्तं कुमारीखण्डमुत्तमम् ।
सरस्वतीदृषद्वत्योर्ब्रह्मावर्तन्तु मध्यगम् ।। १२६ ।।

तत्र भूमिर्योगमयी ज्ञानयोगप्रदायिनी ।
कुरुपाञ्चालदेशाद्या ऋषिदेशा इति स्मृताः ।। १२७ ।।

तत्र ज्ञानमयी भूमिर्विचारे बुद्धिदायिनी ।
ऋषिदेशात्पूर्वभागे मध्यं विन्ध्यहिमालयोः ।। १२८ ।।

आर्यावर्तमिति प्रोक्तं पुण्यभूमिस्तु सा मता ।
उपासना योगमयी भूमिस्तत्र प्रकीर्तिता ।। १२९ ।।

विन्ध्यकृष्णामध्यभागो मध्यदेश उदीरितः ।
शक्तियोगमयी भूमिर्देवभक्तिप्रदायिनी ।। १३० ।।

कृष्णाया दक्षिणो भागो देशस्स्याद्दक्षिणाभिधः ।
तत्र भूमिः कर्ममयी कर्मयोगप्रदायिनी ।। १३१ ।।

एवं पञ्चविधप्रज्ञायुतं खण्डमुदीरितम् ।

इति कैलासादिलोकस्थगणेशादिपूजककथनम्

## कर्मस्वरूपनिरूपणम्

सनकादयः—

किं कर्म तत्स्वरूपञ्च ब्रूहि नः परमेश्वर! ।

शिव उवाच—

यद्यच्च क्रियते बुद्धया मनसा चेन्द्रियैस्तथा ॥ १३२ ॥

कायेन वचसा सर्वं कर्मेति कथ्यते बुधैः ।
निषिद्धं विहितञ्चेति कर्म वेदे द्विधा स्मृतम् ॥१३३॥

'यन्न कार्य'मिति प्राह श्रुतिः प्राहुर्मुनीश्वराः ।
तन्निषिद्धं भवेत्कर्म, 'कर्तव्य'मिति यच्छ्रुतिः ॥ १३४ ॥

प्राह प्राहुर्मुनीशाना विहितं चेति तत्स्मृतम् ।
नित्यं निमित्तकं काम्यमिति कर्म त्रिधा स्मृतम् ॥१३५॥

विहितं नित्यकर्मा तु मतवर्णप्रभेदतः ।
द्विधा प्रोक्तं वर्णं सन्ध्याजपहोममुखानि च ॥ १३६ ॥

वर्णनित्यानि कर्माणि त्यक्त्वा शुद्रत्वमाप्नुयात् ।
देवमन्त्रजपश्चैव तथैव देवतार्चनम् ॥ १३७ ॥

देवतत्त्वविचारश्च मतनित्यानि योगिनः! ।
मतनित्यपरित्यागे मतभ्रष्टो भवेन्नरः ॥ १३८ ॥

पुण्यकालेषु प्राप्तेषु कर्तव्यन्तु निमित्तकम् ।
फलेच्छया च यत्कार्यं तत्काम्यमिति कीर्तितम् ॥१३९॥

प्रायश्चित्तपूर्वकानि ह्येतदन्तर्गतानि वै ।
प्रारब्धादिभेदतश्च कर्माणि त्रिविधं मतम् ॥ १४० ॥

तानि सञ्चितकर्माणि कृतानि कृतजन्मसु ।
सद्योऽनुभूयते कर्म प्रारब्धमिति कीर्तितम् ।। १४१ ।।

इतः परं कार्यमाणमागामीति प्रकथ्यते ।

इति कर्मस्वरूपनिरूपणम्

## नित्यकर्मस्वरूपकथनम्

सनकादयः—

नित्यकर्म प्रशंसन्ति योगिनो मुक्तिकाङ्क्षिणः ।
अतो नित्यकर्मरूपं कृपया वद शङ्कर! ।। १४२ ।।

शिव उवाच—

सन्ध्यायां क्रियमाणं यत् कर्म सन्ध्यमुदीरितम् ।
अभेदभावनं वेदे सान्ध्यं कर्म प्रकीर्तितम् ।। १४३ ।।

महावाक्यानुसन्धानात्सिद्धेस्तद्भावनं वरम् ।
सन्ध्यारूपं महावाक्यं जीवात्मपरमात्मनोः ।। १४४ ।।

महावाक्यानुसन्धानं सन्ध्येति परिकीर्तितम् ।
महावाक्यानुसन्धानात् महिम्नि संस्थितं परम् ।।१४५।।

अन्तःकरणवृत्यान्तु समारूढं भवेत्किल ।
पञ्चचित्तवृत्तिमयी महाबुद्धिरुदीरिता ।। १४६ ।।

शमीकाष्ठे यथा वह्निस्तिष्ठत्यव्यक्तरूपवान् ।
मन्थनाद्व्यक्ततां याति तथेदं ब्रह्मसर्वगम् ।। १४७ ।।

महावाक्यानुसन्धानाद् बुद्धौ व्यक्तं भवेच्च तत् ।
हृद्गुहारूपिणी बुद्धिर्हृदि दृश्यं भवेच्च तत् ।। १४८ ।।

निरोधचित्तभूमिस्थं योगीनां मुनिसत्तमाः ।
महावाक्यानुसन्धानकर्मैकमलमेव हि ।। १४९ ।।

निरोधचित्तरूपा सा बुद्धिस्तु निर्गुणा मता ।
एकाग्ररूपिणी सा तु सगुणा चेति कथ्यते ।। १५० ।।

त्रिविधं व्याकृतं विश्वं त्वंपदार्थमुदीरितम् ।
अव्याकृतं तत्पदं स्यात् बिन्दु चासिपदं स्मृतम् ।।१५१।।

त्वंपदं सगुणं ब्रह्म तदेव शोधनाय च ।
तत्वंपदस्वरूपेण चतुर्षु कथ्यते बुधैः ।। १५२ ।।

जगद्गतं परं ब्रह्म चतुर्विधमिति स्मृतम् ।
ओङ्कारं वाथ गायत्री जगद्ब्रह्ममयो मतः ।। १५३ ।।

एकाग्रचित्ते व्यक्तत्वं प्राप्नुयाच्च तयोर्जपात् ।
एकाग्रचित्तगं ब्रह्म चतुर्भेदसमन्वितम् ।। १५४ ।।

पूर्णोङ्कारमयं ब्रह्म मूलाधारे प्रतिष्ठितम् ।
वह्निमण्डलमाधारे हृदये रविमण्डलम् ।। १५५ ।।

आज्ञायां देहिनां विप्राः! संस्थितं चन्द्रमण्डलम् ।
चतुर्विधजगद्ब्रह्म हृदये रविमण्डले ।। १५६ ।।

चतुर्विधज्ञानरूपं निर्गुणं चन्द्रमण्डले ।
भावनार्थं कल्पितानि ब्रह्मणा पद्मयोनिना ।। १५७ ।।

महावाक्यानुसन्धानान्मूलाधारगतं परम् ।
हृदये व्यक्ततां गच्छेत् निरोधचित्तभूमिगम् ।। १५८ ।।

हृद्गतं व्यक्ततां याति मूलन्तस्य च तेजसा ।
ओङ्कारस्याथ गायत्र्या जपाद् वृद्धिमवाप्नुयात् ।।१५९।।

आधारदेवताश्चापि चतुर्विधजगद्गताः ।
वेदमन्त्रजपेनैव व्यक्तत्वं प्राप्नुवन्ति च ।। १६० ।।

महावाक्यानुसन्धानात्तथा मात्रजपेन च ।
षडाधारदेवतानां रूपं हृदि प्रजायते ।। १६१ ।।

तेषां मन्त्रजपेनैव मन्त्रोक्तध्यानरूपकम् ।
हृदि स्फूर्तिस्वरूपेण प्रकटं भवति ध्रुवम् ।। १६२ ।।

मनसो वृत्तिहीनस्य ब्रह्माकारेण या स्थितिः ।
असंप्रज्ञातनामासौ समाधिरभिधीयते ।। १६३ ।।

निरोधचित्तभूम्यां वै अयं भवति नान्यथा ।
सगुणं निर्गुणं ध्येयं संप्रज्ञातसमाधिना ।। १६४ ।।

चतुर्विधजगद्रूपं सगुणं परिकीर्तितम् ।
तेषु ज्ञानस्वरूपस्थं निर्गुणं परिकीर्तितम् ।। १६५ ।।

असंप्रज्ञातसमाधौ प्रथमं बिन्दुगं मतम् ।
जगन्मयं तद्गतञ्च संप्रज्ञातसमाधिना ।। १६६ ।।

बाधितञ्च भवेद्विप्राः! ततो बिन्दुं समाश्रयेत् ।
मूलाधारगतस्यैव ध्यानसिद्धिर्गुणात्मनः ।। १६७ ।।

निर्गुणस्य च सिद्ध्या वै भवेदेव न चान्यथा ।
एवं ध्यानसिद्धियुक्तस्स्वात्मानं विश्वमेव च ।। १६८ ।।

स्वानन्दं परमं ब्रह्म पश्यति ज्ञानचक्षुषा ।
संप्रातसुसंसिद्धात् ज्ञानचक्षुस्तु जायते ।। १६९ ।।

कुण्डली योगिनीशक्तिः अष्टप्रकृतिरूपिणी ।
आवृत्य च षडाधारान् मूलाधारे तु संस्थिता ।।१७०।।

आधारवह्निना दग्धा पुच्छं त्यक्त्वा च सा वरा ।
उद्घाट्य च कवाटानि सा गच्छेच्च ब्रह्मरन्ध्रकम् ॥

हृदि तेजोमयं ब्रह्म पश्येद्देही न संशयः ।
अन्तर्बहिश्च व्याप्य विश्वं तिष्ठत्येव हुताग्निवत्॥१७२

बाह्याग्निवृद्ध्या हृदये वह्निवृद्धिस्तु जायते ।
अत एव होमकर्म नित्येषु परिकीर्तितम् ॥ १७३ ॥

सन्ध्यया च जपो नित्यो नित्येष्वपि प्रकीर्तितम् ।
नित्यस्य साधकान्येव निमित्तपूर्वगाणि च ॥ १७४ ॥

इति नित्यकर्मस्वरूपकथनम्

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे गणेशपूर्वहृदये तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

### देवार्चनस्वरूपनिरूपणम्

सनकादयः—

देवार्चनस्वरूपं नः कृपया वद शङ्कर! ।

शिव उवाच—

देवमन्त्रजपेनैव हृदि स्फूर्तिः प्रजायते ।
स्फूर्तिरूपवृद्धिकरमर्चनं वेदसम्मतम् ॥ १ ॥

शक्तीशरविविष्णूनामर्चनं त्रिविधं स्मृतम् ।
पञ्चार्चनञ्च प्रासादं शुद्धं चेति स्मृतानि हि ॥ २ ॥

अम्बिका भास्करो विष्णुश्शिवश्चापि गुणेश्वरः ।
पञ्चायतनदेवा वै वेदशास्त्रप्रविश्रुताः ॥ ३ ॥

पञ्चायतनदेवाश्च तुरीयस्थितिगा मताः ।
ब्रह्मलोकप्रदं प्रोक्तं पञ्चायतनपूजनम् ॥ ४ ॥

अथवा क्रममार्गेण ज्ञानान्मुक्तिप्रदं मतम् ।
चतुर्णामपि प्रासादपूजनं द्विविधं मतम् ॥ ५ ॥

स्वेष्टदेवेन गणपं संस्थाप्य पूजनं द्वयोः ।
क्रियमाणन्तु प्रासादपूजनं चार्षमीरितम् ॥ ६ ॥

आदौ कृत्वा गणेशस्य पूजनं स्वेष्टदेववत् ।
पश्चाद्वै क्रियमाणन्तु स्वेष्टदेवाय भक्तितः ॥ ७ ॥

प्रासादं तद्द्विव्यमिति कथितं वेदपरागैः ।
केवलं स्वेष्टदेवाय क्रियमाणन्तु शुद्धकम् ॥ ८ ॥

कर्माङ्गत्वे क्रियमाणं पूजनं ब्रह्मणस्पतेः ।
शुद्धं चैवेति कथितं वेदागमविशारदैः ॥ ९ ॥

पूजनं गणनाथस्य विधिपूर्वं सुभक्तितः ।
गार्ग्यकल्पोक्तमार्गेण बिम्बयन्त्रशिलासु च ॥ १० ॥

क्रियमाणन्तु प्रासादमिति प्रोक्तं मुनीश्वरैः ।
पूजाक्रमाश्च बहवस्तन्त्रशास्त्रे प्रकीर्तिताः ॥ ११ ॥

महादेवैश्च शप्तास्ते ब्रुवे तान् शृणुत प्रियाः ! ।
अम्बिकां गणपं सूर्यं त्यक्त्वा पञ्चसु केचन ॥ १२ ॥

पूजयन्ति हरीशौ च त्रैमूर्तमतसंश्रिताः ।
पार्वतीशापग्रस्तास्ते मिश्रमार्गपरायणाः ॥ १३ ॥

एकलिङ्गार्चनरता अकृत्वा विघ्नपार्चनम् ।
विना पाशुपतीं दीक्षां वेदशास्त्रप्रविश्रुताम् ॥ १४ ॥

एकलिङ्गार्चनपरास्सूतकेषु च पूजकाः ।
कपालादिचिह्नधरास्तथैव लिङ्गधारिणः ।। १५ ।।
शप्तास्ते विष्णुना पूर्वं तन्त्रमार्गानुसारिणः ।
पाञ्चरात्रादिमार्गस्था शङ्खचक्राङ्किता नराः ।। १६ ।।
शप्तास्ते ब्रह्मणा पूर्वं भृग्वादिनवयोगिभिः ।
शक्तिपादादिचिह्नाढ्याः कुलमांसनिवेदकाः ।। १७ ।।
एते शप्ताश्शिवाद्यैश्च चण्डालसदृशाधमाः ।
पुरुषं गृहनाथत्वे मत्वा ये पूजयन्ति च ।। १८ ।।
पद्ममण्डलसन्तप्ता वेदशापप्रपीडिताः ।
गणेशार्चनरहितं चतुर्णां शुद्धपूजनम् ।। १९ ।।
वेदमात्रशापयुक्तमिति प्राह मृकण्डुजः ।
गणेशं शम्भुतनयं शिवदत्तपरान्वितम् ।। २० ।।
मत्वा ये गणपं भक्त्या पूजयन्ति नरा भुवि ।
पञ्चदेवशापयुक्ता निन्दितास्सर्वकर्मसु ।। २१ ।।
त्यक्त्वा वैनायकं शास्त्रं पुराणश्रुतिरूपकम् ।
शैवागमोक्तमार्गेण हरिद्रागणनायकम् ।। २२ ।।
निधिप्रदं वल्लभेशमुच्छिष्टं नवनीतकम् ।
सन्तानदायकं चापि पूजयन्ति च ये नराः ।। २३ ।।
तान्त्रिकाश्चेति ते ख्याताः पाशाद्यायुधचिह्निताः ।
पञ्चायतनदेवेषु पञ्चमं प्रवदन्ति ये ।। २४ ।।
स्थाप्य पूजां प्रकुर्वन्ति परिवारस्थलेषु च ।
गणकेनैव ते शप्ता वैदिकाभासमार्गिणः ।। २५ ।।

इति देवार्चनस्वरूपनिरूपणम्

## मन्त्रादीनां कृच्छ्रफलनिरूपणम्

सनकादयः—

कवचादीनि केचिद्वै पठन्ति च दिने दिने ।
किमर्थं कारणं तस्य ब्रूहि नः परमेश्वर! ।। २६ ।।

शिव उवाच—

जकारो जन्मविच्छेदः पकारः पापनाशनः ।
मकारो मन इत्याहुस्त्रकारस्त्राण एव च ।। २७ ।।

मनसो रक्षणेनैव जन्मपापविनाशकः ।
स्मृतो मन्त्रजप इति जपेन मन्त्रदेवता ।। २८ ।।

प्रसन्ना पुरुषार्थांश्च जापकाय प्रयच्छति ।
क्षुधार्दितेन भोक्तव्यमन्नं तस्याः प्रशान्तये ।। २९ ।।

मुमुक्षुणा तथा जप्यो मूलमन्त्रश्च केवलः ।
फलभक्ष्यव्यञ्जनानि साधकान्यन्नभक्षणे ।। ३० ।।

तथैव कवचादीनि कथितानि जपे द्विजाः! ।
एकाक्षरो गणेशस्य मूलमन्त्र इति स्मृतः ।। ३१ ।।

षडक्षरो गुणेशस्य कथितो मूलमन्त्रकः ।
उत्तमा रविसाहस्रसंख्यामूलमनोर्जपे ।। ३२ ।।

रससाहस्रसंख्या तु षडर्णस्योत्तमा स्मृता ।
फलमुत्तमसंख्यायाष्षडब्दं कृच्छ्रमीरितम् ।। ३३ ।।

महावाक्यमनोर्वेदे सकृद्वारजपस्य च ।
प्राजापत्यकृच्छ्रमेकं भावनस्य शतं स्मृतम् ।। ३४ ।।

वर्मपञ्जरकीलकानां त्रिंशत्कृच्छ्रं फलं स्मृतम् ।
स्तवराजवेदपादहृदयानां पृथक् पृथक् ।। ३५ ।।
पञ्चाशदुदितं कृच्छ्रं लहर्याष्षष्टिरुच्यते ।
सहस्रनामस्तोत्रस्य कृच्छ्राशीतिफलं स्मृतम् ।। ३६ ।।
भावपूर्वजपस्यास्य षडब्दं फलमीरितम् ।
उपनिषदां गीतानां दर्शनानां पृथक् पृथक् ।। ३७ ।।
कृच्छ्राशीतिफलं प्रोक्तं पठनस्य विधानतः ।
भावपूर्वन्तु पठने षडब्दं फलमुच्यते ।। ३८ ।।
अध्यायपठनस्यैव माहात्म्येषु परात्मनः ।
प्राजापत्यकृच्छ्रमेकं फलं प्रोक्तं मनीषिभिः ।। ३९ ।।
कृच्छ्रत्रयञ्च ब्रह्माण्डे ब्राह्मे कृच्छ्रचतुष्टयम् ।
मारीचं पञ्चकृच्छ्रं षट् प्रोक्तं ज्ञानपुराणके ।। ४० ।।
गाणेशे सप्तकृच्छ्रं वै मौद्गलेऽष्टप्रकीर्तितम् ।
विनायकरहस्ये वै कृच्छ्राणां दश कीर्तितम् ।। ४१ ।।
पुण्यकालानुसारेण फलाधिक्यं प्रकीर्त्यते ।
गणेशमन्त्रसन्ध्यायाः कृच्छ्राणां दशकं स्मृतम् ।
गायत्र्या गणनाथस्य महागणपतेर्मनोः ।। ४२ ।।
गणानान्त्वेति मन्त्रस्य सहस्रसंख्यका वरा ।
शतकृच्छ्रफलं प्रोक्तं सामान्यपूजने तथा ।। ४३ ।।
षडब्दं विशेषस्य ह्यन्येषां क्रममार्गतः ।
एवं मानसपूजाया दशोत्तरफलं स्मृतम् ।। ४४ ।।
मानसार्चनकारिकायाः पठने ह्यब्दमीरितम् ।
आलये सेवनस्यैव गाणेशग्रन्थकीर्तिते ।। ४५ ।।

पञ्चविंशतिकृच्छ्रन्तु फलं विधिपुरस्सरम् ।
ब्राह्मणस्पत्यसूक्तेन वन्दनस्य शतं स्मृतम् ॥ ४६ ॥

चतुर्थ्योः पूजने तु सहस्रकृच्छ्रमीरितम् ।
श्रावणे मासि पूजाया लक्षकृच्छ्रफलं स्मृतम् ॥ ४७ ॥

गणेशस्य तु यत्प्रोक्तं सिद्धिबुद्ध्योस्तदर्थकम् ।
गणेशस्य तावदेव बुद्धिवत्फलमुच्यते ॥ ४८ ॥
शिवेन शक्तिविष्णूनां पादांशा गुणपस्य च ॥ ४९ ॥

इति मन्त्रादीनां कृच्छ्रफलनिरूपणम्

## सर्वकर्मणामादौ गणेशपूजाकारणनिरूपणम्

सनकादयः—

कर्मणामपि सर्वेषां आदौ पूज्यो गणाधिपः ।
अन्यथा न भवेत्सिद्धिरिति प्राहुश्च वैदिकाः ॥ ५० ॥
तत्कारणं क्रमं चापि वद नः परमेश्वर! ।

शिव उवाच—

महिम्निगं परं ब्रह्म स्वसंवेद्यस्वरूपकम् ।
मायामायिकभेदेन तदेव द्विविधं बभौ ॥ ५१ ॥

मायी तु निर्गुणं ब्रह्म माया गुणमयी स्मृता ।
द्वयोरनादिसंयोगरूपं वेदान्तघोषितम् ॥ ५२ ॥

सगुणं ब्रह्म कथितं बिन्दुरूपमिति स्मृतम् ।
चतुर्विधानां जगतां तदेव मूलकारणम् ॥ ५३ ॥
तेन मूलाधारगतमिति प्राहुश्च योगिनः ।
एतदेव गाणपतं ब्रह्मैव व्यावहारिकम् ॥ ५४ ॥

शुभाशुभवासनाढ्यं समष्टिव्यष्टिरूपकम् ।
कालाधीनं कर्मरूपं कालचक्रे निबद्धितम् ॥ ५५ ॥

चतुर्विधमिदं विश्वं सजीवेश्वररूपकम् ।
अव्याकृतो महाकालस्तस्मात् कालः परो न च ॥

सदसद्भावसंयुक्तस्स कालो द्विविधो मतः ।
असद्भावमयो विघ्नस्सत्कालोऽविघ्न उच्यते ॥ ५७ ॥

चतुर्विधानां जगतां कारणं यः परेश्वरः ।
कालस्यापि कारणं सः कर्मणामपि सत्तमः ॥ ५८ ॥

बुद्धिः कर्ममयी प्रोक्ता सिद्धिः कर्मफलात्मिका ।
बुद्धिर्ज्ञानमयी प्रोक्ता सिद्धिर्ज्ञानफलात्मिका ॥ ५९ ॥

सिद्धिबुद्धीपतिश्चायं गणेशः पञ्चमो विभुः ।
विघ्नाविघ्नज्ञानकर्मजगतां जनकस्स्मृतः ॥ ६० ॥

कर्मरूपधरा देवा बह्वश्श्रुतिकीर्तिताः ।
ब्रह्मसत्तासंयुताश्चेत् कर्मणः फलमुत्तमम् ॥ ६१ ॥

दातुं शक्ता भवेयुश्च नो चेच्छक्तिविवर्जिताः ।
सर्वेषां ज्येष्ठभावाच्च सर्वसत्ताधरः प्रभुः ॥ ६२ ॥

आदौ कर्मणि ज्ञाने च पूर्वं पूज्योऽभवच्छ्रुतौ ।
तस्य पूजनमात्रेण सर्वं स्वस्वस्थलेषु च ॥ ६३ ॥

तदाज्ञया तस्य सत्तायुतं तिष्ठति सत्तमाः! ।
तदा कर्म नराः कृत्वा फलयुक्ता भवन्ति च ॥ ६४ ॥

ज्येष्ठराजेति वेदेषु प्रोक्तस्य ब्रह्मणस्पतेः ।
ज्येष्ठभावेन प्रारम्भे पूजनं नास्ति चेद्द्विजाः! ॥ ६५ ॥

ज्येष्ठस्थाने बिन्दुमये नागच्छेद् ब्रह्मणस्पतिः ।
असन्मयस्वरूपत्वाद्विश्वमेतच्चराचरम् ॥ ६६ ॥

असत्कालेन विघ्नेन व्यावृतञ्च भवेत् द्विजाः! ।
विघ्नेन पीडिता विश्वं स्वसत्तापरिवर्जितम् ॥ ६७ ॥

भवेत्कर्म प्रकर्तुञ्च कर्मणः फलदायके ।
शक्तिहीनं भवेदेव तेनैव कर्मसिद्धये ॥ ६८ ॥

फलाप्त्यै कर्मणाञ्चापि सर्वसत्ताधरः प्रभुः ।
ज्येष्ठभावाच्च सर्वेषामग्रे पूज्य इति स्मृतः ॥ ६९ ॥

तदर्चनं विहीनं चेद् बुद्धिस्तु कर्मरूपिणी ।
तिरोभवेत्कर्मसिद्धिः पतिहीनत्वकारणात् ॥ ७० ॥

कालो भृत्यस्समागत्य विघ्नरूपेण वीक्षयेत् ।
कर्मदेवास्तस्य सत्तारहिताः कार्यसाधने ॥ ७१ ॥

फलदाने शक्तिहीना भवेयुः कर्मदेवताः ।
अत एव गणेशानस्सर्वदा येन केन वा ॥ ७२ ॥

मार्गेण पूजनीयस्स्यादिति वेदविदो विदुः ।
एकस्मिन् दिवसे विप्राः! नित्यत्वे कथितेषु च ॥ ७३ ॥

पदे पदे कार्यमाणकर्मणां वेदशासनात् ।
आदौ तु स्मरणारूपपूजनं परिकीर्तितम् ॥ ७४ ॥

निवेदनध्यानयुतमेकोपचारपूजनम् ।
एतत्कृत्वा गणेशानस्स्मर्तव्यस्तस्य नामभिः ॥ ७५ ॥

मूलाधारे वह्निचक्रे देहिनां तिष्ठति प्रभुः ।
सुधामयी महाबुद्धिर्मूर्ध्नि तिष्ठति देहिनाम् ॥ ७६ ॥

मूलाधारे गणेशानं ध्यात्वा तु मूर्ध्नि कुट्टनात् ।
सुषुम्ना रन्ध्रमार्गेण सुधा पतति विघ्नपे ॥ ७७ ॥

कुट्टनाधारध्यानाभ्यां गणेशः पूजितो भवेत् ।
एतत्कृत्वा गणेशानस्स्मर्तव्यो विघ्नशान्तये ॥ ७८ ॥

अन्येषामपि मन्त्राणां पूर्वं जप्यस्तु गाणपः ।
एकरूपो महामन्त्रो जप्तव्यो बहुवारकम् ॥ ७९ ॥

ओङ्काररूपी भगवान् पञ्चमो गणनायकः ।
ओङ्कारमन्त्रसंयुक्ता मन्त्रा वेदे प्रकीर्तिताः ॥ ८० ॥

ओङ्कारेण गणपतिर्जप्तस्तेन भवेद् ध्रुवम् ।
एकोपचारपूजावज्जप एषः प्रकीर्तितः ॥ ८१ ॥

इति सर्वकर्मणामादौ गणेशपूजाकारणनिरूपणम्

## दूर्वोत्पत्तिनिरूपणम्

सनकादयः—

दूर्वां विना गणेशस्य पूजनं निष्फलं त्विति ।
वदन्ति मुद्गलाद्याश्च कौण्डिन्यप्रमुखा अपि ॥ ८२ ॥

कथं दूर्वाऽभवत् प्रीता गणेशस्य वद प्रभो! ।

शिव उवाच—

देहपुष्टिकरं प्रोक्तमन्नन्तु सर्वदेहिनाम् ।
अन्नेन विश्वसृष्टिश्च जायते नात्र संशयः ॥ ८३ ॥

अन्नं देहपोषकञ्च तथा भोगकरं स्मृतम् ।
सिद्धिबुद्धिमयी माया गणेशदेहरूपिणी ॥ ८४ ॥

वामाङ्गरूपिणी सिद्धिस्तथा देहस्वरूपिणी ।
दक्षिणाङ्गमयी बुद्धिस्तथा मस्तकरूपिणी ॥ ८५ ॥
असंप्रज्ञातसमाधिस्तस्याङ्गं परिकीर्तितम् ।
निरोधचित्तरूपा तु तत्र बुद्धिः प्रकीर्त्यते ॥ ८६ ॥
तदुद्योगकरी सिद्धिस्समायामलरूपिणी ।
सिद्धिबुद्धिमयं चाङ्गं गणेशभोगरूपकम् ॥ ८७ ॥
क्षीराब्धिमथने पूर्वं विष्णुब्रह्मेन्द्रपूर्वगाः ।
विघ्नेन पीडिताः कार्यसिद्धिं नापुस्सुदुःखिताः ॥ ८८ ॥
तदा ब्रह्मा सिद्धिबुद्धी सस्मार सिद्धिहेतवे ।
बीजद्वयं समुद्धृत्य दत्वा ब्रह्माणमाहतुः ॥ ८९ ॥
बीजाभ्यां संभवेद् दूर्वा गणेशप्रियकारिणी ।
आवयोरंशसंभूता तया पूजय विघ्नपम् ॥ ९० ॥
इत्युक्त्वा ते तिरोऽभूतां तथा चक्रे विधिस्सुरैः ।
गणेशकृपया प्रापुस्सुधां देवा मुदान्विताः ॥ ९१ ॥
दूर्वायै गणनाथस्तु वरान्नानाविधान् ददौ ।
तथा ब्रह्मादयो देवा दूर्वायै प्रददुर्वरान् ॥ ९२ ॥
सिद्धिबुद्ध्यंशजातत्वाद् गणेशस्य प्रियाऽभवत् ।
पत्राणामपि सर्वेषां तेन श्रेष्ठा बभूव सा ॥ ९३ ॥

इति दूर्वोत्पत्तिनिरूपणम्

## स्वानन्दसौख्यनिरूपणम्

**सनकादयः—**

जाग्रत्स्थित्यां ब्रह्मलोको स्वाप्ने वै केशवस्य च ।
सौषुप्ते रुद्रलोकश्च तिष्ठन्तीति श्रुतौ स्मृतम् ॥ ९४ ॥

जाग्रन्मय अहङ्कारो महत् स्वाप्न उदीरितः ।
अव्यक्तमेव सौषुप्तमिति प्रोक्तं मनीषिभिः ॥ ९५ ॥

सत्वप्रधानमायाख्यस्थितिस्तु पुरुषात्मिका ।
गुणेशस्य लोक इति कथितो वेदवादिभिः ॥ ९६ ॥

बिन्दुमायास्थितिर्वेदे पञ्चमस्यैव ब्रह्मणः ।
स्थानं स्वानन्दभवनमिति प्रोक्तं मनीषिभिः ॥ ९७ ॥

एषां सुखे तारतम्यं वद नः परमेश्वर! ।

शिव उवाच—

ब्रह्मविष्णुहरेन्द्राणां लोकेभ्यः पतनं स्मृतम् ।
मुनीनां शापबाधा च दानवानाञ्च पीडनम् ॥ ९८ ॥

भवेद्येषु न सन्देहः सञ्चितं कर्म पीडयेत् ।
गुणेशस्य स्थितिर्वेदे ब्रह्मलोक इति स्मृतः ॥ ९९ ॥

पञ्चायतनदेवानां तत्र स्थानं प्रकीर्तितम् ।
गुणेशलोकगानान्तु पतनं न श्रुतौ स्मृतम् ॥ १०० ॥

ब्रह्मानुभवसंयुक्तास्तिष्ठन्ति सुखभोगिनः ।
अस्माच्छ्रेष्ठं वरं स्थानं स्वानन्दं स्वस्वरूपकम् ॥१०१॥
स्वस्वरूपमयं सौख्यं तत्र भुञ्जन्ति गाणपाः ।
स्वपरभ्रान्तिरहितास्सदानन्दसमन्विताः ॥ १०२ ॥

सत्यसंकल्पसंयुक्तास्तिष्ठन्त्यानन्दरूपिणः ।
गाणपास्तत्र तिष्ठन्ति प्रमोदप्रमुखा वराः ॥ १०३ ॥
मुद्गलाद्या मुनीशाना हृदये योगवैभवात् ।
स्वसंवेद्यब्रह्मसौख्यं भुञ्जन्ति योगपारगाः ॥ १०४ ॥

साष्टींसौख्यं मुद्गलस्तु भ्रुसुण्डिशम्भुनन्दनौ ।
सारूप्यसुखभोक्तारौ सामीप्यं गार्ग्यपूर्वकाः ।। १०५ ।
अन्ये सलोकसौख्यञ्च भुञ्जन्ति योगवैभवात् ।।

इति स्वानन्दसौख्यनिरूपणम्

### स्वर्गलोकस्थगणपतिस्वरूपकथनम्

सनकादयः—

सारूप्यसुखभोक्ता तु गणेशस्य परात्मनः ।
शिवपुत्र इति प्रोक्तः कश्चिदन्यो भ्रुसुण्डिना ।। १०६ ।।
स्वरूपमपि चारित्रं शिवपुत्रस्य नो वद ।

शिव उवाच—

कैलासपर्वते चाहं पार्वत्या क्रीडनोत्सुकः ।
गजरूपो बभूवाहं तथैव पार्वती बभौ ।। १०७ ।।
आवयोः क्रीडनाज्जातो बालो रक्तगजान्वितः ।
गृहीत्वा बालकं तत्तु कैलासान्तर्गतौ ततः ।। १०८ ।।
गणानामाधिपत्ये तु स्थापितो मम नन्दनः ।
बहुवारं गणेशानो बभूव मम नन्दनः ।। १०९ ।।
गणेशरूपयुक्तत्वाद् बालको मम नन्दनः ।
ब्रह्मविष्णुसुरेन्द्राद्यैर्मयायं मम पुत्रकः ।। ११० ।।
तथा विघ्नाधिपत्ये तु स्थापितश्चापि पूजितः ।
सर्वेषामग्रपूज्योऽयं बभूव मद्वरेण च ।। १११ ।।
स तु योगबलेनैव समाराध्य गणाधिपम् ।
एकाक्षरविधानेन तोषयामास सादरम् ।। ११२ ।।

सिद्धिबुद्धियुतो देवः प्रसन्नः प्राह शम्भुजम् ।
शंभुपुत्र! महाभक्त! मम सारूप्यसंयुत! ।। ११३ ।।

मम नामसंयुतत्वात् मम रूपसमन्वितः ।
ममैवांशसमुद्भूतं त्वां वदिष्यन्ति योगिनः ।। ११४ ।।

मम मन्त्रनामभिश्च पूजनं ते भविष्यति ।
पूजितोऽहं तेन तवरूपी तत्त्वं न संशयः ।। ११५ ।।

मन्नाममन्त्रश्रवणान्नश्येयुर्विघ्नसंचयाः ।
तेन विघ्नाधिपत्यं ते शम्भुदत्तं स्थिरीकृतम् ।। ११६ ।।

शान्तियोगधरो भूत्वा सर्वदा मम भावनम् ।
धृत्वा त्वं हृदये वत्स! स्वर्गस्वानन्दसंज्ञिके ।। ११७ ।।

क्षेत्रे मे सर्वदा तिष्ठ कुमुदादिगणान्वितः ।
देहान्ते मम सायुज्यं प्राप्स्यसि त्वं न संशयः ।। ११८।।

स्वर्गस्वानन्दभवने स्वानन्दसौख्यमुत्तमम् ।
भुङ्क्ष्व त्वं हृदये नित्यमित्युक्त्वा स तिरोऽभवत् ।।

सिद्धिबुद्धीपतिं ब्रह्म ध्यात्वा तिष्ठति वै हृदि ।
अयं शंभुसुतश्श्रीमान् स्वर्गस्वानन्दवासकृत् ।। १२० ।।

इति स्वर्गलोकस्थगणपतिस्वरूपकथनम् ।

ब्रह्मोवाच—

अर्धसाहस्रग्रन्थैश्च शोभितं हृदयन्त्विदम् ।
सनकाद्याश्च ते सर्वे मुनयो ज्ञानसंयुताः ।। १२१ ।।

सिद्धाश्रमपदं गत्वा योगमार्गरता बभुः ।
संप्रज्ञातसमाधेस्तु सिद्ध्या नारदपूर्वकाः ।। १२२ ।।

पञ्चमे संस्थिते जातास्सनकाद्यास्सुयोगिनः ।
विदेहप्रकृतिलयैर्भवपूर्णे सुसंस्थिताः ।। १२३ ।।

बभूवुश्शुकदत्ताद्या भवोयस्रसंज्ञिकौ ।
अतिक्रम्य चित्तलयैः शान्तिं प्रापुर्मुदान्विताः ।। १२४।।

इदं गणेशहृदये पूर्वार्द्धमिति कीर्तितम् ।
अस्य श्रवणमात्रेण पातकेभ्यो नरा भुवि ।। १२५ ।।

मुच्यन्ते नात्र सन्देहः गाणेशज्ञानमाप्नुयुः ।
धर्ममर्थञ्च कामञ्च मोक्षञ्चापि नरो लभेत् ।।१२६।।

यं यं कामं समुद्दिश्य पठते मानवस्त्विदम् ।
तं तं काममवाप्नोति प्रसादाद् ब्रह्मणस्पतेः ।। १२७ ।।

इति श्रीब्रह्मज्ञानसुखोदये महेतिहासे प्रथमखण्डे विष्णुसंहितायां विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे गणेशपूर्वहृदये
चतुर्थोऽध्यायः
गणेशपूर्वहृदयं सम्पूर्णम्

## पञ्चमोऽध्यायः

### गणेशोत्तरहृदयम्

### उत्तरहृदयोपोद्घातः

उद्दालकादयः—

योगशान्तिविरहितास्संस्थिता भवप्रत्यये ।
ततः परञ्च किं चक्रुस्तन्नस्त्वं ब्रूहि पद्मज! ।। १ ।।

सिद्धाश्रमे महापुण्ये योगिनस्सनकादयः ।
महावाक्यानुसन्धानरूपकं भावनात्मकम् ।। २ ।।

तपश्चक्रुर्महाघोरमसंप्रज्ञातमास्थिताः ।
तपसा पीड्यमानास्ते देवर्षिप्रमुखा विधिम् ।। ३ ।।

मनोवत्यां सुखासीनं ब्रह्माणं शरणं ययुः ।
आविर्बभूव पुरतस्तेषां ब्रह्मा सुरैस्सह ।। ४ ।।

उवाच तनयान् ब्रह्मा तपसा क्लेशितान् भृशम् ।

ब्रह्मोवाच—

वरं वृणुत यूयन्तु यद्यन्मनसि वर्तते ।
दास्यामि तत् तथैवाहं यतो यूयं ममात्मजाः ।। ५ ।।

सनकादयः—

न महावाक्यरूपी त्वं त्वंपदार्थस्वरूपवान् ।
अकारमात्रवाच्यस्त्वं न पूर्णं त्वंपदं त्वयि ।। ६ ।।

अतस्त्वत्तो वरं मास्तु गच्छ तात यथासुखम् ।
एवमुक्त्वा पुनर्ध्यानरता जातास्सुयोगिनः ।। ७ ।।

आविर्बभूव पुरतस्तेषां विष्णुरुवाच तान् ।

विष्णुः—

महावाक्यानुसन्धानात्तुष्टोऽहं सनकादयः! ।
वरं वृणुत यूयन्तु दास्ये यूयं ममांशजाः ।। ८ ।।

सनकादयः—

न महावाक्यरूपी त्वं त्वंपदार्थस्वरूपवान् ।
उकारमात्रवाच्यस्त्वं न पूर्णं त्वंपदं त्वयि ।। ९ ।।

तस्मात्त्वत्तो वरं मास्तु गच्छ तात यथासुखम् ।
एवमुक्त्वा पुनर्ध्यानरता जातास्सुयोगिनः ।। १० ।।

आविरासीत् पुरस्तेषां महारुद्रो गणैस्सह ।
उवाच तान् कृपादृष्टया वीक्ष्य गौरीसमन्वितः ॥११॥

शिव उवाच—

महावाक्यानुसंधानात्तुष्टोऽहं सनकादयः! ।
वरं वृणुत यूयन्तु दास्ये मे शिष्यसत्तमाः! ॥ १२ ॥

सनकादयः—

न महावाक्यरूपी त्वं त्वंपदार्थस्वरूपवान् ।
मकारमात्रवाच्यस्त्वं न पूर्णं त्वंपदं त्वयि ॥ १३ ॥

तस्मात् त्वत्तो वरं मास्तु गच्छ तात यथासुखम् ।
एवमुक्त्वा ध्याननिष्ठा बभूवुर्योगिसत्तमाः ॥ १४ ॥

आविरासीत्पुरस्तेषां हिरण्यपुरुषो रविः ।
उवाच तान् मुनीशानान् ब्रह्मविष्णुशिवात्मकः ॥ १५ ॥

सूर्य उवाच—

वरं वृणुत यूयन्तु महावाक्यसुतोषितः ।
दास्ये सत्यं न सन्देहो मण्डलान्तर्गतो ह्यहम् ॥ १६ ॥

सनकादयः—

न महावाक्यरूपी त्वं त्वंपदार्थस्वरूपवान् ।
सर्वेषां जगतामात्मा साक्षाज्जीवो न संशयः ॥ १७ ॥

त्वंपदार्थमयेष्वेव तुरीयस्त्वं न संशयः ।
प्रणवे त्वन्तु नादांशमयस्सत्यं न संशयः ॥ १८ ॥

त्वंपदार्थमयात्त्वत्तस्त्रिगुणाहंकृतेर्धरात् ।
वरं मास्तु दिनेशान! गच्छ तात! यथासुखम् ॥ १९॥

पुनस्ते ध्याननिरता बभुवुर्योगिसत्तमाः ।
अव्याकृतो गुणेशानो नाददेहधरः प्रभुः ।। २० ।।
आविरासीत्पुरस्तेषां प्रावदत्तान् गुणेश्वरः ।

गुणेश उवाच—

महावाक्यानुसन्धानात्तुष्टोऽहं सनकादयः! ।
वरं वृणुत यूयन्तु दास्ये वो नात्र संशयः ।। २१ ।।

सनकादयः—

न महावाक्यरूपी त्वं तत्पदार्थस्वरूपवान् ।
नाददेहधरस्त्वन्तु मात्रात्रयमयस्स्मृतः ।। २२ ।।

असि त्वया गुणेशान! नास्त्वतो गच्छ सत्तम! ।
त्वत्तोऽस्माकं वरं मास्तु वरदाता गजाननः ।। २३ ।।

एवमुक्त्वा पुनर्ध्यानरता जाताश्च योगिनः ।
गुणेशस्मरणादेव पञ्चमो गणनायकः ।। २४ ।।

गजाननस्सिद्ध्यगतस्सिद्धिबुद्धीसमन्वितः ।
पञ्चदेवगुणेशाद्यैस्सेवितस्स्वगणैर्वृतः ।। २५ ।।

तेषाञ्च पुरतो देवो गणेशः प्रकटोऽभवत् ।
गजाननं योगिवरा नत्वा प्राहुर्मुदान्विताः ।। २६ ।।

सनकादयः—

व्याकृतं त्रिविधं विश्वं त्वंपदार्थस्वरूपकम् ।
शरीरस्ते गणेशान! कण्ठाधो नरवाचकम् ।। २७ ।।

अव्याकृतं तुरीयन्तु तत्पदार्थस्वरूपकम् ।
कण्ठकूपादूर्ध्वभागशरीरे गजवाचकम् ।। २८ ।।

द्वयोरभेदभावाख्यां पूर्णाङ्गोऽसि प्रकीर्तितः ।
तत्त्वमस्याकृतिधरो गणेशस्त्वं गजानन! ।। २९ ।।

बिन्द्वादिपूर्णयोगान्तमेतादृशस्वरूपकम् ।
महावाक्याकृतिधरं वाञ्छामस्त्वां वयं प्रभो! ।। ३० ।।

गणेश उवाच—

वरान् वृणुत यूयन्तु दास्यामि नात्र संशयः ।

सनकादयः—

ब्रह्मविष्णुमहेशेभ्यो विद्याष्षोडश संश्रुताः ।
तथापि सन्ति सन्देहाः छिन्धि तान् कृपया विभो! ।।

गणेश उवाच—

एष भक्तो महायोगी सर्ववेत्ता कुशाग्रधीः ।
ब्रह्मविष्णुमहेशाद्यैर्वन्द्योऽयं गणको महान् ।। ३२ ।।

साक्षाद्गुणेशरूपोऽयं पुत्रो मे लक्षदायकः ।
यद्यत्पृच्छत यूयं तं तत्तत्सर्वं वदेद् ध्रुवम् ।। ३३ ।।

एवमुक्त्वा गणेशानस्तिरोभूत्सिद्धिबुद्धिपः ।
आज्ञया गणनाथस्य गणको ब्रह्मवित्तमः ।। ३४ ।।

परब्रह्मगुरुश्श्रीमान् चतुर्भिर्गुरुसत्तमैः ।
उपाविशद् गणेशानं ध्यात्वा वै दक्षिणामुखः ।। ३५ ।।

उत्तराभिमुखा भूत्वा योगिनस्समुपादिशन् ।
ब्रह्मविष्णुहरेन्द्राद्या देवाश्शक्तिगणान्विताः ।। ३६ ।।

सिद्धाश्च योगिनो देवा मुनयो ऋषिसत्तमाः ।
आगत्य गणकं नत्वा परितस्समुपाविशन् ।। ३७ ।।

ततो नत्वा परं ब्रह्म गुरुं तं सनकादयः ।
हृद्गतान् सर्वसन्देहान् विनयात् प्रष्टुमारभन् ।। ३८ ।।

इत्युत्तरहृदयोपोद्घातः

ब्रह्मस्वरूपनिरूपणम्

सनकादयः—

ब्रह्मस्वरूपं नो ब्रूहि लक्षणं चापि देशिक ! ।

गणक उवाच—

तत्त्वमसीति त्रिपदातीतं स्वस्य महिम्निगम् ।
मनोवाग्गतिशून्यं तद् योगशान्तिमयं परम् ।। ३९ ।।

भूमारूपमनिर्देश्यं ब्रह्मेति कथितं श्रुतौ ।
तत्त्वमसीति त्रिपदाध्यारोपरूपिणी परा ।। ४० ।।

वैनायिकी महामाया स्वसंवेद्यस्वरूपिणी ।
अध्यारोपसुसिद्ध्यर्थं भिन्नभानधराऽभवत् ।। ४१ ।।

मोहदा मोहधरेति द्विधा सा कथ्यते श्रुतौ ।
मोहदात्री महासिद्धिर्बुद्धिर्मोहधरा मता ।। ४२ ।।

सिद्धिबुद्धिगतं ब्रह्म साक्षादात्मेति कथ्यते ।
अध्यारोपवत्सु वेदे काष्ठाभूतं तदीरितम् ।। ४३ ।।

अस्य शीर्षमयी बुद्धिस्सिद्धिर्देहमयी स्मृता ।
स्वसंवेद्यमयं चैतत् स्वानन्दं ब्रह्म कथ्यते ।। ४४ ।।

असि लक्ष्यवत्सु चैतत् काष्ठाभूतं प्रकीर्तितम् ।
विद्याविद्येति द्विविधा माया जाता सलक्ष्यकात् ।।४५।।

स्वानन्दरूपिणी विद्या सच्चिदानन्दरूपिणी ।
निरुपाधिकमायेति वेदादिषु निरूप्यते ।। ४६ ।।

विद्यागतं ब्रह्मबिम्बं शुद्धं तन्निर्गुणं स्मृतम् ।
परमात्मा परं ब्रह्म गजस्तन्निर्गुणः परः ।। ४७ ।।

एतादृशानि नामानि कल्पितान्यस्य योगिभिः ।
सोपाधिमायाऽविद्या स्याद् बिन्दुप्रणवरूपिणी ।। ४८ ।।

चतुर्विधजगत्पादसंयुता पञ्चमी मता ।
सोपाधिमायायुक्तं तद् बिन्दुरूपं परात्परम् ।। ५९ ।।

पूर्णोङ्कारमयं ब्रह्म सगुणं प्रणवात्मकम् ।
पुरुषस्सगुणो जीवो नरो वै व्यावहारिकः ।। ५० ।।

एतादृशानि नामानि कल्पितान्यस्य योगिभिः ।
सगुणं त्वंपदं ब्रह्म निर्गुणं तत्पदात्मकम् ।। ५१ ।।

द्विभावसंयुतं यच्च द्विभावपरिवर्जितम् ।
असिरूपमिति प्रोक्तं ब्रह्म स्वानन्दसंज्ञिकम् ।। ५२ ।।

त्रिभावसंयुतं यच्च त्रिभावपरिवर्जितम् ।
भूमारूपन्तु तद् ब्रह्म योगशान्तिमयं स्मृतम् ।। ५३ ।।

एवं चतुर्विधं ब्रह्म वेदादिषु निरूपितम् ।
महिम्निगं भूमिरूपं व्यवहारविवर्जितम् ।। ५४ ।।

गुणनिर्गुणभावाभ्यां स्वानन्दसंज्ञिकं परम् ।
असिरूपन्तु सद् ब्रह्म नानाखेलकरं मतम् ।। ५५ ।।

जगद्विहारसंयुक्तं सगुणं प्रणवात्मकम् ।
निर्गुणं तु परं ब्रह्म विहारस्य प्रकाशकम् ।। ५६ ।।

गुणनिर्गुणभावाभ्यां स्वानन्दं खेलकं स्मृतम् ।
सोपाधिकस्सर्वत्र श्रुत्या ग्राह्यो गुणात्मकः ।। ५७ ।।

व्यवहारेषु वेदेषु न तथा निर्गुणाधिकम् ।
चर्तुविधजगत्सृष्टिः पञ्चमादेव नान्यथा ।। ५८ ।।

एवं चतुर्विधं ब्रह्म निगमेषु निरूपितम् ।
अनेककोटिब्रह्माण्डधारकं पुरुषं परम् ।। ५९ ।।

अव्याकृतं विश्वरूपं प्राहुर्ब्रह्म च केचन ।
एषां मते पञ्चधा तु ब्रह्मैकं सुनिरूप्यते ।। ६० ।।

तदोंसदिति भेदेन त्रिधा प्राहुश्च केचन ।
गाणेशानां मतञ्चैतत्तापिनीश्रुतिमार्गतः ।। ६१ ।।

इति ब्रह्मस्वरूपनिरूपणम्

## ईश्वरस्वरूपनिरूपणम्

सनकादयः—

ईश्वरस्य स्वरूपं नः कृपया वद सत्तम! ।

गणक उवाच—

पूर्णोङ्कारमयाद्बिन्दोस्सगुणात् पञ्चमात् प्रभोः ।
ध्वनिरूपा महामाया विशुद्धसत्वरूपिणी ।। ६२ ।।

सञ्जाता तद्गतं ब्रह्म मायागुणत्रयान्वितम् ।
ईशोऽयं मायाशबलः पुरुषस्तु तुरीयकः ।। ६३ ।।

अव्याकृत इति प्रोक्तो गुणेशश्चेति कथ्यते ।
महाकारणनामायं तुरीयदेहधारकः ।। ६४ ।।

अस्मात्तमप्रधानाभून्माया कारणरूपिणी ।।
तथा कारणदेहयुक् ईश्वरश्चेति कथ्यते ।। ६५ ।।

अयमेव कारणं स्यात्स्थूलसूक्ष्मप्रपञ्चयोः ।
एवमोशो द्विधा प्रोक्तो वेदादिषु मुनीश्वराः ! ।। ६६ ।।

समष्टिसूक्ष्मदेहाढ्यो हिरण्यगर्भसंज्ञकः ।
तथा स्थूलदेहयुतो विराडिति श्रुतौ स्मृतः ।। ६७ ।।

इतीश्वरस्वरूपनिरूपणम्

## सांख्यवैदिकसिद्धान्तभावकथनम्

सनकादयः—

अव्यक्तादीनि तत्त्वानि सांख्याः प्राहुर्मुनीश्वराः ।
आकाशाच्च परं तत्त्वं नाङ्गीकुर्वन्ति केचन ।। ६८ ।।

उभयोरपि सिद्धान्तं ब्रूहि तत्त्वविशारद! ।

गणकः—

अहंकारगतं ब्रह्म जाग्रद्ब्रह्म प्रकीर्तितम् ।
जाग्रत्स्वभिमानधरं तदेव कथ्यते बुधैः ।। ६९ ।।

महत्तत्त्वगतं ब्रह्म सूक्ष्माभिमानधारकम् ।
स्वाप्नाभिमानधरमित्येतत् परिकीर्तितम् ।। ७० ।।

अव्यक्तगमीश्वराख्यं कारणे देहके वरे ।
अभिमानधारकं स्यात्सौषुप्ते चापि धारकम् ।। ७१ ।।

अव्यक्तादीनि तत्त्वानि त्रीणि चात्ममयानि च ।
'अन्नं ब्रह्मे'त्यादि वेदे ब्रह्मत्वे कथितानि च ।। ७२ ।।

आकाशादीनि जातानि जाग्रद्ब्रह्ममयात् प्रभोः ।
अतः प्राहुर्मुनीशाना व्योमसृष्टिं विशेषतः ।। ७३ ।।

आकाशादपि सूक्ष्माणि ह्यहङ्कारमुखानि च ।
ईश्वरस्य शरीरत्वे त्रीणि प्रोक्तानि योगिभिः ।। ७४ ।।

मायाभेदस्वरूपत्वे त्रीण्यपि कथितानि च ।
जीवानां देहतत्वे तु तेषां नास्ति प्रयोजनम् ।। ७५ ।।

संप्रज्ञातसमाधेश्च धारणे योगिसत्तमैः ।
तेषां स्वरूपमाख्यातं तेनैव योगिसत्तमाः ।। ७६ ।।

गणयन्ति तानि केचित् केचिन्न गणयन्ति च ।
संख्यां कृत्वा यत्र वेदास्तत्त्वानां मौनमाश्रिताः ।। ७७।।

संख्यातीतं परं ब्रह्म सांख्यं चेति प्रकीर्तितम् ।
अव्यक्ताच्च परो यस्तु गुणेशः पुरुषाभिधः ।। ७८ ।।

विशुद्धसत्वमायाग ईश्वरश्चेति कथ्यते ।
मलिनसत्वाऽविद्या स्यात् क्षेत्रज्ञस्तद्गतस्स्मृतः ।।७९ ।।

ईश्वरांशमयश्चायं कार्योपाधिप्रधारकः ।
सृष्टेः पूर्वं तु जगतां व्याकृतानां मुनीश्वराः ।। ८० ।।

प्रधानक्षेत्रज्ञयुतो गुणेशश्चैव तिष्ठति ।
प्रधानक्षेत्रज्ञपतिर्गुणेश इति योगिनः ।। ८१ ।।

श्वेताश्वतरवेत्तारो मन्यन्ते वेदवादिनः ।
जीवेश्वरौ च ब्रह्मापि पुरुषाश्चेति कीर्तिताः ।। ८२ ।।

जीवो देहधरः प्रोक्तस्तेनायं पुरुषस्स्मृतः ।
अन्तर्यामी च देहेष्वीश्वरोऽतः प्रकीर्तितः ।। ८३ ।।

तत्र साक्षी परं ब्रह्म तेनैव पुरुषो मतः ।
निरीशसांख्यमार्गस्था अज्ञात्वा परमेश्वरम् ।। ८४ ।।

वदन्ति पुरुषं जीवं प्रधानस्य वशं गतम् ।
सेशसांख्या गुणेशानमीश्वरं प्रवदन्त्युत ।। ८५ ।।

साक्षिणं पुरुषं प्राहुरद्वैतमार्गिणः परे ।
अद्वैतिनां मतं वेदसिद्धान्तो मुनिसत्तमाः! ।। ८६ ।।

इति सांख्यवैदिकसिद्धान्तभावकथनम्

## त्रिमूर्तिस्वरूपकथनम्

सनकादयः—

ब्रह्मविष्णुहरादीनां स्वरूपमपि नो वद ।

गणक उवाच—

चतुर्विधजगद्रूपधारकं पञ्चमं मतम् ।
पूर्णोङ्कारमयं तत्तु चिन्मयायोगरूपकम् ।। ८७ ।।

तदेव सर्वसाक्षि स्याज्जीवेशजगतामपि ।
चतुष्पादयुतं प्रोक्तं चतुष्पादविवर्जितम् ।। ८८ ।।

मायया संयुतं चापि मायोपाधिविवर्जितम् ।
गुणत्रययुता माया गुणशान्तिमवाप्य सा ।। ८९ ।।

बिन्दुरूपधरा तस्य देहरूपेण तिष्ठति ।
शुद्धसत्वप्रधाना तु तस्माज्जाता तदिच्छया ।। ९० ।।

तद्गतं तस्य बिम्बं वै ईश्वरस्तु गुणेश्वरः ।
स एव पुरुषः प्रोक्तो वेदेषु परमेश्वरः ।। ९१ ।।

अयं तुरीयः पुरुषो न तृतीयः प्रकीर्तितः ।
तमःप्रधाना सञ्जाता सृष्ट्यादौ प्रकृतिः परा ॥९२॥

प्रकृतेश्च गुणा भिन्नाः पुरुषस्यैव वीक्षणात् ।
गुणेषु पतितं बिम्बमीश्वरस्य परात्मनः ॥ ९३ ॥

रजोगुणगतो ब्रह्मा तथा सत्त्वगतो हरिः ।
तमोगुणगतो रुद्रश्शक्तिस्तु त्रिगुणात्मिका ॥ ९४ ॥

त्रिगुणाहंकृतिधरो भान्वाख्यः पुरुषः परः ।
एते वै पञ्चदेवाश्च पञ्चकृत्यपरायणाः ॥ ९५ ॥

एषु ब्रह्मा सृष्टिकर्ता पालको विष्णुरुच्यते ।
हर्ता रुद्रः कर्ममयो भानुः कालप्रदर्शकः ॥ ९६ ॥

कृत्यत्रयमयी शक्तिः पञ्चस्वपि त्रिमूर्तयः ।
कृत्यत्रयपरत्वाच्च कथ्यन्ते मुख्यभावतः ॥ ९७ ॥

यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणः ।
संहाराय त्रिमूर्तीनां स रुद्रस्स्यान्न चापरः ॥ ९८ ॥

तथा यस्य तमस्साक्षात् शरीरं सात्विको गुणः ।
पालनाय त्रिमूर्तीनां स विष्णुस्स्यान्न चापरः ॥ ९९ ॥

रजो यस्य शरीरं स्यात्तदेवोत्पादनाय च ।
त्रिमूर्तीनान्तु स ब्रह्मा भवेद्विप्राः! न चापरः ॥ १०० ॥

गुणावस्थादेहभूतकोशाधिपत्यधारणात् ।
पञ्चानां मूर्तयो भिन्नाः कथिता निगमेषु च ॥ १०१ ॥

जाग्रदभिमानधरो ब्रह्मा स्वाप्नधरो हरिः ।
सौषुप्ताभिमानधरो रुद्रस्संहारकारकः ॥ १०२ ॥

अवस्थात्रयमयी शक्तिस्त्रिष्वहंकृतिधारकः ।
भानुस्स्थूलधरो ब्रह्मा विष्णुस्सूक्ष्मप्रधारकः ॥ १०३ ॥

रुद्रः कारणदेहो स्यात्त्रिदेहसंयुता शिवा ।
देहत्रयधरस्सूर्यो निगमेषु निरूप्यते ॥ १०४ ॥

पृथ्वीतत्त्वमयो ब्रह्मा जलतत्त्वमयो हरिः ।
वह्नितत्त्वमयो रुद्रस्त्रयाणामपि भास्करः ॥ १०५ ॥

प्राणतत्त्वमयी शक्तिः स्वतत्त्वस्य गणेश्वरः ।
आनन्दमयकोशस्य देवता विष्णुरुच्यते ॥ १०६ ॥

विज्ञानस्य शिवः प्रोक्तो भास्करस्तु मनोमयः ।
प्राणकोशस्य ब्रह्मा स्यादन्नकोशस्य शङ्करी ॥ १०७ ॥

एवञ्चाधिपत्ययुताः पञ्च देवाः प्रकीर्तिताः ।
षण्मुखः कालरुद्रो वै ईशानो नीललोहितः ॥ १०८ ॥

रुद्रस्य मूर्तयः प्रोक्ता महारुद्रो गुणात्मकः ।
विज्ञानकोशदेवस्तु षण्मुखो रुद्रनन्दनः ॥ १०९ ॥

अग्नेः कालाग्निरुद्रस्स्यात् सुषुप्तिधारको हरः ।
ईशानो दिक्पतिः प्रोक्तः कुमारो नीललोहितः ॥११०॥

स्थाणुः कारणदेहस्य देवता परिकीर्तितः ।
वैकुण्ठवासी भगवान् सत्त्वस्य देवता स्मृतः ॥ १११ ॥

आनन्दमयकोशस्य राधाकृष्णः प्रकीर्तितः ।
अपां च देवता विष्णुः क्षीरसागरमध्यगः ॥ ११२ ॥

यज्ञरूपी महाविष्णुस्सूक्ष्मदेहस्य देवता ।
स्वप्नावस्थादेवता स्याद्धर्मरूपी जनार्दनः ॥ ११३ ॥

मनोवतीगतो ब्रह्मा पृथिवीतत्त्वदेवता ।
प्राणकोशमुखानाञ्च सत्यलोकगतो विधिः ।। ११४ ।।

रजोगुणमयो ब्रह्मा ब्रह्मलोकगतस्स्मृतः ।
मूर्तित्रयं पञ्चकं वा वदन्त्येषां सुयोगिनः ।। ११५ ।।

देहत्रययुतौ प्रोक्तौ जीवेशौ वेदमार्गतः ।
समष्टिरीश्वरः प्रोक्तो व्यष्टिर्जीव इति स्मृतः ।।११६।।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
समष्टिव्यष्ट्यभेदे वै ब्रह्म प्राहुर्मनीषिणः ।। ११७ ।।

ईश्वरस्तु तुरीयस्स्याज्जीवश्चापि तुरीयकः ।
द्वयोरभेदभावे वै ब्रह्म प्राहुश्च पञ्चमम् ।। ११८ ।।

ईश्वरो द्विविधः प्रोक्तः कार्यकारणभेदतः ।
ब्रह्मा विष्णुश्च रुद्रश्च शक्तिश्च दिननायकः ।। ११९ ।।

कार्येशमूर्तयः प्रोक्ताः कार्येशः पञ्चधा स्मृतः ।
गुणेशशक्तिगोविन्दमहेशदिननायकाः ।। १२० ।।

कारणेशमूर्तयस्स्युस्स चैवं पञ्चधा स्मृतः ।
ब्रह्मत्वमीश्वरत्वञ्च कथितं ब्रह्मणस्पतेः ।। १२१ ।।

पञ्चमं ब्रह्म कथितं तुरीयमीश्वरात्मकम् ।

इति त्रिमूर्तिस्वरूपकथनम्

## वाणीरमापार्वतीनां स्वरूपकथनम् ।

सनकादयः—

वाणीरमापार्वतीनां स्वरूपं ब्रूहि देशिक! ।

गणक उवाच—

प्रकृतेस्तु गुणा भिन्ना जाता पुरुषवीक्षणात् ।
गुणगं ब्रह्मणो बिम्बं वीक्षणात् परमात्मनः ।। १२२ ।।

शक्तिपुरुषभेदेन द्विधा जातं सदिच्छया ।
आदिभागश्शक्तिरूपो द्वितीयः पुरुषात्मकः ।। १२३ ।।

तमसः कालिकाविष्णू रजसः कमलाविधी ।
सत्वाच्च भारतीरुद्रौ सञ्जाता लोकनायकाः ।।१२४।।

गुणेषु दक्षिणो भागः स्त्रीरूप इति कथ्यते ।
सत्वन्तु रजसो वामं सत्वस्य तम उच्यते ।। १२५ ।।

तमसस्तु रजः प्रोक्तं यस्य वामे तु या स्थिता ।
तस्य सा वनिता प्रोक्ता तेन रुद्रस्य कालिका ।।१२६।।

विष्णोस्तु कमला वाणी ब्रह्मणश्शक्तयस्स्मृताः ।
गुणमूर्तिधराणान्तु शक्तयश्चैवमीरिताः ।। १२७ ।।

इति वाणीरमापार्वतीनां स्वरूपकथनम्

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
गणेशोत्तरहृदये पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

### गणपतिस्वरूपनिरूपणम्

सनकादयः—

स्वरूपं गणराजस्य सम्यग्ब्रूहि दयानिधे! ।

गणक उवाच—

सर्वं यत्र शान्तिमेति भूमारूपं महिम्निगम् ।
अध्यारोपापवादाभ्यां विहीनं ब्रह्म तत्स्मृतम् ।। १ ।।

अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्चयते ।
इति न्यायं समाश्रित्य वच्मि तत्र सुसंस्थितः ।। २ ।।

अध्यारोपमयी माया संयोगानन्दरूपिणी ।
अनादावुत्थिता योगरूपिणी ब्रह्मसागरात् ।। ३ ।।

तद्गतं ब्रह्मबिम्बन्तु साक्षादात्मात्मकं स्मृतम् ।
संयोगस्वानन्दसंज्ञं ब्रह्मैतदसिलक्ष्यकम् ।। ४ ।।

आत्मायं तु स्वयंज्योतिर्गुणनिर्गुणवर्जितः ।
गुणनिर्गुणसंयुक्तस्वस्वरूपधरो मतः ।। ५ ।।

आत्ममाया द्विधा भिन्ना सिद्धिबुद्धीति भेदतः ।
पञ्चचित्तवृत्तिमयी महाबुद्धिरिति स्मृता ।। ६ ।।

चित्तहर्षविषादादिमोहदा सिद्धिरीरिता ।
संयोगस्वानन्दं ब्रह्म मायैवं द्विविधा स्मृता ।। ७ ।।

मूर्द्धा तस्य महाबुद्धिस्सिद्धिर्देहमयी स्मृता ।
तदेव द्विविधं जातं स्वेच्छया खेलनाय च ।। ८ ।।

जगद्विहारसिद्ध्यर्थं तदेव सगुणं बभौ ।
तद्विहारप्रकाशार्थं तदेव सगुणं बभौ ।। ९ ।।

द्वयोरभेदभावाख्यं महिम्नि स्वस्य संस्थितम् ।
ओङ्कारं सगुणं ब्रह्म निर्गुणं तदिति स्मृतम् ।। १० ।।

स्वस्वरूपन्तु सद्ब्रह्म साक्षादसिपदात्मकम् ।
एवं तु त्रिविधं ब्रह्म गाणपं परिकीर्तितम् ।। ११ ।।

गुहा बुद्धिरिति प्रोक्ता सिद्धिर्हर्षविषाददा ।
सिद्धिबुद्धौ संस्थितं तत् त्रिविधं त्रिपदात्मकम् ।। १२ ।।

गुहायां निहितं ब्रह्म सत्यं ज्ञानमनन्तकम् ।
सत्यन्तु सगुणं ब्रह्म त्वंपदार्थमयं स्मृतम् ।। १३ ।।

ज्ञानं तु निर्गुणं ब्रह्म तत्पदार्थमयं स्मृतम् ।
स्वस्वरूपमनन्ताख्यमसिरूपमिति स्मृतम् ।। १४ ।।

एवं तु त्रिविधं प्रोक्तं ब्रह्म वेदे गुहाहितम् ।
नानाभावधारकन्तु सगुणं तद् गकारकम् ।। १५ ।।

नानाभावविहीनं तन्निर्गुणं तणकारकम् ।
एवं द्विभावसंयुक्तमीश्वराख्यं द्वयोरपि ।। १६ ।।

स्वस्वरूपं परं ब्रह्म गणेशश्चेति कथ्यते ।
तस्यैव मस्तकं प्रोक्तं निर्गुणं गजवाचकम् ।। १७ ।।

कण्ठाधस्सगुणं ब्रह्म तस्यैव नरवाचकम् ।
द्वयोरभेदभावे तु गजाननस्वरूपकम् ।। १८ ।।

शब्दार्थसत्तया नामरूपे चापि प्रकल्पिते ।
विनायकादिनामानि वेदेषु कथितानि च ।। १९ ।।

स्वरूपबोधकैश्चिह्नैर्रूपञ्चापि प्रकल्पितम् ।
गुणनिर्गुणमायाभ्यां युक्तत्वात्स्वस्वरूपकम् ।। २० ।।

नामरूपधरस्सत्यं भवेदेव हि स्वेच्छया ।
गुणनिर्गुणमायाभ्यां हीनत्वात्स्वस्वरूपकम् ।। २१ ।।

नामरूपविहीनस्स्यादिति वेदविदो विदुः ।
जगद्विहारभावेषु नामरूपधरो भवेत् ।। २२ ।।

महिम्नि स्थितभावे तत् तद्धीनश्चेति कथ्यते ।
गजाननस्वरूपन्तु महावाक्यस्वरूपकम् ।। २३ ।।

कण्ठाधस्त्वंपदं प्रोक्तं नराकारं जगन्मयम् ।
कण्ठादूर्ध्वं तत्पदं स्यात् गजाकारन्तु निर्गुणम् ।। २४ ।।

द्वयोरभेदभावे वै असिपूर्णकमकूबरम् ।
प्रत्यक्षं तत्त्वमस्याख्यं ब्रह्म गाणपतं वरम् ।। २५ ।।

अव्याकृततुरीयस्तु गजाकार इति स्मृतः ।
स एव प्रथमः कार्यो मुखं गजमुखस्स्मृतः ।। २६ ।।

गजाकारब्रह्मणस्तु जनकोऽयं गजाननः ।
सगुणः पञ्चमो वेदे विशेषेण निरूपितः ।। २७ ।।

माया गजेति कथिता माया सा जडरूपिणी ।
सत्ताप्रदानान्मायाया प्राणदायक उच्यते ।। २८ ।।

निर्गुणस्तेन वेदेषु गजानन इति स्मृतः ।
गजाया अननाच्चायं गजानन इति स्मृतः ।। २९ ।।

एवन्तु त्रिविधं ब्रह्म गजाननस्वरूपकम् ।
गजाननस्वरूपाढ्यं वेदे गणपतिस्स्मृतः ।। ३० ।।

एवन्तु गणराजस्य ब्रह्मत्वं सुनिरूपितम् ।
एवंभावत्रययुत ईश्वरोऽयं तुरीयकः ॥ ३१ ॥

समष्टिव्यष्टितद्भावहीनञ्चेति त्रिधा मतः ।
नराकारस्तु व्यष्टिस्स्याद् गजाकारस्समष्टिकः ॥३२॥

द्वयोरभेदभावे तु गणेशोऽयं गजाननः ।
ईश्वरोऽयं गणेशानो गजानन इति क्वचित् ॥ ३३ ॥

अस्मितामयसंज्ञस्तु कथ्यते योगपारगैः ।
गणेशस्य कार्यमूर्तिरीश्वरोऽयं गजाननः ॥ ३४ ॥

ब्रह्मत्वमीश्वरत्वञ्च प्रोक्तं गणपतेश्श्रुतौ ।
सिद्धिबुद्धिपतिरयं गणेशो ब्रह्मणस्पतिः ॥ ३५ ॥

स्वस्वरूपमये नैजे स्वानन्दस्वस्वरूपतः ।
परंज्योतिस्स्वरूपेण सन्तिष्ठति विघ्नपः ॥ ३६ ॥

नानाखेलकरो भूत्वा दुष्टानां निधनाय च ।
अनुग्रहार्थं भक्तानां स्वेच्छया गणनायकः ॥ ३७ ॥

स्वानन्दमायया मूर्तिं गृह्णाति विश्वमण्डले ।

इति गणपतिस्वरूपनिरूपणम्

## मतनिरूपणम्

सनकादयः—

मतस्वरूपं नो ब्रूहि कृपया देशिकोत्तम ! ।

गणक उवाच—

ब्रह्मणो भावसिद्ध्यर्थं मत्वा संसृतिसागरात् ।
अतुलः कल्पितो मार्गस्तद्भावगतयोगिभिः ॥ ३८ ॥

अङ्गीकृतश्च बहुभिर्मुनिभिर्मतमुच्यते ।
मतं मार्गश्च समयस्तस्य नामानि योगिनः ॥ ३९ ॥

आर्यानार्यप्रभेदेन मतं तद्द्विविधं स्मृतम् ।
बाहुभ्यां तरणं सिन्धोरगाधस्य यथा स्मृतम् ॥ ४० ॥

अनार्यन्तु तथा प्रोक्तं न तेन तारणं भवेत् ।
यथा नावेन तरणं सिन्धोरार्यं तथा स्मृतम् ॥ ४१ ॥

वर्णाश्रमाचारधर्मयुतमार्यं मतं स्मृतम् ।
श्रुतिस्स्मृतिश्च मीमांसा योगिनी तन्त्रिणी तथा ॥४२॥

पञ्चविद्याः प्रमाणं स्युरार्यस्य समयस्य हि ।
तान्त्रिकं वैदिकं चेति मतमार्यं द्विधा स्मृतम् ॥ ४३ ॥

परापरप्रभेदेन वेदाश्च द्विविधा मताः ।
परास्स्युरुपनिबद्धो ह्यपरा मन्त्रसंज्ञिकाः ॥ ४४ ॥

अपरा स्तुतिरूपाश्च परास्तत्त्वप्रबोधकाः ।
कर्मज्ञानप्रभेदेन स्मृतिश्चापि द्विधा स्मृता ॥ ४५ ॥

कर्मस्मृतिर्धर्मशास्त्रं मन्वादिमुनिभिस्स्मृतम् ।
इतिहासपुराणन्तु ज्ञानस्मृतिरिति स्मृतम् ॥ ४६ ॥

मीमांसा द्विविधा प्रोक्ता धर्मब्रह्मप्रभेदतः ।
अपराणाञ्च वेदानामर्थनिश्चयदायिनी ॥ ४७ ॥

मीमांसा पूर्वसंज्ञा तु पराणामुत्तराभिधा ।
श्रुतिस्स्मृतिश्च मीमांसा चतुर्दश ततस्स्मृताः ॥ ४८ ॥

चतुर्दशबहिर्भूतं योगञ्च तन्त्रशास्त्रकम् ।
श्रुतिरेव प्रमाणं स्यादीश्वरस्य मुखोद्गता ॥ ४९ ॥

श्रुत्यर्थोपबृह्मणं स्यात् स्मृतिविद्या मुनीश्वराः! ।
श्रुतिस्मृत्युदितो मार्गो वैदिकश्चेति कथ्यते ।। ५० ।।

चतुर्दशमहाविद्याबहिर्भूतानि तानि वै ।
आगमादीनि शास्त्राणि नाङ्गीकार्याणि वैदिकैः ।।५१।।

ज्ञानयोगप्रदं शास्त्रं मीमांसान्तर्गतं स्मृतम् ।
वेदाविरोधभागाश्च ग्राह्या ह्यन्येषु वैदिकैः ।। ५२ ।।

वैदिकं चापि मिश्रञ्च पाषण्डं तान्त्रिकं तथा ।
एवं चतुर्भेदतश्च तन्त्रशास्त्रं प्रकीर्तितम् ।। ५३ ।।

वेदानुसारकं तन्त्रशास्त्रं वैदिकसत्तमैः ।
ग्राह्यमन्यानि त्याज्यानि श्रुतिस्मृतिप्रमाणतः ।। ५४ ।।

निरीशसेशभेदेन सांख्यन्तु द्विविधं स्मृतम् ।
सेशसांख्ये तु श्रुत्युक्तभागो ग्राह्यो मनीषिभिः ।। ५५।।

अन्यास्त्याज्या निरीशन्तु निन्द्यं वैदिकगर्हितम् ।
श्रुतेर्विरोधभागाश्च त्याज्यास्सर्वत्र वैदिकैः ।। ५६ ।।

तन्त्रादिषु च शास्त्रेषु श्रुतीनान्तु कुमार्गतः ।
अर्थाश्च कथिता विप्राः! जनानां मोहनाय च ।।५७।।

श्रुत्यर्थस्तन्त्रमार्गेण न ग्राह्यो वैदिकैर्जनैः ।
स्मृत्यनुसारतो ग्राह्यो वैदिकैर्नात्र संशयः ।। ५८ ।।

कण्ठे लिङ्गधारणञ्च शरीरेषु च तापनम् ।
श्रुत्यनुसारतः प्रोक्तं तन्त्रेषु मोहनाय च ।। ५९ ।।

अन्यथार्थकल्पनन्तु तन्त्रेषु कथितं श्रुतेः ।
कानिचिच्च पुराणानि धर्मशास्त्राणि सत्तमाः! ।। ६०।।

तन्त्रानुसारतो लोके कथितानि मुनीश्वरैः ।
तानि त्याज्यानि विप्रेन्द्रैर्वेदाचारपरायणैः ।। ६१ ।।

श्रुतिस्मृत्योरन्यथार्थवक्तारो वेदनिन्दकाः ।
श्रुतिष्वेकभागमेव प्रमाणवादिनस्तथा ।। ६२ ।।

वैदिकाचारयुक्ताश्च तुल्यास्ते तान्त्रिकैर्नरैः ।
एकशास्त्रपरास्सर्वे तान्त्रिका वेदनिन्दिताः ।। ६३ ।।

मीमांसान्यायवैशेषशाण्डिल्याद्येकमार्गगाः ।
निन्द्या वेदपरैस्सत्यं न च ते वैदिका मताः ।। ६४ ।।

पाञ्चरात्रादिमार्गिवच्च निन्द्यास्ते नात्र संशयः ।
अद्वैतं वैदिकं स्मार्तं नामानि वैदिकस्य च ।। ६५ ।।

उपनिषत्सु यत्प्रोक्तं तदद्वैतमुदीरितम् ।
अपरेषु च वेदेषु प्रोक्तं वैदिकमुच्यते ।। ६६ ।।

धर्मेतिहासपुराणकथितं स्मार्तमीरितम् ।
वेदोपनिषत्स्मृतिषु कथितं यन्मतं द्विजाः! ।। ६७ ।।

तदेव वैदिकं प्रोक्तं तदेव स्मार्तमीरितम् ।
तदेवाद्वैतमिति च कथ्यते वेदपारगैः ।। ६८ ।।

अद्वैतस्य परं ब्रह्म देवता परिकीर्तितम् ।
ब्रह्मैकं पञ्चधा वेदे स्थितिभेदेन कथ्यते ।। ६९ ।।

तदहं वः प्रवक्ष्यामि यूयं शृणुत सादरम् ।
अधिष्ठानन्तु मायाया ब्रह्मैव हि महिम्निगम् ।। ७० ।।

मायाब्रह्मसुसंयोगरूपं ब्रह्म परात्परम् ।
सगुणं चेति कथितं तद्धीनं ब्रह्म निर्गुणम् ।। ७१ ।।

एवं ब्रह्म द्विधा प्रोक्तं व्यवहारे मुनीश्वरा:! ।
सगुणादेव सा माया सत्वोद्रिक्ता बभूव च ।। ७२ ।।

सत्वे बिम्बं बभूवैव ब्रह्मणः परमात्मनः ।
सत्वप्रधानमायायां ब्रह्माभासो बभूव च ।। ७३ ।।

माययोपहितेनैव ह्याभासो माययापि च ।
ईश्वरश्चेति कथितो वेदान्तशास्त्रपारगैः ।। ७४ ।।

ततो मलिनसत्वाभून्माया सा जीवभावदा ।
अविद्येति तदा प्रोक्ता ह्यविद्योपहितेन च ।। ७५ ।।

तया च तद्गताभासः क्षेत्रज्ञ इति कथ्यते ।
ततस्तमप्रधानाभून्माया सा प्रकृतिस्स्मृता ।। ७६ ।।

ब्रह्मैकमेव सञ्जातमेतादृशस्वरूपकम् ।
क्षेत्रज्ञवादिनो वेदे सौराश्चेति प्रकीर्तिता: ।। ७७ ।।

विशिष्टमीश्वरं प्राहुर्वैष्णवाश्चेति ते स्मृताः ।
माययोपहितं चेशं शाम्भवाश्चेति ते स्मृताः ।। ७८ ।।

चिन्मायायोगरूपन्तु सगुणं ब्रह्म शाश्वतम् ।
कारणं प्रवदन्त्येते वेदे ते गाणपा मताः ।। ७९ ।।

सान्निध्ये ब्रह्मणस्संस्थां मायां ये कारणं जगुः ।
महाशाक्ता इति प्रोक्ता निर्गुणं ये वदन्त्युत ।। ८० ।।

स्मार्ताश्चैवेति ते प्रोक्ता वेदशास्त्रेषु सत्तमैः ।
जगतां कारणं ब्रह्म प्रोक्तमेवं तु षड्विधम् ।। ८१ ।।

क्षेत्रज्ञेश्वरमायानां तुरीया स्थितिरुच्यते ।
चिन्मायायोगरूपस्य पञ्चमी स्थितिरीरिता ।। ८२ ।।

तुर्यातीतं निर्गुणस्य प्रवदन्त्यपि च योगिनः ।
षण्णामपि च सिद्धान्तं ब्रुवे शृणुत सादरम् ।। ८३ ।।

इति मतनिरूपणम्

## स्मार्तमतनिरूपणम्

**गणकः—**

अधिष्ठानन्तु मायाया निर्गुणं ब्रह्म केवलम् ।
साक्षात्कारेण ज्ञानस्य सा माया नाशमाप्नुयात् ।।८४।।

निर्गुणं भावमुत्सृज्य ब्रह्मैव ब्रह्म तद्भवेत् ।
चिन्मायायोगरूपन्तु सगुणं मायया युतम् ।। ८५ ।।

सर्वसाक्षीति कथितं स्वरूपहानिवर्जितम् ।
गणेशत्वं शिवत्वञ्च विष्णुत्वं सूर्यता तथा ।। ८६ ।।

शक्तित्वमपि वेदेषु मायायोगेन ब्रह्मणः ।
कल्पितानि च सगुणब्रह्माणि पञ्च तानि च ।। ८७ ।।

निराकारब्रह्मणस्तु साकारे पञ्चमूर्तयः ।
ब्रह्मसाक्षात्कारसिद्ध्यै पूजनीयाश्च पञ्च वै ।। ८८ ।।

एतादृशसुसिद्धान्तयुतास्स्मार्ताः प्रकीर्तिताः ।
शुद्धाद्वैतसुसिद्धान्तयुता इति प्रविश्रुताः ।। ८९ ।।

पञ्चस्वरूपविज्ञानहीनाः वेदान्ततत्पराः ।
केवलं निर्गुणब्रह्मवादिनो मूढशेखराः ।। ९० ।।

हैरण्यगर्भा इति ते कथिता निन्द्यमार्गिणः ।
पञ्चानामपि विज्ञानयुता निर्गुणतत्पराः ।। ९१ ।।

शुद्धाद्वैतपराश्चेति स्मार्ता इत्यपि कीर्तिताः ।
एकस्य ज्ञानयुक्ताश्चेत् पञ्चसु निर्गुणं श्रिताः ।। ९२ ।।

तदद्वैतीति विख्याता न शुद्धाद्वैतिनस्स्मृताः ।
सर्वं प्रमाणमेषां तु वेदादिषु न संशयः ।। ९३ ।।

पञ्चायतनदेवानां पूजनं बाह्यचिह्नकम् ।
यस्मिन् वै अधिका प्रीतिः पञ्चसु वर्तते क्रमात् ।।९४।।

मध्ये स्थाप्यं मुख्यभावात् पूजा कार्या विधानतः ।

सनकादयः—

गणेशः पञ्चमो वेदसिद्धान्तेन प्रकीर्तितः
अन्येषां परिवारेण कथं स्थाप्यः वद प्रभो! ।। ९५ ।।

चतुर्णां ज्येष्ठभावेन पूर्वं पूज्यो न संशयः ।

गणक उवाच—

व्यावहारपारमार्थभेदेन पञ्च देवताः ।
मूर्तिद्वययुताः प्रोक्ता वेदादिषु विधानतः ।। ९६ ।।

पञ्चमो गणनाथस्य मूर्तिस्स्यात् पारमार्थिका ।
तुरीयपदगा तस्य मूर्तिस्स्याद्व्यावहारिका ।। ९७ ।।

शिवादीनां तुरीयस्था कीर्तिता पारमार्थिका ।
एकैकगुणसंयुक्ता कथिता व्यावहारिका ।। ९८ ।।

ज्येष्ठभावेन कर्मादौ पूज्योऽयं पञ्चमे स्थितः ।
अन्यैश्च साहचर्येण पूजनीयस्तुरीयगः ।। ९९ ।।

इति स्मार्तमतनिरूपणम्

## गाणपतसिद्धान्तनिरूपणम्

सनकादयः—

गाणपतस्य सिद्धान्तं कृपया वद देशिक! ।

गणक उवाच—

गाणेशाद्वैतं गाणेशमिति वेदे द्विधा स्मृतम् ।
सर्वसाक्षीति यः प्रोक्तो मायाचिद्योगरूपवान् ॥१००॥

स एव गणराजस्स्यात् पञ्चमश्चेति कथ्यते ।
मायायोगयुतश्चापि मायोपाधिविवर्जितः ॥ १०१ ॥

निरुपाधिक एवायं निर्गुणात्मस्वरूपवान् ।
निर्गुणं सगुणञ्चापि प्राहुरेनं तु गाणपाः ॥ १०२ ॥

पञ्चमाच्च वरं किञ्चिन्नाङ्गीकुर्वन्ति निश्चितम् ।
ईश्वरस्य लयोत्पत्तिमङ्गीकुर्वन्ति गाणपाः ॥ १०३ ॥

चर्तुविधजगद्रूपा माया शान्तिं च पञ्चमे ।
प्राप्नोति प्रलये सृष्टौ पुनर्भवति पूर्ववत् ॥ १०४ ॥

भिन्नाभिन्नस्वरूपेण माया तिष्ठति पञ्चमे ।
एवं ब्रुवन्ति गाणेशा वैदिका वेदमार्गतः ॥ १०५ ॥

गाणेशाद्वैतमार्गस्य सिद्धान्तमपि वो ब्रुवे ।
अनादौ संस्थितं ब्रह्म महिम्नि स्वस्वरूपकम् ॥ १०६॥

स्वशक्त्या द्विविधं जातं तदेव खेलनाय च ।
बिन्दुरूपा महामाया मूलप्रकृतिरीरिता ॥ १०७ ॥

गुणत्रयशान्तिधरा संस्थिता निरुपाधिवत् ।
सर्वाकारा महामाया निराकारस्तु पूरुषः ॥ १०८ ॥

आश्रित्य पुरुषं संस्था जाता सा प्रकृतिः परा ।
ब्रह्मणः प्रकृतिर्जाता तथायं पुरुषोऽपि च ॥ १०९ ॥

सूर्याच्च जलसूर्यस्तु यथा जातस्तथैव च ।
व्योमसूर्योऽपि सञ्जातस्तद्वच्चायं बभूव च ॥ ११० ॥

प्रकृतेर्योगसंयुक्तं ब्रह्मैव सगुणं स्मृतम् ।
सगुणत्वस्यागमनात् निर्गुणत्वमुपागतम् ॥ १११ ॥

निगमान्निर्गुणत्वस्य निर्गुणत्वं लयं व्रजेत् ।
गुणत्वं निर्गुणत्वञ्च साक्षाद् ब्रह्मणि कल्पितम् ॥११२॥

गुणनिर्गुणभावाभ्यां वर्णितन्तु महिम्निगम् ।
साक्षाद् ब्रह्मेति कथितं वेदेषूपनिषत्सु च ॥ ११३ ॥

जगज्जीवेश्वराद्याश्च संभूतास्सगुणात्प्रभोः ।
भूम्यान्तु पतितस्यैव भूमिरेवावलम्बनम् ॥ ११४ ॥

मायाबन्धयुतस्यैव मायाबन्धनिवृत्तये ।
मायायोगयुतं ब्रह्म समवलम्बनं स्मृतम् ॥ ११५ ॥

पञ्चमावलम्बनेन चतुर्विधजगन्मयी ।
नश्येन्माया निर्गुणावलम्बनेन च पञ्चमी ॥ ११६ ॥

मूलमाया विनश्येच्च ब्रह्मत्वं प्राप्नुयात्ततः ।
त्रिविधं ब्रह्म प्राहुस्ते गणेशाद्वैतमार्गिणः ॥ ११७ ॥

स्वानन्दं परमं तेषां सिद्धान्तो नात्र संशयः ।
गणेशनाम्ना तद् ब्रह्म वदन्त्येव न चान्यथा ॥ ११८ ॥

उपासने द्वयोर्भेदे नास्ति वेदप्रमाणतः ।
स्वानन्दभवनं चेति स्थितिं ते पञ्चमीं वराम् ॥११९॥

चिन्तामणिद्वीपमिति तुरीयं प्रवदन्त्युत ।
पञ्चचित्तवृत्तिमयी महाबुद्धिरिति स्मृता ।। १२० ।।

चित्तहर्षशोकदात्री सिद्धिरित्यभिधीयते ।
सिद्धिबुद्धी महामाये गणेशस्य पतिव्रते ।। १२१ ।।

पञ्चमत्वं गणेशस्य शुद्धाद्वैते तु सम्मतम् ।
ईशत्वञ्चापि ब्रह्मत्वं गणेशस्य श्रुतौ स्मृतम् ।।१२२ ।।

इति गाणपतसिद्धान्तनिरूपणम्

### गणपतेः पत्नीहीनत्वकथनम्

सनकादयः—

सिद्धिबुद्धी महामाये गणेशस्य पतिव्रते ।
पत्नीहीन इति प्राहुस्तं केचित्कारणं वद ।। १२३ ।।

गणक उवाच—

दीपे तु वर्तिवच्चित्ते बुद्धिस्सद्वृत्तिरूपिणी ।
दीपे तु तैलवत्सिद्धिः वर्तिसंश्रितवह्निवत् ।। १२४ ।।

आत्मा तु कथितो विप्राः! महिम्नि संस्थितं वरम् ।
वृत्त्यारूढं परं ब्रह्म गणेश इति कथ्यते ।। १२५ ।।

हृदि वृत्तिसुसंरूढं बाह्ये मायासमन्वितम् ।
ब्रह्म गाणपतं प्रोक्तं हृदि वृत्तिलयेन च ।। १२६ ।।

बाह्ये मायानाशनेन ब्रह्माकारं भवेच्च तत् ।
क्षेत्रज्ञस्तु भवेज्जीवो जीवात्मा चेति कथ्यते ।। १२७।।

ईश्वरः परमात्मेति कथ्यते वेदपारगैः ।
परजीवभेदहीनश्चिन्मायायोगरूपवान् ।। १२८ ।।

सर्वसाक्षी पञ्चमस्तु साक्षादात्मेति कथ्यते ।
दीपस्य वर्तिः तैलञ्च शक्तीति संस्मृते बुधैः ।। १२९ ।।

तथैव सिद्धिबुद्धी च गणेशस्य पतिव्रते ।
एवं विहारे कथ्येते महिम्नि मुनिसत्तमाः! ।। १३० ।।

अग्नौ प्रकाशमुष्णञ्च तिष्ठतश्च यथा तथा ।
गणेशे संस्थिते तेऽपि साक्षादात्मस्वरूपिणी ।। १३१ ।।

सृष्टयादौ पञ्चमं ब्रह्म सृष्ट्वा विश्वं चतुर्विधम् ।
स्ववीक्षणेन मायायां मायासङ्गविवर्जितः ।। १३२ ।।

सृष्टयादिकृत्यहीनस्सन् सर्वसाक्षी बभूव च ।
ईशस्सृष्टयादिकर्ता स्यान्न साक्षी परिकीर्तितः ।।१३३।।

जीवेशजडमायानां जनितायं न संशयः ।
मायायोगेन सृष्ट्वा तान् ततस्साक्षी बभूव ह ।।१३४।।

भुक्तभोगां तु तां मायां त्यक्त्वा सत्यस्वरूपिणीम् ।
महिम्नि संस्थितोऽभूच्च सा माया जडरूपताम् ।।

संप्राप्य बहुरूपासौ बभूव विश्वरूपिणी ।
अतोऽयं पत्नीहीनेति कथ्यते योगपारगैः ।। १३६ ।।

इति गणपतेः पत्नीहीनत्वकथनम्

गणपतेः ब्रह्मचारित्वनिरूपणम्

सनकादयः—

ब्रह्मचारी गणेशान इति केचिद्वदन्ति च ।
सिद्धिबुद्धियुतो देवो ब्रह्मचारी कथं भवेत् ? ।। १३७ ।।

गणक उवाच—

कर्मज्ञानोपास्तिभेदाद्भेदाः काण्डत्रयान्विताः ।
तत्तत्सिद्धिप्रदातृत्वात् पूज्यते तत्र तत्र च ।। १३८ ।।

चतुर्विधजगद्रूपी प्रणवो ब्रह्मसंज्ञकः ।
प्रणवस्य वर्णनादरूपेष्वपि चतुर्षु च ।। १३९ ।।

जाग्रद्ब्रह्मादिरूपेण संचाराद् ब्रह्मणस्पतिः ।
ब्रह्मचारीति कथितो वेदेष्वपि चतुर्षु च ।। १४० ।।

ज्ञानोपास्तिकर्मभक्तिसंज्ञकेषु पदे पदे ।
नानादेवतात्मकेषु ज्येष्ठराजस्वभावतः ।। १४१ ।।

अग्रपूज्यस्वभावेन संचाराद् ब्रह्मणस्पतिः ।
ब्रह्मचारीति कथितो रुद्रपुत्रो गजोद्भवः ।। १४२ ।।

ब्रह्मचर्याश्रमे संस्थो दारग्रहणवर्जितः ।
बालतरुणवृद्धयादिरूपयुक्तो यथा बभौ ।। १४३ ।।

ब्रह्मचर्यरक्षणार्थं संबभूव गजोद्भवः ।
गजोद्भवश्शम्भुपुत्रो ब्रह्मचारी न संशयः ।। १४४ ।।

सिद्धिबुद्धियुतो देवो रुद्रादिदेववत्स्वयम् ।
मैथुनकृत्यहीनत्वाद् ब्रह्मचारीति कथ्यते ।। १४५ ।।

यदा देहयुतो जातो दुष्टानां निधनाय च ।
शिवकश्यपपूर्वाणां पुत्रभावं समाश्रितः ।। १४६ ।।

सिद्धिबुद्धिसंयुतोऽपि तदा मैथुनवर्जितः ।
तेनायं ब्रह्मचारीति कथ्यते ब्रह्मणस्पतिः ।। १४७ ।।

सर्वावस्थासंयुतोऽयं सर्वावस्थाविवर्जितः ।
सर्ववर्णाश्रमयुतस्सर्ववर्णविवर्जितः ॥ १४८ ॥

सर्वमायासंयुतश्च सर्वमायाविवर्जितः ।
स्वयं ब्रह्मस्वरूपेण सदा तिष्ठति विघ्नपः ॥ १४९ ॥

इति ब्रह्मचारित्वनिरूपणम्

## शिवपुत्रावतारकारणनिरूपणम्

सनकादयः—

महावाक्यस्वरूपत्वे वेदेषु वर्णितो ह्ययम् ।
शिवसुत इति प्रोक्तो नामपाठकवर्णने ॥ १५० ॥

तत्कारणं वद विभो! गाणेशतत्त्वकोविद!

गणक उवाच—

कल्पादौ पञ्च देवा वै केशशक्तिदिनेश्वराः ।
गणेशादेव सञ्जाता एकैकगुणसंश्रिताः ॥ १५१ ॥

तपसा तोषयामासुर्गणेशं पञ्चमं विभुम् ।
तेषु शंभोस्तु हृदये प्रथमं प्रकटोऽभवत् ॥ १५२ ॥

अन्येषां हृदये पश्चात् प्रादुरासीत्ततः परम् ।
ब्रह्मणे सृष्टिकृत्यञ्च पालनं केशवाय च ॥ १५३ ॥

संहारं पार्वतीशाय शक्तये विश्वमोहनम् ।
कालचक्रनियन्तृत्वं रवये प्रददौ विभुः ॥ १५४ ॥

अन्तस्सत्वगुणोपेतश्शिवो नत्वा गजाननम् ।
हस्ताञ्जलिपुटो भूत्वा प्रार्थयामास सादरम् ॥ १५५ ॥

शिव उवाच—

पञ्चस्वपि मम विभो! चित्ते त्वं प्रकटोऽभवः ।
ध्याने मनसि मे जातः पुत्रत्वं पालय प्रभो! ॥ १५६ ॥

मम पुत्र इति ख्यातिं लोकेऽस्मिन् भगवन्! तव ।
मायोपाधिविरहितस्सञ्चरामि ततस्सुखम् ॥ १५७ ॥

एवं तं प्रार्थयामास बहुवारं सदाशिवः ।
तमुवाच गणाधीशः प्रसन्नस्सिद्धिबुद्धियुक् ॥ १५८ ॥

गणेश उवाच—

पञ्चदेवैरवध्यानां दानवानां वधाय च ।
भक्तानां पालनार्थञ्च धर्मसंस्थापनाय च ॥ १५९ ॥

भविष्यामि मूर्तियुक्तो ब्रह्माण्डेऽस्मिन् सदाशिव! ।
अवतार इति प्रोक्तं ब्रह्माण्डे मूर्तिधारणम् ॥ १६० ॥

अवतारा अनन्ता मे भविष्यन्ति च विष्टपे ।
बहूनामपि पुत्रोऽहं भविष्यामि न संशयः ॥ १६१ ॥

पुत्रत्वे बहुवारन्तु त्वयाहं प्रार्थितोऽधुना ।
बहुवारं तव सुतो भविष्यामि न संशयः ॥ १६२ ॥

पुत्रभावधारणे तु प्रथमं तव नन्दनः ।
वरिष्ठं तु ब्रह्माण्डे पितृषु मम शङ्कर! ॥ १६३ ॥

तव पुत्र इति ख्यातिं ग्रहीष्यामि न संशयः ।
इत्युक्त्वा पार्वतीकान्तं तिरोभूद् ब्रह्मणस्पतिः ॥१६४॥

प्रथमं शङ्करस्यैव पुत्रोऽभूद् ब्रह्मणस्पतिः ।
ततः कश्यपपूर्वाणां ब्रह्मादीनां सुतोऽभवत् ॥ १६५ ॥

बहुवारं शङ्करस्य पुत्रोऽभूद् गणनायकः ।
अतश्शिवसुतश्चेति कथितो ह्यष्टनामसु ।। १६६ ।।

कश्यपात्मजपूर्वाणि स्मृतानि शतनामसु ।
शिवसुताभिधं नाम भक्तवात्सल्यसूचकम् ।। १६७ ।।

शिवादपि कनिष्ठत्वं न सिद्धयेत्तेन सत्तमाः! ।
उपनिषदि तस्यां वै गणेशाथर्वशीर्षके ।। १६८ ।।

महावाक्यस्वरूपेण तुष्टाव वेदपूरुषः ।
त्रिपदानां स्वरूपेण तुष्टाव च ततः परम् ।। १६९ ।।

अव्याकृतस्वरूपेण तुष्टाव च ततः परम् ।
ततः पञ्चमरूपत्वे तुष्टाव वेदपूरुषः ।। १७० ।।

एतादृशब्रह्मणस्तु मन्त्रं प्राह ततः परम् ।
मन्त्रस्य ध्यानमवदद्योगिध्येयं निरन्तरम् ।। १७१ ।।

प्रकृतेः पुरुषाच्चापि वरत्वं तत्र कीर्तितम् ।
योगिनो ध्यानशीलस्य योगिषु श्रैष्ठ्यमीरितम् ।।१७२।।

ततःपरं गणेशानं तुष्टावाष्टसुनामभिः ।
अष्टस्वपि शिवसुतनाम तु सप्तमं स्मृतम् ।। १७३ ।।

अनेन च शिवात्तस्य न्यूनता संभवेन्न च ।
विष्णोरथर्वशीर्षे तु ब्रह्मणा देवकीसुतः ।। १७४ ।।

इति प्रोक्तं तेन विप्राः! देवक्याः केशवस्य तु ।
न्यूनता तु कथं सिद्धयेत्तद्वदत्र श्रुतौ द्विजाः! ।। १७५ ।।

शिवसुत इति प्रोक्तं तद्भक्तिप्रेमदर्शकम् ।

इति शिवपुत्रावतारकारणनिरूपणम्

## मलजातस्वरूपकथनम्

सनकादयः—

उमाङ्गमलजातस्य गणेशस्य सदाशिवः ।
अच्छिन्नमस्तकं चेति वदन्ति शाम्भवा द्विजाः ॥१७६॥

अनेन न्यूनता सिद्ध्येद् गणेशस्य शिवादपि ।

गणक उवाच—

चरित्रं मलजातस्य द्विविधं परिकीर्तितम् ।
अस्मिन् कल्पे गणेशानो मलाज्जातस्तु पञ्चमः॥१७७॥

अस्मिन् कल्पे गणेशानो मलाज्जातो मुनीश्वराः ।
उमया सहितश्शंभुस्तुरीयपदधारकः ॥ १७८ ॥

ब्रह्माण्डे लोकरक्षार्थं कैलासे संस्थितोऽभवत् ।
तस्य शक्तिरुमा देवी गणेशं गजवक्त्रकम् ॥ १७९ ॥

तपसा तोषयामास पुत्रार्थं नियमं श्रिता ।
तथा देवो गणेशानो प्रददौ वरमुत्तमम् ॥ १८० ॥

धूलीधूसरितदेहा पार्वती गिरिनन्दिनी ।
शंकरं तोषयामास वरार्थं तपसि स्थिता ॥ १८१ ॥

तादृशीं पार्वतीं दृष्ट्वा प्रावदद् गिरिजापतिः ।
मलं ते देहसंस्थन्तु मदादिदेवसत्तमैः ॥ १८२ ॥

मुनिभिः पूजनीयञ्च भवेदेव न संशयः ।
इत्युक्त्वा पार्वतीं शम्भुर्जग्राह विधिपूर्वकम् ॥ १८३ ॥

कैलासं प्राप हृष्टात्मा चिक्रीड जगदम्बया ।
कदाचित् पार्वती स्नात्वा मलं जग्राह देहजम् ॥१८४॥

भूमौ तु स्थापयामास तस्माद् बालो बभूव च ।
पूर्वकाले शक्तिभक्त इति ख्यातो मुनीश्वरः ॥ १८५ ॥

त्यक्त्वा शम्भुं पराशक्तिं तोषयामास हृष्टधीः ।
शाक्तदीक्षाविरहितः केवलं भक्तितत्परः ॥ १८६ ॥

भक्तेश्च वैभवादेव शक्तेस्सायुज्यमाप सः ।
अस्मिन् कल्पे महादेवजातोऽयं भक्तिवैभवात् ॥१८७॥

गृहद्वारे तु संस्थाप्य तं बालं जगदम्बिका ।
अन्तर्गृहे न प्रवेश्यः कोऽपि मे शासनं विना ॥ १८८ ॥

तथा त्वया रक्षणन्तु कार्यञ्चेति तमब्रवीत् ।
तदाज्ञां शिरसा धृत्वा तथा चक्रे स बालकः ॥ १८९॥

कदाचित् पार्वतीं द्रष्टुं शक्तेर्गेहं ययौ शिवः ।
निरोधं गमने तस्य चकार शक्तिसंभवः ॥ १९० ॥

धिक्कृत्य तं पुनर्गन्तुं प्रारभद् गिरिजापतिः ।
केशेष्वाकृष्य रुद्रं तं प्राक्षिपच्च बहिस्स्थले ॥ १९१ ॥

शिवापुत्रस्तेन रुष्टो शूलेन गिरिजापतिः ।
मलजस्यैव मूर्द्धानं छेदयामास रुष्टधीः ॥ १९२ ॥

शूलेन छिन्नमूर्द्धायं ममार मलसंभवः ।
तदागत्य मृतं बालं दृष्ट्वा पर्वतनन्दिनी ॥ १९३ ॥

सर्वलोकगतां शक्तिं जग्राह क्रोधसंयुता ।
शक्तिहीनास्सुरास्सर्वे शक्तिगेहं ययुस्तदा ॥ १९४ ॥

कारणं परिपप्रच्छ कोपस्य पद्मसंभवः ।
रुदन्ती गिरिजा प्राह सन्तुष्टस्तपसा मम ॥ १९५ ॥

गणेशो मे सुतोऽभूच्च मदाज्ञापालकोऽभवत् ।
तादृशं बालकं मूढो जघान तामसो हरः ।। १९६ ।।

उज्जीवयित्वा तनयं कृपया ब्रह्मणस्पतेः ।
हस्तेन बालकस्यैव भेदयिष्यामि लीलया ।। १९७ ।।

रुद्रस्य पञ्चशीर्षाणि शपथेन ब्रवीम्यहम् ।
तथाभवन्नभोवाणी सर्वेषां श्रुतिगोचरा ।। १९८ ।।

यो हतश्शंकरेणाद्य न स देवो गणाधिपः ।
शक्तिभक्तो भक्तियोगी शिवद्वेषपरायणः ।। १९९ ।।

शक्तिज्ञानविरहितो ब्रह्मज्ञानविवर्जितः ।
शाक्तदीक्षाविरहितो भक्तिमार्गैकसंश्रितः ।। २०० ।।

भक्तियोगप्रभावेण देहान्ते भक्तसत्तमः ।
कृपया परया शक्तेर्देहे लीनोऽभवच्च सः ।। २०१ ।।

पूर्वकर्मविपाकेन पुण्यकर्मविशेषतः ।
उमादेहमलादेव जातोऽयं पुण्यपूरुषः ।। २०२ ।।

शिवद्वेषयुतत्वाच्च शिवेन निहतोऽद्य वै ।
तस्य देहे गणेशस्य प्रादुर्भावार्थमद्य वै ।। २०३ ।।

वर्णत्रयात्मकं मन्त्रं प्रणवं मन्त्रसंज्ञकम् ।
तस्मिन् शवे समावाह्य प्राणस्थापनपूर्वकम् ।। २०४ ।।

गजासुरस्य मूर्द्धानं संयोज्य च कलेबरे ।
एकाक्षरस्य मन्त्रस्य ब्रह्मणां ब्रह्मणस्पतेः ।। २०५ ।।

शतलक्षसंख्यया च जपं कुरुत यत्नतः ।
आविर्भावं गणेशानः करिष्यति न संशयः ।। २०६ ।।

एवं श्रुत्वा नभोवाणीं तथा चक्रुस्सुरा मुदा ।
आविरासीद् गणेशानो मलजातकलेबरे ॥ २०७ ॥
शपथं प्रावदत्तस्मिन् स्वस्यास्सा परदेवता ।
मलजातः पातयित्वा पञ्चवक्त्रं धरातले ॥ २०८ ॥
तस्य देहे ह्युपाविश्य चत्वारि च शिरांसि च ।
छेदयामास विघ्नेशो मातृवाक्यप्रपालकः ॥ २०९ ॥
नारिकेलं तदा सृष्ट्वा त्रिनेत्रमस्तकोपमम् ।
ब्रह्मा तद् गणपे दत्वा प्रार्थयामास सादरम् ॥ २१० ॥

ब्रह्मा—

मा कुरु त्वं वधं शम्भोरेकवक्त्रशिवोऽधुना ।
प्रहर त्वं नारिकेलं महेशमस्तकोपमम् ॥ २११ ॥
अनेन पूर्णतां गच्छेन्मातुस्ते विघ्ननायक! ।
शिवस्य मरणेनैव माता ते विधवा भवेत् ॥ २१२ ॥
प्रहृत्य नारिकेलं त्वं मृत्योर्मोचय शङ्करम् ।
एवं ब्रह्मवचश्श्रुत्वा तथा कर्तुं गणाधिपम् ॥ २१३ ॥
प्रार्थयामास गिरिजा प्रहृत्य नारिकेलकम् ।
मोचयामास गौरीशं मलजातो गणेश्वरः ॥ २१४ ॥
तदा ब्रह्मावदत्सर्वान् यत्रकुत्रापि विष्टपे ।
देवानामपि प्रीत्यर्थं नारिकेलफलस्य च ॥ २१५ ॥
प्रहारेण गणेशानः प्रीतो भवतु शक्तिजः ।
एकवक्त्रयुतश्चापि शिवस्तिष्टतु विष्टपे ॥ २१६ ॥
तदा प्राह गणेशानश्शिवन्तु प्रीतिपूर्वकम् ।
वरेण मम गौरीश! पञ्चवक्त्रो भवाऽधुना ॥ २१७ ॥

एकवक्त्रयुतस्त्वञ्च तिष्ठ मे शिक्षयान्वितः ।
एकवक्त्रयुता मूर्तिरालयेषु च सर्वदा ।। २१८ ।।

सर्वत्र पूजनीया स्यात् प्रतिमासु च शङ्कर! ।
आलयेषु च नार्हा स्यात् पञ्चवक्त्रसमन्विता ।। २१९ ।।

पराशक्तेः क्लेशकरी शासनान्मे सदाशिव! ।
सा वैऽभवद् ध्यानार्हा कृपया मे न संशयः ।। २२० ।।

इत्युक्त्वा गणनाथस्तु तोषयामास शङ्करम् ।
चण्डप्रचण्डप्रमुखान् जघान दानवान्युधि ।। २२१ ।।

तुष्टिपुष्टी विष्णुपुत्र्यौ गृहीत्वा विधिपूर्वकम् ।
तोषयामास पितरौ बालक्रीडनकौतुकैः ।। २२२ ।।

विज्ञाप्य पितरौ पश्चात्स्वानन्दभवनं ययौ ।
उमाङ्गमलजोऽयन्तु गणेशस्त्रिगुणात्मकः ।। २२३ ।।

त्रिगुणगणपश्चेति कथ्यते गाणपोत्तमैः ।

इति मलजातस्वरूपकथनम्

## व्योमतत्त्वाधिपस्वरूपकथनम्

सनकादयः—

व्योमतत्त्वाधिपस्यैव स्वरूपं वद देशिक! ।

गणक उवाच—

अव्यक्तस्य महाविष्णुर्महतः पद्मसंभवः ।। २२४ ।।

अहङ्कारस्य रुद्रस्तु देवाश्चेति प्रकीर्तिताः ।
शम्भुपुत्रो व्योमतत्त्वदेवता नात्र संशयः ।। २२५ ।।

शब्देन संयुतं व्योमतत्त्वं स्थूलस्वरूपकम् ।
पञ्चीकृतं महाभागाः! नाशोत्पत्तिसमन्वितम् ।। २२६ ।।

आकाशस्तु नराकारः शब्दस्तु वेदशासनात् ।
गजाकार इति प्रोक्तो ह्यभेदे तु द्वयोरपि । २२७ ।।

आकाशदेवता देवो गजाननस्वरूपवान् ।
ब्रह्मा विष्णुश्शिवश्शक्तिर्भास्करश्चेश्वरा स्मृताः ।।

सत्यसंकल्पसंयुक्ता ब्रह्मसत्तासमन्विताः ।
व्योमोत्पत्तिरीश्वराच्च वेदेषु परिकीर्तिता ।। २२९ ।।

कल्पभेदेन पञ्चापि मुख्येशत्वं वहन्ति च ।
राजसेषु च कल्पेषु मुख्येशः पद्मजो भवेत् ।। २३० ।।

सत्वेषु केशवो रुद्रस्तामसेषु गुणद्वयोः ।
संकीर्णे दिननाथश्च त्रयाणां जगदम्बिका ।। २३१ ।।

मुख्येश्वरा इति प्रोक्ता मुख्येशास्तु तदा सुराः ।
व्योमतत्त्वाधिदेवता च भवेदेव न संशयः ।। २३२ ।।

द्रव्यशक्तेर्व्योमसृष्टिर्वेदेषु परिकीर्तिता ।
व्योमतत्त्वाधिदेवस्य शक्तिरेव प्रविश्रुता ।। २३३ ।।

स्वस्वाधिपत्यकल्पेषु ब्रह्मेशविष्णुभास्कराः ।
शक्तेश्च तनया भूत्वा व्योमाधिपत्यसंयुताः ।। २३४ ।।

तिष्ठन्ति गिरिजा चापि स्वकाले स्वांशतस्स्वयम् ।
पुत्रो भूत्वा व्योमतत्त्वतनयं स्थापयेद् ध्रुवम् ।।२३५।।

व्योमान्ततत्त्वमाश्रित्य तिष्ठेच्च कालपूरुषः ।
अव्यक्तान्तं महाकालो व्याकृताण्डं समाश्रितः ।।२३६।।

अव्याकृतं समाश्रित्य सन्तिष्ठेद् कालसंज्ञकः ।
सान्निध्यं कुरुते यत्र गणेशो ब्रह्मणस्पतिः ॥ २३७ ॥

तत्राविघ्नस्वरूपेण सन्तिष्ठेत् कालपूरुषः ।
सान्निध्यरहिते स्थाने भवेद्विघ्नो न संशयः ॥ २३८ ॥

गणेशभावनोपेताः पञ्चदेवास्तु विश्वगान् ।
व्योमान्तं संस्थितान् विघ्नान् जेतुं शक्ता न संशयः ॥

गणेशरूपयुक्तस्थ गणेशस्यैव भावनम् ।
हृदये सर्वदा तिष्ठेदिति मत्वा शिवादयः ॥ २४० ॥

विघ्नाधिपत्यं प्रदद्धुः व्योमाधिदैवताय च ।
सोऽपि गाणपतो भूत्वा योगमार्गे तु संस्थितः ॥२४१॥

तोषयामास विघ्नेशं गणेशं कृपयान्वितः ।
व्योमतत्त्वान्तगान् विघ्नान् जेतुं शक्तो बभूव च ॥

प्रमथानामाधिपत्यं ददौ तस्मै सदाशिवः ।
स्वर्गस्वानन्दभवने पूर्वभागे शिवालयात् ॥ २४३ ॥

कैलासे वसतिं तस्मै प्रददौ ब्रह्मणस्पतिः ।
स्वर्गस्वानन्दभवने गणेशं ब्रह्मणस्पतिम् ॥ २४४ ॥

तं पूजयति भक्त्या च सर्वदा प्रमथेश्वरः ।
देहान्ते गणपश्चायं स्वानन्देशे लयं व्रजेत् ॥ २४५ ॥

शैवादिषु पुराणेषु कथ्यते तु शिवांशजः ।
तथा देवीपुराणेषु देव्यंशसंभवो विभुः ॥ २४६ ॥

मलजः कथ्यते देवो व्योमतत्त्वाधिपः प्रभुः ।
अयन्तु मलजो भिन्नो न च देवो गणेश्वरः ॥ २४७ ॥

नायं मस्तकसंभेत्ता शिवस्य गिरिजापतेः ।
नायं चण्डादिसंहर्ता केवलं मलसंभवः ।। २४८ ।।
तथा विष्णुपुराणेषु विष्णवंशसंभवस्स्मृतः ।
सौरे सूर्यांशसंभूतः कथ्यते व्योमनायकः ।। २४९ ।।
ब्रह्मांशसंभवश्चायं स्मृतिषु कथ्यते बुधैः ।
गणेशनामरूपाढ्यो गणेशेषु वरो मतः ।। २५० ।।
गणेशं त्रिविधं प्राहुर्मानवाश्शास्त्रमार्गतः ।
ब्रह्म प्राहुर्गाणपता गाणेशाद्वैतमार्गिणः ।। २५१ ।।
शिवविष्णुशक्तिसूर्यैस्साम्यतां स्मार्तमार्गिणः ।
तथापि ज्येष्ठभावाद्वै अग्रपूज्यो न संशयः ।। २५२ ।।
एवं वदन्ति स्मार्तास्ते शुद्धाद्वैतपरायणाः ।
त्रिविधस्यापि जगतः सृष्टेः पूर्वन्तु पश्च च ।। २५३ ।।
ब्रह्मणो जातस्थितयः पश्च तेन समास्स्मृताः ।
मायाचिद्योगरूपत्वाद् गणेशो ब्रह्मणस्पतिः ।। २५४ ।।
ज्येष्ठभावाच्च प्रथमं पूज्यश्चेति वदन्त्युत ।
शैवाद्येकमार्गपरास्स्वदेवं चेश्वरं जगुः ।। २५५ ।।
ईश्वरांशसमुद्भूतं वरसत्तासमन्वितम् ।
वरसत्ताप्रभावेण पूर्वपूज्यं जगुर्मुदा ।। २५६ ।।
तेषां भावं समाश्रित्य सिद्धिं यच्छति विघ्नपः ।
ब्रह्मरूपो गणेशानो गाणेशानां फलं ददेत् ।। २५७ ।।
अव्याकृतो गणेशानस्तुरीयपदधारकः ।
स्मार्तानां फलदातायं शैवादीनान्तु व्योमगः ।। २५८ ।।

इति व्योमतत्त्वाधिपस्वरूपकथनम्

## सौरसिद्धान्तनिरूपणम्

सनकादयः—

सौरमार्गस्य सिद्धान्तं वद देशिकसत्तम! ।

गणक उवाच—

ब्रह्मैव मायायोगेन सविता चेति कथ्यते ।
सावित्री वनिता तस्य तत्प्रभारूपिणी स्मृता ।। २५९ ।।

त्रिगुणाहंकृतिधराद्धिरण्यपुरुषात् परात् ।
ब्रह्मविष्णुमहादेवास्सञ्जाता गुणमूर्तयः ।। २६० ।।

जगतामात्मरूपोऽयं गोलं तेजोमयं परम् ।
ब्रह्माण्डमण्डले सृष्ट्वा तस्मिन् सूर्यस्स्थितोऽभवत् ।।
असद्भावधरः कालो लोके विघ्न इति स्मृतः ।
कालचक्रनियन्तायं विघ्नं जेतुं स्वयं प्रभुः ।। २६२ ।।

विघ्नराजस्वरूपञ्च दधार लोकहेतवे ।
सौरमण्डलमध्ये तु पुरुषोऽयं हिरण्मयः ।। २६६ ।।

हिरण्मयपुरे रम्ये तिष्ठत्यावरणान्वितः ।
वासस्थानं शङ्करस्य कैलासगिरिरुच्यते ।। २६४ ।।

मर्त्यैर्गन्तुमशक्यं स्यात्तथा वै सौरमण्डले ।
हिरण्मयपुरं स्थानं सर्वैर्गन्तुं न शक्यते ।। २६५ ।।

सूर्येऽपि भावनं लोके त्रिविधं परिकीर्तितम् ।
तुरीयभावनं चैकं तुरीयः पुरुषः परः ।। २६६ ।।

जगतामात्मरूपोऽयं क्षेत्रज्ञ इति कथ्यते ।
अव्याकृतपदे संस्थः कालचक्रनियामकः ।। २६७ ।।

स एव मण्डले संस्थो जगतामात्मरूपधृक् ।
कार्यकारणभेदेन मूर्तिद्वययुतस्मृतः ।। २६८ ।।

पारमार्थव्यावहारभेदेनापि द्विधा स्मृतः ।
तुरीयस्थितिगश्चायं पारमार्थ इति स्मृतः ।। २६९ ।।

ब्रह्माण्डमण्डले संस्थो व्यावहारिक उच्यते ।
त्रिगुणात्मकरूपोऽयं तुरीयस्थितिसंस्थितः ।। २७० ।।

त्रिगुणाहंकृतिधरो ब्रह्माण्डमध्यसंस्थितः ।
ब्रह्मणो नेत्रजातोऽन्यस्सूर्यो गृहपतिस्स्मृतः ।। २७१ ।।

गोलरूपं मण्डलन्तु प्राहुस्सूर्यन्तु केचन ।
मण्डलमण्डलगयोर्भेदज्ञानविवर्जिताः ।। २७२ ।।

ग्रहेशसूर्ययोर्भेदमजानन्तो नराधमाः ।
द्वयोरभेदं लोकेषु वदन्ति मूढभावतः ।। २७३ ।।

मण्डलं जडरूपं तद् भूगोलमिव कीर्तितम् ।
ग्रहाधिपस्सुरेशानवशगो जीवभावधृक् ।। २७४ ।।

ब्रह्मणो दिनकल्पान्ते लययुक्त इति स्मृतः ।
ग्रहाधिपभावनया पूज्योऽयं शशिपूर्वगैः ।। २७५ ।।

सूर्यभक्तैरुपास्योऽयं मण्डलान्तर्गतो विभुः ।
सूर्यभक्तेषु श्रेष्ठोऽयं ग्रहनाथो न संशयः ।। २७६ ।।

इति सौरसिद्धान्तनिरूपणम्

## शाक्तसिद्धान्तनिरूपणम्

सनकादयः—

ब्रूहि नश्शाक्तसिद्धान्तं कृपया तत्त्वकोविद! ।

गणक उवाच—

त्रिगुणानां शान्तिधरा ब्रह्ममाया सनातनी ।
अनादिसंयोगयुता ब्रह्मणा परमात्मना ।। २७७ ।।

सृष्ट्यादौ द्विविधा जाता विद्याविद्याप्रभेदतः ।
सत्त्वप्रधाना विद्या स्यादविद्या तामसी स्मृता ।।२७८।।

ब्रह्माभासयुता विद्या कथ्यते भुवनेश्वरी ।
त्रिविधानाञ्च जगतां निमित्तकारणं स्मृता ।। २७९ ।।

तमःप्रधाना प्रकृतिरुपादानमिति स्मृता ।
तमःप्रधानमायाया देवता भुवनेश्वरी ।। २८० ।।

विद्याविद्यामयी शक्तिश्शाक्तस्य देवता स्मृता ।
व्यावहारपारमार्थभेदात्स्याद्विविधा स्मृता ।। २८१ ।।

पारमार्थमयी शक्तिस्तुरीयस्थितिसंस्थिता ।
त्रिगुणानां कृत्यरूपा ब्रह्माण्डे संस्थिताऽभवत् ।। २८२।।

पार्वती शिवशक्तिस्स्याच्छक्तेरर्द्धांशसंयुता ।
दुर्गालक्ष्मीसरस्वत्यो ह्येकैकगुणसंयुताः ।
काली दुर्गा पार्वती च भुवनेशी तथैव च ।। २८३ ।।

शक्तिरूपधराः प्रोक्ताः पुराणेषु विशेषतः ।
भुवनेशी पराशक्तिर्महाराज्ञीति कथ्यते ।। २८४ ।।

पार्वती मन्त्रिणी तस्या दुर्गा तु दण्डिनी स्मृता ।
कालिका गणकी प्रोक्ता कालिका तु सरस्वती ॥२८५॥
महालक्ष्मीर्महादुर्गा महाकाली तु पार्वती ।
पार्वतीभावनं केचिच्छक्तौ कुर्वन्ति पामराः ॥ २८६ ॥
कालिकाभावनं केचित् श्रीदुर्गाभावनं तथा ।
पार्वती रुद्रवनिता रुद्रस्यैव वशंगता ॥ २८७ ॥
कालाग्निरुद्रवनिता कालिका रणदुर्जया ।
स्थाणोस्तु वनिता दुर्गा सर्वदुःखविनाशिनी ॥ २८८ ॥
स्वतन्त्रा भुवनेशानी स्वाधीनपतिसंयुता ।
एवं चतुर्विधं प्रोक्तं शक्तेस्तु भावनं द्विजाः! ॥ २८९ ॥
भुवनेशी पराशक्तिस्त्रिमूर्तीरसृजत्परा ।
शक्त्यंशतश्शक्तिमलाज्जातश्शक्तिसुतो वरः ॥ २९०॥
विघ्नाधिपत्ये शक्त्या तु स्थापितो गणनायकः ।

इति शाक्तसिद्धान्तनिरूपणम्

## वैष्णवसिद्धान्तनिरूपणम्

सनकादयः—

ब्रूहि वैष्णवसिद्धान्तं कृपया देशिकोत्तम! ।

गणकः—

शुद्धसत्त्वप्रधानाख्यमायया संयुतं परम् ।
ब्रह्म नारायणः प्रोक्तस्स एव परमेश्वरः ॥ २९१ ॥
तुरीयस्थितिगोऽयं तु महानारायणस्स्मृतः ।
सत्त्वं गुणं समास्थाय ब्रह्माण्डमध्यगोऽभवत् ॥ २९२ ॥

अस्य नाभेस्समुद्भूतो ब्रह्मा लोकपितामहः ।
ब्रह्मणो भ्रूमध्यदेशाज्जातो रुद्रस्तु तामसः ।। २९३ ।।

पारमार्थो महाविष्णुस्तुरीयस्थितितः स्मृतः ।
गुणसत्त्वयुतो विष्णुर्व्यावहारिक उच्यते ।। २९४ ।।

श्वेतद्वीपे स्थिता तस्य कार्यमूर्तिरिति स्मृता ।
वैकुण्ठसंस्थिता तस्य कारणं मूर्तिरुच्यते ।। २९५ ।।

पार्वतीतपसा तुष्टो वासुदेवो जनार्दनः ।
स्वांशेन तनयोऽभूच्च स बालस्तु गजाननः ।। २९६ ।।

विघ्नाधिपत्ये लोकेषु स्थापितो विष्णुना विभुः ।
राधा नीला रमा भूमिः कथिता विष्णुशक्तयः ।।
मदनस्तनयस्तस्य शेषन्तु मूर्तिरुच्यते ।

इति वैष्णवसिद्धान्तनिरूपणम्

## शैवसिद्धान्तनिरूपणम्

सनकादयः—

वद नश्शैवसिद्धान्तं सर्वसिद्धान्तवित्तम! ।

गणक उवाच—

अव्याकृतं परं ब्रह्म तुरीयस्थितिरूपकम् ।
विद्याविद्यामयी माया शक्तिरित्यभिधीयते ।। २९८ ।।

क्षेत्रज्ञोऽयं सूर्य इति कथितो मुनिसत्तमाः! ।
सत्त्वमायागताभासमयो विष्णुरुदीरितः ।। २९९ ।।

माययोपहितं ब्रह्म शिव इत्यभिधीयते ।
शुद्धसत्त्वमयी माया शिवशक्तिरिति स्मृता ।। ३०० ।।
शक्त्या युक्तश्शिवश्चायं परमेश इति स्मृतः ।
परमेशात्समुद्भूता ब्रह्मविष्णुमहेश्वराः ।। ३०१ ।।
ब्रह्माण्डमध्यगो रुद्रो महारुद्र इति स्मृतः ।
पारमार्थस्तुरीयस्तु रुद्रोऽयं व्यावहारिकः ।। ३०२ ।।
ब्रह्मणस्तनयोऽभूच्च तपसा परितोषितः ।
रुद्रस्य कार्यमूर्तिस्स्याद्रुद्रः कालाग्निसंज्ञिकः ।। ३०३ ।।
महारुद्रस्य तनयौ षडाननगजाननौ ।
मुमुक्षूणामाधिपत्ये स्थापितस्तु षडाननः ।। ३०४ ।।
मुक्तानामाधिपत्ये च विघ्नानामाधिपत्यके ।
गजाननस्स्थापितोऽयं शिवपुत्रस्तदंशजः ।। ३०५ ।।
नन्दिभृङ्गिमुखास्तस्य गणा मुक्ता इति स्मृताः ।
ईशानरुद्रो रुद्राणामधिपो दिक्पतिर्विभुः ।। ३०६ ।।
शिवसारूप्यसंयुक्तो नीलरुद्रांशसंभवः ।

इति शैवसिद्धान्तनिरूपणम्

## हैरण्यगर्भनिरूपणम्

**सनकादयः—**

षण्मतानां सुसिद्धान्तो भवता परिकीर्तितः ।
विनैकावलम्बनन्तु सन्ति केचिद्धरातले ।। ३०७ ।।
तेषां गतिं स्थितिं चापि नामापि वद देशिक! ।

गणक उवाच—

केवलं कर्ममार्गस्थाः केवलं ज्ञानमार्गगाः ।
वेदान्तशास्त्रनिष्णाताष्षण्मतज्ञानवर्जिताः ॥ ३०८ ॥

न्यायशाब्दशास्त्रपरा वेदाभ्यासनशालिनः ।
एकैकशास्त्रसन्निष्ठा एकैकध्यानतत्पराः ॥ ३०९ ॥

हैरण्यगर्भा इति ते कथिता मूढमार्गिणः ।
भवेयुस्ते क्रमेणैव चैकमार्गसमाश्रिताः ॥ ३१० ॥
वैदिकाभासमार्गस्था हैरण्यगर्भसंज्ञिकाः ।

इति हैरण्यगर्भनिरूपणम्

## षण्मतैक्यस्वरूपकथनम्

सनकादयः—

षण्णामपि च सिद्धान्तं संयोज्य वद नो विभो! ।

गणक उवाच—

वैदिकानाञ्च सर्वेषां ब्रह्मैकं सम्मतं द्विजाः! ।
अनादिषट्कं ग्राह्यं स्याद्वैदिकैर्नात्र संशयः ॥ ३११ ॥

अनादिनित्यं ब्रह्मैकम्मायानादिः प्रकीर्तिता ।
चिन्मायायोगरूपं वै अनादिरभिधीयते ॥ ३१२ ॥

अनादिश्चापि क्षेत्रज्ञो ह्यनादिरीश्वरो मतः ।
व्यावहारपारमार्थभेदेनेशो द्विधा स्मृतः ॥ ३१३ ॥

एषां षण्णां षण्मतानि वेदेषु कथितानि च ।
ईशत्वमपि जीवत्वं साक्षित्वमपि सत्तमाः! ॥ ३१४ ॥

मायया कल्पितान्येव शुद्धे सत्ये परात्मनि ।
व्याकृतानाञ्च जगतां सृष्टयर्थं शास्त्रकोविदैः ।।

अनादिषट्कमाख्यातं परमार्थसुसिद्धये ।
जीवेशतामसीनान्तु गुणेशस्समवायकः ।। ३१६ ।।

अव्याकृत इति प्रोक्तो वेदशास्त्रपरायणैः ।
मायायोगयुतं ब्रह्म प्राहुरीशं मुनीश्वराः! ।। ३१७ ।।

चिन्मायायोगरूपन्तु सर्वसाक्षीति कथ्यते ।
मायाचिदोस्तु योगेन माययोपहितं बभौ ।। ३१८ ।।

माययोपहितादेव मायाभासो बभूव च ।
मायाभासाच्च क्षेत्रज्ञो बभूव जीवसंज्ञकः ।। ३१९ ।।

ततस्तमप्रधानाभून्माया प्रकृतिरुच्यते ।
मायायोगेन ब्रह्मैव साक्ष्यवस्थामवाप च ।। ३२० ।।

परमार्थेश्वरो जातस्ततो वै व्यावहारिकः ।
क्षेत्रज्ञसंज्ञकावस्थां ततः प्राप परः पुमान् ।। ३२१ ।।

गुणत्रयशान्त्यवस्था मायायाः प्रथमा स्मृता ।
ततस्सत्त्वप्रधानाख्या द्वितीया चेति कथ्यते ।। ३२२ ।।

ततो मलिनसत्त्वाख्या जडता च ततः परम् ।
गुणत्रयशान्तिमयी माया बिन्दुस्वरूपिणी ।। ३२३ ।।

संयोगेनैव चितो जनयामास साक्षिणम् ।
शुद्धसत्त्वप्रधाना तु संभूता साक्षिणः पुनः ।। ३२४ ।।

साक्षियोगेन सा देवी जनयामास चेश्वरम् ।
जीवश्च क्रमशस्सा तु तामसी जडरूपिणी ।। ३२५ ।।

ईश्वरादेव सञ्जाता योगेन चेश्वरस्य च ।
स्थूलसूक्ष्मकारणाख्यं जनयामास विष्टपम् ।। ३२६ ।।

ब्रह्ममाया साक्षिमाया चेशमायेति भेदतः ।
माया तु त्रिविधा प्रोक्ता मिथ्याभानप्रदर्शिनी ।।३२७।।

व्याकृतानाञ्च जगतां सृष्टेः पूर्वन्तु योगिभिः ।
अनादिषट्कमाख्यातं वेदशास्त्रप्रमाणतः ।। ३२८ ।।

प्रधानक्षेत्रज्ञयुक्त ईशो वै व्यावहारिकः ।
विशिष्टश्चेति कथितो विशेषेण समन्वितः ।। ३२९ ।।

माययोपहितस्साक्षी परमार्थेश्वरो मतः ।
शुद्धं विना माययाऽढ्यं सगुणं ब्रह्म कथ्यते ।। ३३० ।।

पञ्चधा सगुणं ब्रह्म प्राहुर्वेदान्तवित्तमाः ।
कार्येश्वरा इति प्रोक्ता एकैकगुणसंश्रिताः ।। ३३१ ।।

ब्रह्मादयः पञ्चदेवा वेदादिषु विशेषतः ।
शैवाद्येकमार्गपरा स्वस्वदेवं तुरीयकम् ।। ३३२ ।।

कारणेशं वदन्त्येव ह्यन्यान् कार्यमयान् तथा ।
गाणेशवेदमार्गस्था गणेशस्य श्रुतेर्मुखात् ।। ३३३ ।।

ब्रह्मत्वमीश्वरत्वञ्च शिवादीनां तथैव च ।
कारणकार्येश्वरत्वं प्रवदन्ति क्रमेण च ।। ३३४ ।।

ब्रह्मणः पुत्रतां शम्भोः दूषणे हेतुरुच्यते ।
रुद्रस्य वनितात्वं तु कारणं शक्तिदूषणे ।। ३३५ ।।

ग्रहेशता दिनेशस्य दूषणे हेतुरुच्यते ।
नानायोनिषु संभूतिकारणं विष्णुदूषणे ।। ३३६ ।।

गणेशदूषणे हेतुर्वेदेषु शिवपुत्रता ।
विना विधिन्तु पञ्चापि कथिताः कारणेश्वराः ॥

मायायोगेन सञ्जातस्थितिरूपाः परात्मनः ।
ईश्वराः पञ्च कथिता जगतां कारणात्मकाः ॥ ३३८ ॥

पञ्चानामपि चैकस्य कर्तव्यमवलम्बनम् ।
पञ्चस्वपि गणेशस्य पञ्चमत्वं प्रकीर्तितम् ॥ ३३९ ॥

अन्येषान्तु तुरीयत्वं वेदान्तशास्त्रसम्मतम् ।
व्याकृतगुणमूर्तित्वं चतुर्णां च यथा स्मृतम् ॥ ३४० ॥

तथैव पञ्चमस्यापि तुरीयत्वं प्रकीर्तितम् ।
व्याकृतानां कारणत्वं शिवादीनां प्रकीर्तितम् ॥ ३४१ ॥

अव्याकृतकारणत्वमपि प्रोक्तं गणेशितुः ।
पञ्चस्वपि ज्येष्ठभावात् पूर्वं पूज्यो गजाननः ॥३४२॥

प्रकृतेरपि क्षेत्रज्ञः पुरुषो वर उच्यते ।
मायाविशिष्ट ईशानः क्षेत्रज्ञादुत्तमस्स्मृतः ॥ ३४३ ॥

मायोपहित ईशानो विशिष्टाद्वर उच्यते ।
ईश्वराद्दपि साक्षी तु वरः प्रोक्तो न संशयः ॥ ३४४ ॥

प्रकृतिश्शक्तिराख्याता क्षेत्रज्ञो भानुरुच्यते ।
विशिष्टो वासुदेवस्स्यात्तथैवोपहितश्शिवः ॥ ३४५ ॥

चिन्मायायोगरूपाख्यस्साक्षी तस्माद्वरो मतः ।
ब्रह्मयोगविहीना सा माया मिथ्यास्वरूपिणी ॥ ३४६ ॥

जडात्मिका महामाया कनिष्ठा स्याद्रवेरपि ।
ब्रह्माभासयुता माया शिवविष्ण्वोर्वरा मता ॥ ३४७ ॥

शिवेन साम्यभावेन वरत्वे केशवादपि ।
कथिता कुत्रचित् वेदे व्याकृतेषु वरो रविः ॥ ३४८ ॥

इति षण्मतैक्यस्वरूपकथनम्

## भक्तिक्रमनिरूपणम्

सनकादयः—

पञ्चस्वेकं समाश्रित्योपासनाक्रममार्गकम् ।
ब्रूहि त्वं कृपया देव सर्वतत्त्वविशारद! ॥ ३४९ ॥

गणक उवाच—

शक्तिसूर्यरमेशेषु ह्येकं देही समाश्रयेत् ।
कर्मभक्तिर्नराणान्तु प्रथमं संभवेद् द्विजाः! ॥ ३५० ॥

कर्माधिदेवता सूर्यस्तन्मार्गात्सौरमाश्रयेत् ।
सौराच्च वैष्णवं पश्चाद्वैशिष्ट्यप्रतिपादकम् ॥ ३५१ ॥

ततश्शैवं ततश्शाक्तं गाणेशं निर्गुणं ततः ।
कर्ममूलादूर्ध्वगतिप्रदो मार्ग उदीरितः ॥ ३५२ ॥

धर्मे श्रद्धायुतो मर्त्यो धर्मस्याधानमार्गतः ।
पुरुषार्थेषु धर्मन्तु समाश्रित्य ततः परम् ॥ ३५३ ॥

धर्माधिदेवतां विष्णुं रमया समुपाश्रयेत् ।
अर्थाधिदेवतां शम्भुं कामाधिदेवतां शिवाम् ॥ ३५४ ॥

मोक्षाधिदेवतां सूर्यं ब्रह्मभूयाधिदेवताम् ।
गजाननं पञ्चमञ्च क्रमेण समुपाश्रयेत् ॥ ३५५ ॥

पुरुषार्थक्रमश्चायं द्वारक्रम इति स्मृतः ।
उपासनाप्रवृत्तस्तु देवीं क्षिप्रप्रसादिनीम् ।। ३५६ ।।

आश्रयेत्प्रथमं पश्चात्सूर्यं विष्णुं सदाशिवम् ।
गजाननं समाश्रित्य ब्रह्मभूयमवाप्नुयात् ।। ३५७ ।।

एवन्तु त्रिविधो मार्गो वेदेषु परिकीर्तितः ।
गणेशद्वारदेवाश्च रमेशपूर्वकास्स्मृताः ।। ३५८ ।।

इति भक्तिक्रमनिरूपणम्

## कलानिरूपणम्

सनकादयः—

ब्रह्मांशमपि पञ्चानां कृपया वद देशिक! ।

गणक उवाच—

गाणेशं पञ्चमं ब्रह्म स्वानन्देशाख्यब्रह्मणः ।
कलामयमिति प्रोक्तं कलाषोडशराजितम् ।। ३५९ ।।

अव्याकृतो गुणेशानः कलाष्टकसमन्वितः ।
तत्कलासु कलायुक्ता प्रकृतिश्शक्तिरूपिणी ।। ३६० ।।

क्षेत्रज्ञसंज्ञिकस्सूर्यस्तथैव च कलायुतः ।
कलाद्वययुतो विष्णुर्विशिष्टेशस्वरूपवान् ।। ३६१ ।।

चतुःकलायुतश्शम्भुर्मायोपहित ईश्वरः ।
कलाष्टकयुते प्रोक्ते सिद्धिबुद्धी पृथक् पृथक् ।। ३६२ ।।

इति कलानिरूपणम्

इति श्रीविनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे गणेशोत्तरहृदये षष्टोऽध्यायः

## सप्तमोऽध्यायः

### स्वानन्दभवनवर्णनम्

सनकादयः—

ब्रह्मलोकश्श्रुतौ देव विशेषेण निरूप्यते ।
स्वानन्दभवनं कुत्र वर्तते तद्वद प्रभो ! ॥ १ ॥

गणक उवाच—

सत्यलोकान्तलोकाश्च पञ्चभूतमया स्मृताः ।
जाग्रदभिमानिनो वै अहङ्कारस्थितिस्स्मृतः ॥ २ ॥

महत्तत्त्वन्तु स्वाप्नस्याव्यक्तं सौषुप्तकस्य च ।
त्रिविधस्थितिरूपस्तु ब्रह्मलोक इति स्मृतः ॥ ३ ॥

कार्यब्रह्मलोक इति लोकोऽयं परिकीर्तितः ।
पुरुषाख्यस्थितिर्वेदे तुरीयसंज्ञिको वरः ॥ ४ ॥

कारणब्रह्मलोकस्स्यादिति वेदविदो विदुः ।
पञ्चायतनदेवानामत्र स्थानानि सन्ति च ॥ ५ ॥

कार्यकारणभावाभ्यां विहीनस्थितिरुत्तमः ।
साक्षाद्ब्रह्मलोक इति कथ्यते पञ्चमाभिधः ॥ ६ ॥

स्वानन्दभवनं चेति तदेव परिकीर्तितम् ।
स्वानन्दभवनालोको ज्योतिःपुञ्जमिति स्मृतः ॥ ७ ॥

कोटिसूर्यप्रतीकाशः कोटिशीतांशुशीतलः ।
विना प्रसादं देवस्य ब्रह्मणां ब्रह्मणस्पतेः ॥ ८ ॥

अगम्यशिवपूर्वाणां देवानां योगिनामपि ।
इक्षुसागरमध्यस्थं स्वानन्दभवनं वरम् ॥ ९ ॥
अनेककोटिब्रह्माण्डादूर्ध्वभागे प्रतिष्ठितः ।
कारणब्रह्मलोकस्तु तस्मादूर्ध्वमिदं स्मृतम् ॥ १० ॥
भ्रामरी त्वंपदा शक्तिरस्या मूर्ध्नि च तत्पदा ।
आधारशक्तिरास्ते च तन्मूर्ध्नि कामदायिनी ॥ ११ ॥
असिरूपा पराशक्तिः तन्मूर्ध्नि भवनं स्मृतम् ।
दशकोटियोजनैश्च विस्तृतं वर्तुलात्मकम् ॥ १२ ॥
बिन्दुरूपमहामायामयं स्थानमुदीरितम् ।
चिन्तामणिरत्नशिलानिर्मितं स्थानमुत्तमम् ॥ १३ ॥
निजलोके मध्यभागे पट्टणं ब्रह्मणस्पतेः ।
मूलस्थानन्तु तन्मध्ये गणेशस्य प्रकीर्तितम् ॥ १४ ॥
तत्र बिन्दुमये पीठे पूर्णोङ्कारस्वरूपवान् ।
परंज्योतिस्स्वरूपेण सर्वसाक्षी विराजति ॥ १५ ॥
निर्गुणं परमं ब्रह्म निष्कलज्योतिरूपतः ।
शून्योङ्कारमये पीठे विराजति सुनिर्मलम् ॥ १६ ॥
द्वयोरपि मध्यभागे द्विभेदपरिवर्जितम् ।
स्वयंज्योतिस्वरूपेण ब्रह्म स्वानन्दसंज्ञिकम् ॥ १७ ॥
एकाक्षरमये पीठे स्वस्वरूपेण राजति ।
आयाममपि विस्तीर्णमुन्नतं शतयोजनम् ॥ १८ ॥
प्रमाणं ज्योतिष्मच्चास्य कथितं योगपारगैः ।
अर्द्धमस्य द्वयोः प्रोक्तं प्रमाणन्तु पृथक् पृथक् ॥ १९ ॥

अग्नौ प्रकाशवत्तेषु सिद्धिबुद्धी च तिष्ठतः ।
प्रथमावरणे तेषामष्टस्थानानि सन्ति वै ।। २० ।।

बिन्द्वाद्यष्टस्थितिगता अष्टविघ्नेश्वराः वराः ।
अष्टस्थानेषु सन्त्येव वक्रतुण्डादयः क्रमात् ।। २१ ।।

क्रीडास्थानमिति प्रोक्तं वक्रतुण्डस्थलं वरम् ।
चिन्तामणिरत्नवरैर्निर्मिते रत्नमण्डपे ।। २२ ।।

रत्नपीठे सुखासीनस्सिद्धिबुद्धिसमन्वितः ।
गजाननश्चन्द्रचूडश्शुण्डादण्डविराजितः ।। २३ ।।

रक्तवर्णस्त्रिनयनो ह्येकदन्तविराजितः ।
पाशाङ्कुशरदाभीतिशोभिचारुचतुर्भुजः ।। २४ ।।

लम्बोदरः कम्बुकण्ठो रक्तवस्त्रविराजितः ।
सर्वाभरणशोभाढ्यः पीतवस्त्रोत्तरीयकः ।। २५ ।।

प्रीणनाय सिद्धिबुद्ध्योः वक्रतुण्डोऽथ बिन्दुकः ।
ब्रह्माण्डानामनन्तानि ससर्ज वीक्षणेन च ।। २६ ।।

तेषु तेषु पञ्चदेवान् स्थापयामास लीलया ।
सृष्ट्यादिपञ्चकृत्यानि कारयित्वा च पञ्चभिः ।। २७ ।।

सर्वसाक्षी स्वयं भूत्वा शक्तिभ्यां सह मोदते ।
एवं बहुविधां क्रीडां स्थित्वा तत्र करोत्ययम् ।। २८ ।।

अतः क्रीडास्थलं प्रोक्तं स्थानमेतन्मुनीश्वराः! ।
विचित्रस्थानमतुलमेकदन्तस्थलं स्मृतम् ।। २९ ।।

तत्र चिन्तामणिगृहे सुखासीनो गजाननः ।
सर्वाभरणशोभाढ्यो सिद्धिबुद्धिसमन्वितः ।। ३० ।।

प्रीतये सिद्धिबुद्ध्योश्च ब्रह्माण्डेषु च लीलया ।
रुद्रं कृत्वा पद्मभवं ब्रह्माणं तं सदाशिवम् ।। ३१ ।।

विष्णुं कृत्वा दिवानाथं भास्करं कमलापतिम् ।
सूर्यं चन्द्रमसं कृत्वा हिमांशुं दिननायकम् ।। ३२ ।।

चण्डालं ब्राह्मणं कृत्वा ब्राह्मणं चापि पञ्चमम् ।
हिमं वह्निस्वरूपञ्च वह्निञ्च हिमरूपिणम् ।। ३३ ।।

अणुमेव महामेरुं महामेरुमणुं तथा ।
रङ्कं कृत्वा च राजानं राजानं रङ्कमेव च ।। ३४ ।।

ब्रह्माणं स्तम्भरूपाढ्यं स्तम्भं कृत्वा च पद्मजम् ।
एवं कृत्वा विचित्राणि मोदते सिद्धिबुद्धियुक् ।। ३५ ।।

गीतस्थानं बोधरूपं महोदरस्थलं स्मृतम् ।
दिव्यसिह्मासनारूढस्सिद्धिबुद्धिसमन्वितः ।। ३६ ।।

ऋग्वेदो मूर्तिमांस्तत्र ब्राह्मणस्पत्यसूक्तकैः ।
गणेशसूक्तकेनैव स्तौति देवगुणान् मुदा ।। ३७ ।।

यजुर्वेदशशान्तिपाठैः गणेशसूक्तकेन च ।
स्तौति देवं गणेशानं सामवेदस्तदा विभुम् ।। ३८ ।।

नामाष्टकेन स्तुतिना गणेशसूक्तकेन च ।
गान्धर्ववेदसहितः करोति गानमादरात् ।। ३९ ।।

आथर्वणमन्त्रसूक्तैरथर्वा स्तौति विघ्नपम् ।
उपनिषत्पूरुषस्तु परविद्याप्रबोधकः ।। ४० ।।

प्रणौति शतसंख्याभिरथर्वशीर्षकादिभिः ।
इतिहासपुराणाख्यपुरुषो दिव्यविग्रहः ।। ४१ ।।

ब्रह्माण्डब्राह्मगाणेशज्ञानमारीचमौद्गलैः ।
ब्रह्मज्ञानसुखोदयसंज्ञकेनापि हृष्टधीः ।। ४२ ।।

अष्टाभिरपि गीताभिः प्रस्तौति गणनायकम् ।
शुद्धगाणपताऽद्वैतदर्शनेन गजाननम् ।। ४३ ।।

सिद्धान्तपूर्वकं स्तौति मीमांसा तत्त्वदर्शिनी ।
श्रुत्वा सर्वं गणेशानः शक्तिभ्यां सह मोदते ।। ४४ ।।

विलासस्थानमतुलं लम्बोदरस्थलं स्मृतम् ।
रत्नमञ्चे सुखासीनस्सिद्धिबुद्धिसमन्वितः ।। ४५ ।।

अणिमादिभिरानीतभक्ष्याणि विविधानि च ।
ददाति सिद्धिबुद्धिभ्यां गृहीत्वा शुण्डया विभुः ।। ४६ ।।

दत्तानि ताभ्यां हर्षेण भक्षयित्वा स्वयं विभुः ।
ताभ्यां प्रदत्वा ताम्बूलं दत्तं ताभ्यां स्वयं मुदा ।।४७।।

गृह्णाति वामहस्तेन महासिद्धिं पराम्बिकाम् ।
दक्षिणेन महाबुद्धिं समालिङ्ग्य प्रमोदते ।। ४८ ।।

केलिस्थानं गणेशस्य विकटस्थानमुच्यते ।
सहस्रदलसंयुक्तस्य मध्ये तु कमलस्य वै ।। ४९ ।।

कर्णिकायां दिव्यतल्पे शयानस्सिद्धिबुद्धियुक् ।
पीत्वाऽधरामृतं देवस्सिद्धिबुद्ध्योर्मुदान्वितः ।। ५० ।।

संपीड्य वामहस्ताभ्यां कुचौ सिद्धेर्गजाननः ।
दक्षिणाभ्यां महाबुद्धेश्चेष्टाश्शृङ्गाररूपकाः ।। ५१ ।।

करोति विविधा हृष्टो मायामोहविवर्जितः ।
विघ्नराजस्थलं प्रोक्तं निद्रास्थानमिति प्रभोः ।।५२।।

इक्षुसागरमध्ये तु सहस्रदलपङ्कजे ।
तत्कर्णिकामध्यदेशे मृदुमञ्जुलतल्पके ।। ५३ ।।

शयानो योगनिद्रां च करोति विघ्ननायकः ।
कुरुतस्सिद्धिबुद्धी च पादसंवहनं मुदा ।। ५४ ।।

धूम्रवर्णस्थलं प्रोक्तं नृत्तस्थानं परात्मनः ।
सहस्ररत्नस्तम्भैश्च निर्मिते रत्नमण्टपे ।। ५५ ।।

सिंहासने सिद्धिबुद्धी संस्थाप्य गणनायकः ।
ब्रह्मप्रलयकाले तु वामकुञ्चितपादुकः ।। ५६ ।।

स्वात्मानन्देन गणपः करोति नर्तनं मुदा ।
मृदङ्गमपि तालञ्च गुणेशगणकौ मुदा ।। ५७ ।।

वादयतश्चतुर्वेदा गायन्ति हर्षनिर्भराः ।
दक्षिणाकुञ्चितपदो यस्तु प्राकृताभिधे ।। ५८ ।।

करोति नर्तनं देवो पादेन हृष्टधीस्तदा ।
अव्याकृतलये देवः करोत्यूर्ध्वताण्डवम् ।। ५९ ।।

गानपूर्वहस्ततालं करोति सिद्धिनायिका ।
वीणागानं करोत्येव महाबुद्धिः पराम्बिका ।। ६० ।।

ब्रह्मप्रियमुखा दृष्ट्वा तिष्ठन्त्यानन्दनिर्भराः ।
आज्ञास्थानमिति प्रोक्तं गजाननस्थलं वरम् ।। ६१ ।।

सहस्रस्तम्भसंयुक्ते मण्टपे रत्ननिर्मिते ।
दिव्यसिंहासने रम्ये चतुष्पादविराजिते ।। ६२ ।।

दलाष्टकयुते पद्मे तीव्रादिशक्तिसंधृते ।
कर्णिकायां सुखासीनस्सिद्धिबुद्धिसमन्वितः ।। ६३ ।।

दिव्यवस्त्रपरीधानस्सर्वालङ्कारशोभितः ।
ज्येष्ठराजचिह्नयुक्तदिव्यमुद्राङ्गुलीयकः ।। ६४ ।।

श्वेतच्छत्रचामराणि धरन्त्येवाङ्गरक्षकाः ।
किञ्चिन्न्यूनतरे पीठे वामपूर्वे परात्मनः ।। ६५ ।।

अव्यक्तगणपो मन्त्री युवराडित्यपि श्रुतः ।
अव्याकृतो गुणेशोऽयं दिव्यपीठे सुसंस्थितः ।। ६६ ।।

विज्ञापनानि सर्वाणि विज्ञापयति विघ्नपे ।
विज्ञापके वाचयति यो ह्याज्ञां ब्रह्मणस्पतेः ।। ६७ ।।

यस्य वाक्यं प्रभुश्श्रुत्वा तत्कारयति तत्क्षणात् ।
यस्मादन्यस्तु यो वक्तुं न क्षमां ब्रह्मणस्पतौ ।। ६८ ।।

व्यष्टिसङ्घातोपहितचेतनो गणकः प्रभोः ।
याम्यपूर्वे दिव्यपीठे तिष्ठत्येव मुदान्वितः ।। ६९ ।।

अयं चापि गुणेशस्य मूर्तिरेव न संशयः ।
ब्रह्माण्डेषु संस्थितानां भक्तानां ब्रह्मणस्पतेः ।। ७० ।।

अण्डं लोकं दिशं देशं ग्रामं गोत्रं तथाश्रमम् ।
वर्णं गुरुं भक्तनाम पितुश्च वंशदेवताम् ।। ७१ ।।

पूर्वाचरितदेवञ्च भक्तकामानपि क्रमात् ।
स्वपुस्तके लिखति यो गणको गणकेश्वरः ।। ७२ ।।

पुस्तके यस्य लिखितनामाढ्यानां महात्मनाम् ।
अनुग्रहं मुदा देवः करोति ब्रह्मणस्पतिः ।। ७३ ।।

तत्र सेनापतीनां वै अयं सेनापतिस्स्मृतः ।
सुप्रभूतादयस्सर्वे मन्त्रिणश्चेति कीर्तिताः ।। ७४ ।।

अव्यक्तपार्श्वे तिष्ठन्ति सप्तकोटिगणाधिपाः ।
सेनान्यो वरदाद्याश्च चतुरङ्गबलान्विताः ।। ७५ ।।

अष्टकोटिगणेशानाः तिष्ठन्ति गणकं श्रिताः ।
आनेतुं भक्तप्रवरान् ब्रह्माण्डात् निजमन्दिरम् ।। ७६ ।।

अधिकारयुता भूताः प्रमोदप्रमुखा वराः ।
सर्वालङ्कारसंयुक्तास्तिष्ठन्त्यानन्दनिर्भराः ।। ७७ ।।

ब्रह्मप्रियश्च स्वानन्दभोक्ता ज्ञानमयः परः ।
सर्वगस्सर्वविद्योगप्रियः कालोऽथ मायिका ।। ७८ ।।

तिष्ठन्ति किङ्करा वीरास्समन्ताद् गणसंयुताः ।
विनायको विरूपाक्षः क्रूरकर्माऽपराजितः ।। ७९ ।।

गजग्रीवश्चण्डवेगो क्रूरश्चण्डपराक्रमः ।
एते विनायकाः प्रोक्ता मित्रभावमुपाश्रिताः ।। ८० ।।

पञ्चव्योमाधिपत्येषु संस्थिता गाणपा वराः ।
ब्रह्मात्मा चापि विष्ण्वात्मा सूर्यात्मा गजसंभवः ।।८१।।

मलजश्चेति विख्याताः पञ्च ब्रह्माण्डमण्डले ।
स्वानन्दभवनं प्राप्ताः कल्पान्ते गणपाज्ञया ।। ८२ ।।

गजाननस्वरूपाढ्यास्तिष्ठन्ति सदसि प्रभोः ।
पञ्चदेवाधिपत्येषु पूर्वकल्पे सुसंस्थिताः ।। ८३ ।।

ब्रह्माण्डेषु पञ्चदेवास्स्वानन्दभवनं गताः ।
तिष्ठन्ति कोटचस्तत्र सदसि ब्रह्मणस्पतेः ।। ८४ ।।

अन्ये समन्तात्तिष्ठन्ति सालोक्यपदसंस्थिताः ।
वेदाश्चैवोपनिषदो मीमांसा च पुराणकम् ।। ८५ ।।

अस्त्रदेवास्तथा मन्त्रास्तिष्ठन्ति सदसि प्रभोः ।
अत एव महाभागैस्तदाज्ञास्थलमुच्यते ।। ८६ ।।

अवतारमूर्तयो वै एषां शतप्रविश्रुताः ।
अन्तरालगृहेष्वेव तिष्ठन्ति मूर्तिसंयुताः ।। ८७ ।।

गणेशपुरमित्येव स्थानमेतत्प्रकीर्तितम् ।
अस्यैव वामभागे तु महासिद्धिपुरं वरम् ।। ८८ ।।

एतत्क्रमेण सिद्धिस्सा तिष्ठति गणसंयुता ।
दक्षिणे तु महाबुद्धेः पुरं चातिमनोहरम् ।। ८९ ।।

एतादृशक्रमेणैव बुद्धिस्तिष्ठति शोभना ।
पूर्वभागे गुणेशस्य पुरं चातिमनोहरम् ।। ९० ।।

अव्यक्तगणपो मन्त्री स्वस्यावतारमूर्तिभिः ।
स्वगणैर्वेष्टितस्तत्र नित्यानन्देन तिष्ठति ।। ९१ ।।

एवं पश्चिमभागे तु गणकस्य पुरं वरम् ।
स्वस्यावतारमूर्तिभिः गाणपत्यप्रवर्तकैः ।। ९२ ।।

गार्ग्यमुद्गलपूर्वैश्च गुरुभिर्गणसंवृतः ।
परब्रह्मगुरुश्चायं गुरुभिस्सह तिष्ठति ।। ९३ ।।

एवं सिद्धिपुरस्यैव पूर्वभागे पुरं महत् ।
लाभस्य सिद्धिपुत्रस्य गुणेशापरमूर्तिनः ।। ९४ ।।

तत्र तिष्ठति लाभोऽयं सर्वलाभप्रदायकः ।
तथा बुद्धिपुरस्यैव पूर्वे लक्षपुरं स्मृतम् ।। ९५ ।।

बुद्धिपुत्रो महालक्षो लक्षदस्तत्र तिष्ठति ।
कालस्तु बुद्धिपुरस्य पश्चिमे कालपट्टणे ।। ९६ ।।

विघ्नाविघ्नगणैस्साधं तिष्ठति प्रभुकिङ्करः ।
पश्चिमे सिद्धिपुरस्य मयूरापट्टणं स्मृतम् ॥ ९७ ॥

वैनायकी महामाया मयूरा विश्वमोहिनी ।
अनेककोटिमायाभिस्सेविता तत्र तिष्ठति ॥ ९८ ॥

एवमष्टपुराण्येव तिष्ठन्ति प्रथमावृतौ ।
सर्वेषां वाहनान्येव तिष्ठन्ति तत्र सन्निधौ ॥ ९९ ॥

पुरद्वारपार्श्वयोस्तु तिष्ठतौ द्वारपालकौ ।
ततो मोदादयः प्रोक्ताः सुप्रभूतादयस्ततः ॥ १०० ॥

वीराद्या वर्णदेवाश्च शस्त्रास्त्रदेवतास्तथा ।
सालरक्षाकराश्चापि तिष्ठन्ति सगणः क्रमात् ॥ १०१ ॥

एवं स्वानन्दभवनमिक्षुसागरमध्यगम् ।
स्वानन्दब्रह्मरूपाख्यं गणेशेन विनिर्मितम् ॥ १०२ ॥

महिम्नि पञ्चमस्थित्यां सर्वाधारं तदीरितम् ।
प्रार्थनात् सिद्धिबुद्ध्योश्च निर्मितं खेलकेन तत् ॥१०३॥

इति स्वानन्दभवनवर्णननिरूपणम्

## ध्याननिरूपणम्

सनकादयः—

मूलस्थाने गणेशानो ज्योतिरूपधरस्स्मृतः ।
ज्योतिस्तु त्रिविधेष्वेव कथं ध्येयस्तु मूर्तिमान् ॥१०४॥

गणक उवाच—

स्वयंज्योतिः परं ब्रह्म स्वानन्दसंज्ञिकं महः ।
गजवक्त्रत्वमाख्यातं स्वानन्देशस्य ब्रह्मणः ॥१०५॥

विषाणद्वयसंयुक्तः स्वानन्देशो गजाननः ।
तिष्ठतस्सिद्धिबुद्धी च पार्श्वयोः पद्महस्तके ॥ १०६ ॥

एवं ध्येयो गणेशानस्स्वानन्देशस्तु ज्योतिषि ।
ज्योतिषे निर्गुणाभिख्ये भग्नवामरदः प्रभुः ॥ १०७ ॥

वरहस्ते विषाणाढ्यो ध्येयो निर्गुणविघ्नपः ।
उपाविश्य सिद्धिबुद्धी तिष्ठतश्च तदङ्कयोः ॥ १०८ ॥

सगुणे ज्योतिषि वरे भग्नदक्षिणदन्तयुक् ।
पाशाङ्कुशवररदशोभिचारुचतुर्भुजः ॥ १०९ ॥

उपाविश्य पार्श्वयोश्च सिद्धिबुद्धी च तिष्ठतः ।
त्रिविधानां ब्रह्मणां च ध्यानमेवं प्रकीर्तितम् ॥ ११० ॥

इति ध्याननिरूपणम्

## अष्टोत्तरशतमूर्तीनां नामकथनम्

सनकादयः—

स्वानन्दभवने रम्ये स्थितानां ब्रह्मणस्पतेः ।
अष्टानां शतमूर्तीनामपि नामानि नो वद ॥ १११ ॥

गणक उवाच—

कैलासादिषु स्थानेषु ब्रह्माण्डे भक्तसत्तमैः ।
पूज्यमाना मूर्तयश्च युष्माभिस्तु शिंवाच्छ्रुताः ॥११२॥

स्वानन्दभवनस्थानां ब्रुवे शृणुत सादरम् ।
वक्रतुण्डस्सिद्धिबुद्धीपतिर्ढुण्ढिर्विराट्पतिः ॥ ११३ ॥

हिरण्यगर्भपश्चेशवरदश्चैकदन्तकः ।
पाराशर्यः कश्यपजः पुष्टीशः कपिलात्मजः ॥ ११४ ॥

ओंकारेशो मन्त्रपतिर्वेदानां वरदायकः ।
महोदरः पञ्चकन्यापतिर्ज्ञानारिनाशकः ॥ ११५ ॥

संकष्टहारकः पञ्चवरदो वरदाभिधः ।
गजाननो विघ्नहर्ता सिन्दूरगणनायकः ॥ ११६ ॥

स्कन्दाग्रजस्तत्त्वपतिर्ज्ञानेशो भोगनायकः ।
लम्बोदरश्शक्तिपतिश्शक्तिरूपधरस्तथा ॥ ११७ ॥

मूषकेशश्शक्तिपुत्रः श्रीशमीवरदस्तथा ।
श्रीशक्तिवरदस्सूर्यरूपधृक् च प्रभापतिः ॥ ११८ ॥

मयूरेशस्सूर्यपुत्रस्सूर्येशो विकटस्तथा ।
रक्तश्वेतार्कवरदो विघ्नेशश्शूर्पकर्णकः ॥ ११९ ॥

चतुर्भुजोऽथ लक्ष्मीशो विष्णुरूपगणेश्वरः ।
धरणीधरो विष्णवीशस्स्वात्मबुद्धिप्रकाशकः ॥ १२० ॥

धूम्रवर्णः शंभुरूपी पार्वतीगणनायकः ।
महेशवरदः कालो दूर्वागणपतिस्तथा ॥ १२१ ॥

श्वेतार्कगणपश्चैव शमीगणपतिस्तथा ।
मन्दारगणपश्चैव सुमङ्गलगणाधिपः ॥ १२२ ॥

गजदन्तो मलोद्भूतश्शोणभद्रगणाधिपः ।
कटंकटस्सुधामूर्तिर्हरिद्रागणनायकः ॥ १२३ ॥

अविमुक्तोऽथ गव्यश्च चन्दनो यक्षरूपधृक् ।
लक्षेश्वरोऽथ लाभेशस्सहस्रवदनस्तथा ॥ १२४ ॥

एकाक्षरस्त्रिमुखष्षण्मुखः पञ्चवक्त्रकः ।
सुमुखः कल्पको दुर्गामहागणपतिस्तथा ॥ १२५ ॥

दुर्मुखो निधिदः कुक्षिर्बालोऽघोरोऽथ नृत्तकः ।
शारदेशोऽथ भूतीशः कृष्णो लक्ष्मीगणेश्वरः ॥ १२६ ॥

भूमीश्वरो धूमकेतुर्वायुर्वह्निश्च पाशधृक् ।
आकाशगणपश्चेन्द्रो ह्याज्ञाक्षिप्रप्रसादनः ॥ १२७ ॥

एकोऽभयप्रदो ज्येष्ठराजश्च चतुराननः ।
आशापूरस्सिह्मवक्त्रस्तरुणो वृद्धसंज्ञकः ॥ १२८ ॥
सत्यश्चाष्टोत्तरशतमूर्तयो नैजसंस्थिताः ।

इति अष्टोत्तरशतमूर्तीनां नामकथनम्

## अवतारकालनिरूपणम्

सनकादयः—

एषामवतारकालं कृपया ब्रूहि देशिक! ।

गणक उवाच—

चतुर्ष्वपि युगेष्वस्य चत्वारः परिकीर्तिताः ।
मन्वन्तरेषु कथिताश्चतुर्दश मुनीश्वराः! ॥ १२९ ॥

दिनकल्पेषु त्रिंशच्च मासेषु द्वादश स्मृताः ।
अष्टचत्वारिंशत्तमा मूर्तयो वात्सरा विधेः ॥ १३० ॥
ब्रह्मप्रलयकालान्तं मूर्तयः परिकीर्तिताः ।

इत्यवतारकालनिरूपणम्

## पञ्चव्योमाधिपस्वरूपकथनम्

सनकादयः—

व्योमाधिपस्तु स्वानन्दवर्णने पञ्चधा स्मृतः ।
किमर्थं पञ्चभेदेन सः प्रोक्तस्तद्वद प्रभो ! ॥ १३१ ॥

गणक उवाच—

आकाशः पञ्चभेदेन वेदेषु सुनिरूपितः ।
तेन तत्त्वाधिपश्चापि पञ्चधा परिकीर्तितः ॥ १३२ ॥
ब्रह्मविष्णुसूर्यशक्तिशिवांशैस्सम्भवास्स्मृताः ।
पञ्चापि शक्तितनया इति वेदविदो विदुः ॥ १३३ ॥
गजोद्भवो द्वयोः पुत्रौ विशेषेण शिवप्रियः ।
मलजश्शक्तितनयश्शक्तेः प्रियतरो मतः ॥ १३४ ॥
द्वयोर्नैरृतिदिग्भागे मलजश्चैव तिष्ठति ।
गजजातो गणेशानो गोपुरद्वारदक्षिणे ॥ १३५ ॥
ब्रह्माद्यंशसमुद्भूता एवं तेषां स्थलेषु च ।
स्वर्गस्वानन्दभवने तिष्ठेदेव च पञ्चधा ॥ १३६ ॥

इति पञ्चव्योमाधिपस्वरूपकथनम्

## द्वादशसृष्टिनिरूपणम्

सनकादयः—

द्वादशानाञ्च सृष्टीनां स्वरूपं वद नो विभो ! ।

गणक उवाच—

गुणेशः पुरुषः प्रोक्तः प्रकृतिर्जगदात्मिका ।
गुणेशस्त्रिगुणाधारः प्रकृतिस्त्रिगुणात्मिका ॥ १३७ ॥

द्वयोस्संयोगभावेन जायते त्रिविधं जगत् ।
गुणेशस्थूलदेहाढ्यो जाग्रद्ब्रह्मेति कथ्यते ।। १३८ ।।

वेदे द्वादशभेदेन जागृत्सृष्टिः प्रकीर्त्यते ।
गुणेशसंकीर्णकाले स्वानन्देशो गजाननः ।। १३९ ।।

स ईक्षत गुणेशानं जागृद्ब्रह्मस्वरूपिणम् ।
तदा तस्य शरीराच्च समुद्भूतास्त्रिमूर्तयः ।। १४० ।।

तस्यैव सत्त्वकाले तु महारुद्रो बभूव च ।
रुद्रादेव समुद्भूतौ पितामहजनार्दनौ ।। १४१ ।।

पार्श्वयोश्चैव क्रमशो राजसे पद्मजोऽभवत् ।
भ्रूमध्यमुखदेशाभ्यां जातौ कस्य हरो हरिः ।। १४२ ।।

तथैव तामसे काले जातो नारायणो विभुः ।
भ्रूमध्यनाभिदेशाभ्यां जातौ कस्य हरो विधिः ।।१४३।।

संकीर्णकाले प्रकृतेर्वीक्षणाद् ब्रह्मणस्पतेः ।
दुर्गालक्ष्मीसरस्वत्यो प्रकृतेर्गुणशक्तयः ।। १४४ ।।

जागृद्ब्रह्मशरीराच्च संभूता लोकहेतवे ।
तदा ससर्ज ब्रह्माणं लक्ष्मीं लक्ष्मीर्गुणात्मिका ।।१४५।।

वाणीं रुद्रं महावाणी दुर्गां विष्णुश्च कालिका ।
लक्ष्मीं जग्राह गोविन्दो वाणीं देवश्चतुर्मुखः ।। १४६ ।।

महादुर्गां महारुद्रो मातृणां शासनेन च ।
प्रकृतेस्सत्त्वकाले तु बभूव च सरस्वती ।। १४७ ।।

सरस्वत्याश्च सञ्जाते लक्ष्मीश्च कालिकापि च ।
राजसे कमला चैवं तामसे कालिका तथा ।। १४८ ।।

द्वयोस्संकीर्णकाले तु प्रकृतेः पुरुषस्य च ।
ब्रह्मा विष्णुश्च रुद्रश्च लक्ष्मीर्वाणी च कालिका ॥
जागृद्ब्रह्मशरीराच्च संभूता ब्रह्मवीक्षणात् ।
एवं सात्त्विककाले तु सञ्जातौ कमला हरिः ॥ १५० ॥
केशवस्य नाभिदेशात् संजातः पद्मसंभवः ।
भ्रूमध्याद् ब्रह्मणो जातः कुमारो नीललोहितः ॥१५१॥
एवं राजसकाले तु सञ्जातौ भारतीविधी ।
बाह्वोस्तस्य समुद्भूतौ महादेवजनार्दनौ ॥ १५२ ॥
एवं तामसकाले तु सञ्जातौ पार्वतीशिवौ ।
शिवाद्विष्णुश्च ब्रह्मा च शक्तेर्लक्ष्मीस्सरस्वती ॥१५३॥
उपकल्पसृष्टयश्च प्रोक्ता द्वादशभेदतः ।

इति द्वादशसृष्टिनिरूपणम्

## सप्तविधकल्पनिरूपणम्

सनकादयः—

कल्पस्वरूपं नो ब्रूहि सप्तानामपि देशिक ! ।

गणक उवाच—

मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ।
एतदन्ते मर्त्यलोको नश्येदेव मुनीश्वराः! ॥ १५४ ॥
नित्यकल्प इति प्रोक्तो मनुकल्पो मुनीश्वरैः ।
चतुर्दशमुनीनाञ्च लयो नैमित्तिकस्स्मृतः ॥ १५५ ॥
दिनकल्प इति प्रोक्तो विधेर्नैमित्तिकाभिधः ।
दिनकल्पे ब्रह्मणस्तु भूर्भुवस्सुवरस्तथा ॥ १५६ ॥

रसातलान्तपाताललोका नाशमवाप्नुयुः ।
मर्त्यैर्देवजातिभवा देवा नाशमवाप्नुयुः ।। १५७ ।।

एवं शतवर्षयुक्तो विराड्देहधरो विधिः ।
पूर्वार्द्धे पद्मजस्यैव भुवनानि चतुर्दश ।। १५८ ।।

मरीचिभृगुपूर्वाश्च योगिनस्सनकादयः ।
ब्रह्मदेहसमुद्भूता विष्णुरुद्रहरादयः ।। १५९ ।।

प्रलयस्यैव वेगेन सर्वे नाशमवाप्नुयुः ।
जागृद्ब्रह्मस्थितौ ब्रह्मा स्वयं तिष्ठेज्जगत्पतिः ।।१६०।।

जागृद्ब्रह्मलयो वेदे ब्रह्मकल्प इति स्मृतः ।
स्वाप्नब्रह्मलयो विप्राः! विष्णुकल्प इति स्मृतः ।।१६१।।

सौषुप्तस्य लयो वेदे रुद्रकल्पस्तु प्राकृतः ।
अवान्तर इति प्रोक्ता सौषुप्तस्वाप्नसृष्टयः ।। १६२ ।।

गुणेशस्य लयोत्पत्तिस्तुरीयस्य श्रुतौ द्विजाः! ।
महाकल्प इति प्रोक्तो वेदशास्त्रपरायणैः ।। १६३ ।।

सान्निध्ये ब्रह्मणश्चैव संस्थितायाः द्विजोत्तमाः! ।
गुणशान्तिधरायास्तु मायाया योगमार्गतः ।। १६४ ।।

प्रलयो वेदतत्त्वज्ञैरात्यन्तिक इति स्मृतः ।
सगुणं निर्गुणं भावमुत्सृज्य ब्रह्म शाश्वतम् ।। १६५ ।।

स्वस्वरूपं भवेत्सत्यं भेदद्वयविहीनकम् ।
एवं सप्तविधाः कल्पा भवतां परिकीर्तिताः ।। १६६ ।।

इति सप्तविधकल्पनिरूपणम्

## वाहनस्वरूपनिरूपणम्

सनकादयः—

वाहनस्य स्वरूपं त्वं ब्रूहि नो ब्रह्मणस्पतेः ।

गणक उवाच—

चतुर्ब्रह्ममयो देवो गुणेश इति कथ्यते ।
चतुर्विधमिदं विश्वमसद्ब्रह्ममयं स्मृतम् ॥ १६७ ॥

असद्ब्रह्ममयी शक्तिस्तुरीयपदधारिणी ।
चतुर्विधेष्वभिमानधारकमात्मरूपकम् ॥ १६८ ॥

सत्सौरमिति विख्यातं स चतुर्थे स्वयं स्थितः ।
देहात्मनो साम्यभावधारकं सममुच्यते ॥ १६९ ॥

समब्रह्ममयो विष्णुर्व्यवहारेश्वरो मतः ।
अधिकृच्च त्रयाणान्तु मायोपहित ईश्वरः ॥ १७० ॥

शिवश्चैवेति कथितस्तुरीयपदधारकः ।
चतुर्णां संयोगमयस्तुरीयोऽयं गुणेश्वरः ॥ १७१ ॥

अव्याकृत इति प्रोक्तस्समष्टिरूपधारकः ।
अव्यक्त इति वेदेषु कथ्यते सर्वरूपवान् ॥ १७२ ॥

सर्वान्तर्यामी यः प्रोक्तो गुणेशो व्यक्तरूपवान् ।
देहिनां हृदये स्थित्वा भोगभोक्ता स्वयं विभुः ॥१७३॥

तत्कृतपुण्यपापाभ्यां स्वयं तु परिवर्जितः ।
चोरवद् भोगभोक्ता य चौर्यब्रह्मेति कथ्यते ॥१७४॥

'मुष-स्तेये' तथा धातुरिति शास्त्रविदो विदुः ।
स्तेयवद्भोगभोक्तायं जीवानां हृदि संस्थितः ॥ १७५ ॥

मूषकश्चेति कथितो मूषकाख्यो गुणेश्वरः ।
चतुर्ब्रह्ममयोऽयन्तु पञ्चमस्य परात्मनः ।। १७६ ।।
सेवार्थं वाहनो जातस्तेन मूषकवाहनः ।
इति वेदेषु कथितः पञ्चमो ब्रह्मणस्पतिः ।। १७७ ।।
अश्वो वेदमयः प्रोक्तस्तेनाश्ववाहकोऽभवत् ।
मायामयूर इति च कथ्यते वेदपारगैः ।। १७८ ।।
मायाभासमयो विष्णुर्मयूरस्संबभूव च ।
मयूरवाहनश्चेति तेनायं कथितोऽभवत् ।। १७९ ।।
गुहागतस्तु क्षेत्रज्ञस्सूर्यस्तु सिह्म उच्यते ।
तेनायं सिह्मवाहस्स्याच्छेषो हरिहरात्मजः ।। १८० ।।
शिवविष्णुमयश्चेशस्तुरीयपदधारकः ।
तेनैव पञ्चमो देवश्शेषवाहन उच्यते ।। १८१ ।।
गजरूपधरः कालस्तेनायं गजवाहनः ।
सर्वेष्वपि गुणेशानश्श्रेष्ठत्वाद्वेदशासनात् ।। १८२ ।।
गणेशवाहनेष्वेव मूषकश्श्रेष्ठ उच्यते ।
तेन मूषकवाहेति संस्तुतो वेदपूरुषैः ।। १८३ ।।

इति वाहनस्वरूपनिरूणम्

## शिवस्य मूषकत्वनिरूपणम्

सनकादयः—

मूषकं शंकरं प्राहुः केचित्तत्कारणं वद ! ।

गणक उवाच—

चतुर्ब्रह्ममयो मूर्तिर्गुणेशस्तु तुरीयकः ।
चतुर्षु माययोपहितः परमेश्वर उच्यते ।। १८४ ।।

चतुर्ष्वयं तुरीयस्स्यात्तुरीय इति विश्रुतः ।
अधोभागे पञ्चमस्य तुरीय एव कथ्यते ।। १८५ ।।
तुर्यारूढः पञ्चमस्स्यात्तेनायं मूषकस्स्मृतः ।

इति शिवस्य मूषकत्वनिरूपणम्

## गणकस्वरूपनिरूपणम्

सनकादयः—

गणकस्य स्वरूपं नः कृपया वद देशिक! ।

गणक उवाच—

व्यष्टिसंघातोपहितचेतनस्तु तुरीयकः ।
कूटस्थ इति विख्यातस्स एव गणकस्स्मृतः ।। १८६ ।।
स एव हंसस्सेनानीस्स्वानन्दब्रह्मणस्पतेः ।
सर्वेष्वपि च लोकेषु गुरुराद्यः प्रकीर्तितः ।। १८७ ।।
परब्रह्मगुरुश्चायं गुरूणां गुरुरुच्यते ।

इति गणकस्वरूपनिरूपणम्

## लक्षलाभस्वरूपनिरूपणम्

सनकादयः—

लक्षलाभस्वरूपं नः कृपया वद देशिक! ।

गणक उवाच—

गणेशवीक्षणाद् बुद्धेर्जातो लक्षो महाबलः ।
सिद्धेर्जातस्तथा लाभो बुद्धिसिद्धिसमाश्रितौ ।। १८८ ।।

अव्यक्तस्यापरमूर्तिस्स लाभो लाभदायकः ।
कूटस्थस्यापरमूर्तिस्सः लक्षो लक्ष्यदायकः ॥ १८९ ॥

आत्मनः पञ्चमस्यैव तनयो लोकपूजितौ ।
गणकाव्यक्तरूपौ तौ जगद्ब्रह्मगतौ मतौ ॥ १९० ॥

इति लक्षलाभस्वरूपनिरूपणम्

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे गणेशोत्तरहृदये सप्तमोऽध्यायः

—०—

## अष्टमोऽध्यायः

### पञ्चदेवोपासनक्रमनिरूपणम्

सनकादयः—

पञ्चायतनदेवानामुपासनक्रमं वद ।

गणक उवाच—

नामानुकीर्तनं यज्ञो मूलमन्त्रजपस्तथा ।
विचारश्चानुसंधानं पञ्चधोपासनं स्मृतम् ॥ १ ॥

वेदानां चोपनिषदामितिहासपुराणयोः ।
मीमांसानामुत्तराणां पठनं योगिभिर्वरैः ॥ २ ॥

स्वाध्याययज्ञ इति च नामकीर्तनमित्यपि ।
कथितं चैकनाम्नश्च कीर्तनं नामकीर्तनम् ॥ ३ ॥

मन्त्राश्चतुर्विधाः प्रोक्ता वेदोपनिषदादिषु ।
'गणानान्त्वे'ति पूर्वाद्या वेदमन्त्रा इति स्मृताः ॥ ४ ॥

षडर्णैकाक्षराद्याश्च मूलमन्त्रा इति स्मृताः ।
'तत्पुरुषाय विद्महे' मुखामन्त्रा अनुत्तमाः ॥ ५ ॥

गायत्रीमन्त्रा इति च कथ्यते वेदपारगैः ।
केवलं नामरूपाश्च मन्त्रलक्षणवर्जिताः ॥ ६ ॥

नाममन्त्रा इति प्रोक्ता जपे नियमवर्जिताः ।
नामानुकीर्तनाद्यज्ञा पराश्चेति प्रकीर्तिताः ॥ ७ ॥

कर्मोपासनकाण्डयोश्च यज्ञा वेदेषु कीर्तिताः ।
सचेतनजन्तुहिंसावर्जितो यज्ञ उत्तमः ॥ ८ ॥

ब्राह्मणस्पत्यपूर्वाश्च देवोपासनकाण्डके ।
कथिता वाजपेयाद्याः कर्मकाण्डप्रविश्रुताः ॥ ९ ॥

हिंसायज्ञात्तद्विहीनश्श्रेष्ठ इत्यभिधीयते ।
ऋग्मन्त्रश्चापि गायत्री समानाविति कीर्तितौ ॥ १० ॥

द्वयोरपि मूलमन्त्रो वरस्सत्यं न संशयः ।
यज्ञाद्वरो मन्त्रजपो जपयज्ञ इति स्मृतः ॥ ११ ॥

ब्रह्मस्वरूपज्ञानार्थं प्रस्थानत्रयरूपकम् ।
वेदान्तशास्त्रमतुलं युगाचार्यैः प्रकीर्तितम् ॥ १२ ॥

उपनिषदां प्रस्थानं प्रथमं त्रिषु कीर्तितम् ।
प्रस्थानमपि गीतानां द्वितीयमिति कीर्तितम् ॥ १३ ॥

प्रस्थानं दर्शनानान्तु तृतीयमिति कथ्यते ।
उपनिषत्सु सर्वासु शतोपनिषदो वराः ॥ १४ ॥

पृथक् पृथक् गृहीताश्च मतस्थैरपि पञ्चकैः ।
उपनिषदो विख्याताः पञ्चस्वपि च या वराः ॥ १५ ॥

शुद्धाद्वैतपरैस्ताश्च गृहीताः प्रथमे वरे ।
विचारानुभवसिद्धचै दर्शनद्वयमुत्तमम् ।। १६ ।।

तथा गीताद्वयं चापि षण्णामपि श्रुतानि वै ।
श्रवणं मननेनापि निदिध्यानपुरस्सरम् ।। १७ ।।

ज्ञानं चैवेति कथितं जप्याद् ज्ञानं वरं मतम् ।
गुणनिर्गुणरूपाख्यध्यानं ज्ञानाद्वरं मतम् ।। १८ ।।
निर्विकल्पध्यानसिद्धो ब्रह्मभूयमवाप्नुयात् ।

इति पञ्चदेवोपासनक्रमनिरूपणम्

## ध्यानयोगनिरूपणम्

सनकादयः—

ब्रह्मानुभवसिद्धचर्थं ध्यानयोगं वद प्रभो! ।

गणक उवाच—

असंप्रज्ञातसमाधिर्दशधा परिकीर्तितः ।
दशानामनुभवेन योगी शान्तिमवाप्नुयात् ।। १९ ।।

संप्रज्ञातसमाधिस्तु षोडशस्थितिरूपकः ।
अष्टधा कथितो योगे ध्यानयोगे तु योगिनः ।। २० ।।

अनूसारात्षण्मतानां वदन्ति च पृथक् पृथक् ।
योगं नादानुसन्धानं शंसन्ति स्मार्तमार्गिणः ।। २१ ।।

किञ्चिद्भेदतया तं तु शंसन्ति गाणपा अपि ।
शिवराजं प्रशंसन्ति शांभवा योगमार्गिणः ।। २२ ।।

किञ्चिद्भेदतया तं तु शंसन्ति शाक्तमार्गिणः ।
हरिराजं वैष्णवास्तु सौरा वै हंसराजकम् ।। २३ ।।

मूलाधारे गणेशानो बिन्दुरूपस्तु पञ्चमः ।
स्वाधिष्ठाने विधिर्विष्णुर्मणिपूरे सदाशिवः ।। २४ ।।

अनाहते विशुद्धयान्तु गुणेशस्त्रिगुणात्मकः ।
आज्ञायां निर्गुणं ब्रह्म द्विभेदपरिवर्जितम् ।। २५ ।।

स्वस्वरूपं परं ब्रह्म द्वादशान्ते प्रकीर्तितम् ।
जपमानसपूजाभ्यामाधारात् क्रमयोगतः ।। २६ ।।

आज्ञादशान्तं ध्यानन्तु निश्चलेनैव चेतसा ।
आरोहणावरोहणैः क्रियमाणं दिने दिने ।। २७ ।।

प्रोक्तं नादानुसन्धानमिति गाणपसत्तमैः ।
एकाक्षरमन्त्रजपो योगेऽस्मिन् परिकीर्तितः ।। २८ ।।

एवं तारकराजस्तु स्मार्तानां कथ्यते क्रमात् ।
मूलाधारे गणेशस्य गणेशस्य मनुस्स्मृतः ।। २९ ।।

स्वाधिष्ठाने पद्मजस्य मणिपूरे रमापतेः ।
अनाहते महेशस्य विशुद्धयां भास्करस्य च ।। ३० ।।

आज्ञायां प्रणवस्यैव जपस्तेषां प्रकीर्तितः ।
ब्रह्मरन्ध्रे च ते हंसं बोधरूपं स्मरन्ति च ।। ३१ ।।

शिवराजाभिधे योगे विशुद्धयान्तु महेश्वरम् ।
सदाशिवमथाज्ञायां ब्रह्मरंध्रे परश्शिवम् ।। ३२ ।।

पञ्चाक्षरेण मनुना योगं कुर्वन्ति शाम्भवाः ।
एवमेव महाशाक्ता ब्रह्मरंध्रे पराम्बिकाम् ।। ३३ ।।

ध्यायन्ति पञ्चदश्या वा मायाबीजेन वा क्रमात् ।
हरिराजे वैष्णवास्तु विशुद्धयां जीवरूपिणम् ।। ३४ ।।

संकर्षणमथाज्ञायां वासुदेवं तुरीयकम् ।
परवासुदेवसंज्ञं ब्रह्मरन्ध्रे विधानतः ।। ३५ ।।

अष्टाक्षरविधानेन द्वादशार्णेन वा पुनः ।
हंसराजे तु सौराश्च मूलाधारे गजाननम् ।। ३६ ।।

स्वाधिष्ठाने ब्रह्मसूर्यं सूर्यनारायणं तथा ।
मणिपूरे शिवसूर्यमनाहतस्थले वरे ।। ३७ ।।

गुणसूर्यं विशुद्ध्यां वै आज्ञायां निर्गुणं वरम् ।
तुरीयं पुरुषं सत्यं ब्रह्मरन्ध्रे तु हंसकम् ।। ३८ ।।

अष्टाक्षरेण विधिना कुर्वन्ति योगसिद्धये ।
सालम्बमेवं संसाध्य निरालम्बमवाप्नुयुः ।। ३९ ।।

एवंकर्तुमशक्ताश्च चैकाधारमुपाश्रिताः ।
अन्तःकरणं वेदेषु हृदयं चेति कीर्तितम् ।। ४० ।।

पादादिमूर्द्धपर्यन्तं मनस्तिष्ठति देहिनाम् ।
मूलाधारं समारभ्य मूर्द्धान्तं हृदयं वरम् । ४१ ।।

येन केन प्रकारेण ध्यानं कार्यं मनीषिभिः ।
तुर्यातीतब्रह्मणस्तु मूलाधारः प्रकीर्तितः ।। ४२ ।।

ब्रह्मरन्ध्रं तुरीयस्य प्राहुः केचन योगिनः ।
ब्रह्मणो द्वादशान्तं तु सर्वेषां संमतं स्मृतम् ।। ४३ ।।

इति ध्यानयोगनिरूपणम्

## योगदेवस्वरूपनिरूपणम्

**सनकादयः—**

योगदेवस्वरूपं नः कृपया वक्तुमर्हसि ।

गणक उवाच—

असंप्रज्ञातयोगे तु स्थितानां नियमो न हि ।
ध्यानयोगपरास्सर्वे संप्रज्ञातमुपाश्रिताः ।। ४४ ।।

ध्यानयोगमयस्यैव योगस्य सगुणात्मनः ।
ध्यानं जीव इति प्रोक्तं कृतं निश्चलचेतसा ।। ४५ ।।

मानसार्चनसंयुक्तजपो देह इति स्मृतः ।
योगबोधकप्रस्थानविचाराङ्गं तूदीरितः ।। ४६ ।।

वर्णाश्रमादिकं सर्वमुपाङ्गं परिकीर्तितम् ।
योगप्रदोपनिषदो ब्राह्मणस्पत्यपूर्वकाः ।। ४७ ।।

योगप्रदा तु मीमांसा मुद्गलादेशदर्शनम् ।
योगगीता गणेशस्य योगज्ञानप्रदायिनी ।। ४८ ।।

प्रस्थानत्रयमाख्यातमेवं योगप्रदायकम् ।
षण्णामपि मतानाञ्च वर्तते च पृशक् पृथक् ।। ४९ ।।

इति योगदेवस्वरूपनिरूपणम्

## ज्ञाननिष्ठस्वरूपनिरूपणम्

सनकादयः—

स्वरूपं ज्ञाननिष्ठानां कृपया वद देशिक ! ।

गणक उवाच—

ज्ञानसाक्षात्कारयुता ज्ञानिनश्चेति कीर्तिताः ।
ब्रह्मसाक्षात्कारयुता ज्ञानिनो योगमार्गिणः ।। ५० ।।

विचारादिषु ये संस्थाः ज्ञाननिष्ठा इति स्मृताः ।
षण्णामपि मतानाञ्च प्रस्थानत्रयमीरितम् ।। ५१ ।।

स्वस्वमार्गेषु ये संस्थास्तत्तदद्वैतिनस्स्मृताः ।
शुद्धाद्वैतं पञ्चभिश्च ज्ञानं चेत्तु विशेषतः ।। ५२ ।।

शुद्धाद्वैतविचारज्ञाः पञ्चज्ञानविवर्जिताः ।
न शुद्धाद्वैतिनः प्रोक्ता न च स्मार्ता प्रकीर्तिताः ।।५३।।

हैरण्यगर्भा इति ते ह्याभासमार्गगास्स्मृताः ।
मतवर्णाश्रमैर्धर्मैर्विचारे संस्थितो नरः ।। ५४ ।।

ज्ञाननिष्ठ इति प्रोक्तो धर्मद्वयविवर्जितः ।
विचारे नाधिकारी स्यात्स तु पाषण्ड उच्यते ।। ५५ ।।

ज्ञानरूपस्य देहस्य सूक्ष्मदेह उदीरितः ।
मूलमन्त्रजपस्तस्य बुद्धिरित्यभिधीयते ।। ५६ ।।

अर्चनन्तु मनः प्रोक्तं मतवर्णात्मकानि च ।
नित्यकर्माणि प्राणास्स्युस्सूक्तोपनिषदं प्रभोः ।। ५७ ।।

नेत्रे तस्य नासिका तु नामसाहस्रकं वरम् ।
नासिका पूर्वगीता तु रसना दर्शनाभिधम् ।। ५८ ।।

शास्त्रं त्वक्तथा तस्य पुराणं चेतिहासकम् ।
श्रवणे वर्मपूर्वाणां पठनं वागिनी स्मृतम् ५९ ।।

आलये सेवनं पादौ पाणिस्तु वन्दनं स्मृतम् ।
पुण्ड्राक्षधारणं तस्य लिङ्गमित्यभिधीयते ।
अवैदिकतिरस्कारो गुदमित्यभिधीयते ।। ६० ।।

इति ज्ञाननिष्ठस्वरूपनिरूपणम्

## उपासनापुरुषस्वरूपनिरूपणम्

**सनकादयः—**

**उपासनापूरुषस्य स्वरूपं चापि नो वद ।**

**गणक उवाच—**

**उपासनापूरुषस्य देहस्स्थूल इति स्मृतः ।**
**पञ्चभूतानि पञ्चाङ्गोपासनं परिकीर्तितम् ।। ६१ ।।**
**दीक्षासंस्कारधर्माणामनुष्ठानमहंकृतिः ।**
**मन्त्राङ्गानां जपस्तस्य चित्तं चेति प्रकीर्तितम् ।। ६२ ।।**
**ज्ञाननिष्ठवच्छेषतस्स्वरूपमुदीरितम् ।**

इत्युपासनापुरुषस्वरूपनिरूपणम्

## मन्त्रसिद्धौ जपसंख्यानिरूपणम्

**सनकादयः—**

**मन्त्रादीनां जपे संख्यां सिद्ध्यां नो वद देशिक! ।**

**गणक उवाच—**

**एकाक्षरो महामन्त्रो जपैश्च शतकोटिभिः ।**
**पुरश्चर्यां विना मुक्तिप्रदस्सत्यं न संशयः ।। ६३ ।।**
**षडक्षरो महामन्त्रस्संख्याभिष्षष्टिकोटिभिः ।**
**महागणपतेर्मन्त्रास्संख्याभिर्वर्णकोटिभिः ।। ६४ ।।**
**ऋङ्मन्त्रश्चापि गायत्री चैवं चाधिकवर्णकाः ।**
**सहस्रनामस्तोत्रस्य लक्षसंख्या प्रकीर्तिता ।। ६५ ।।**
**स्तवराजवेदपादस्तवब्राह्मणस्पत्यकम् ।**
**एवं लक्षसंख्यया च कीर्तितस्सिद्धिदायकः ।। ६६ ।।**

कवचं पञ्जरं हार्दं सिद्धिदानि त्रिलक्षकैः ।
अयुतेन सिद्धिदात्री गीता तत्त्वप्रबोधिनी ।। ६७ ।।

इतिहासपुराणानां शतवारमुदीरितम् ।
सेवनं वन्दनं चापि सिद्धिदं लक्षसंख्यया ।। ६८ ।।

अयुतेन सिद्धिदात्री चतुर्थी पक्षयोरपि ।
गार्त्समदोक्तविधानेन कृतं चेन्मानसार्चनम् ।। ६९ ।।

दशसाहस्रवारन्तु सिद्धिदं पूर्णभावतः ।
पञ्चविंशतिसाहस्रवारेण यन्त्रपूजनम् ।। ७० ।।

श्वेतार्कमूलबिम्बे तु पूजनं चायुतं स्मृतम् ।
लक्षवारेण शोणस्य पूजनं सिद्धिदायकम् ।। ७१ ।।

श्रावणे मासपूजा तु शतवारेण सिद्धिदा ।
विघ्नेशपूजनं द्वारपीठशङ्खप्रपूजनम् ।। ७२ ।।

कलशस्य पूजनञ्च देवेष्टपत्रपूजनम् ।
आदावन्ते मन्त्रजपो अष्टाङ्गानि च पूजने ।। ७३ ।।

कल्पोक्तदीक्षाविधिना स्थितिमेकां समाश्रितः ।
उपासनापूरुषाङ्गैर्द्वादशाब्दं विधानतः ।
आराधने संस्थितश्चेत्तस्य सिद्धिर्भवेद् ध्रुवम् ।। ७४ ।।

इति मन्त्रसिद्धौ जपसंख्यानिरूपणम्

## समष्टयाराधने संख्यानिरूपणम्

सनकादयः—

समष्टयाराधने संख्यां मन्त्रादीनां वद प्रभो! ।

गणक उवाच—

एकाक्षरस्य मन्त्रस्य कोटिरेव प्रकीर्तिता ।
षष्ठिलक्षाष्षडर्णस्य ह्यन्येषां वर्णलक्षका: ।। ७५ ।।

अथर्वशीर्षपूर्वाणां सहस्रा परमा मता ।
शतवारं तु गीताया चतुर्थी शतकीर्तिता ।। ७६ ।।

मासार्चनं द्वादश स्यात् पुराणपठनं दश ।
साहस्राणां त्रयेणैव सिद्धिदं मानसार्चनम् ।
पुरश्चर्याक्रमेणैव जपाद्याः परिकीर्तिताः ।। ७७ ।।

इति समष्टयाराधने संख्यानिरूपणम्

## उषःकाले एकाक्षरजपविधिनिरूपणम्

सनकादयः—

एकाक्षरादिमन्त्राणां विधिं ब्रूहि जपे विभो ! ।

गणक उवाच—

षट्कालेष्वथ चतुर्षु त्रिषु सन्ध्या द्वयेऽपि वा ।
एकाक्षरजपः कार्यो मन्त्रसन्ध्यापुरस्सरम् ।। ७८ ।।

उषःकाल उत्तमः प्रोक्तस्सायं प्रातश्च मध्यमौ ।
मध्यसंगवतुर्या वै अधमाश्चेति कीर्तिताः ।। ७९ ।।

वरा द्वादशसाहस्रसंख्या ह्येकाक्षरस्य तु ।
गुणसाहस्रसंख्या वै मध्यमा चेति कीर्तिता ।। ८० ।।

सहस्रसंख्या ह्यधमा त्रिशता ह्यधमाधमा ।
निकृष्टा शतसंख्या स्यात्तस्मान्न्यूना न च स्मृता ।।

कालानुसारतो जप्या मन्त्रा जपपरायणैः ।
देवतासन्निधौ चापि निरन्तरजपेऽपि च ।। ८२ ।।

न कालनियमो विप्राः! यथेष्टं जपमाचरेत् ।
रात्रौ यामद्वयं वर्ज्यं निरन्तरजपे द्विजाः! ।। ८३ ।।

देवतासन्निधौ रात्रौ यामाभ्यामपराह्णकम् ।
वर्ज्यमेव न सन्देहः पूजनेऽपि जपे तथा ।। ८४ ।।

विहितेषु च कालेषु कर्तव्यौ ग्रहणादिषु ।
ब्राह्मे काले समुत्थाय शयनाद् गणपोत्तमः ।। ८५ ।।

यथाशक्तिशुचिर्भूत्वा संपूज्य मनसा विभुम् ।
मूर्द्धादिपादपर्यन्तं वर्णनस्तुतिपूर्वकैः ।। ८६ ।।

स्तुत्वा पञ्चरत्नकेन सुप्रभातेन तत्परम् ।
नैऋतीञ्च दिशं गत्वा मलमूत्रं विसर्जयेत् ।। ८७ ।।

शुद्धिं कृत्वा विधानेन दन्तशुद्धिं समाचरेत् ।
मलस्नानं पुरा कृत्वा पश्चाद्ङ्गस्नानमाचरेत् ।। ८८ ।।

मन्त्रस्नानं विधानेन कृत्वा मध्ये ततः परम् ।
यक्ष्माणं तर्पयित्वा च धारयेद्वस्त्रयुग्मकम् ।। ८९ ।।

वर्णाश्रमानुसारेण देवतापरितोषकम् ।
गुरुमार्गानुसारेण पुण्ड्रं धृत्वा यथाविधि ।। ९० ।।

गाणेशैस्तिलकं धार्यं केवलं वान्यपुण्ड्रकैः ।
गाणेशाक्षधारणेन चेलाजिनकुशोत्तरैः ।। ९१ ।।

आसनं परिकल्प्यैव मन्त्रदैवतपूर्वकम् ।
भूतशुद्धिं विधायादौ प्राणानां स्थापनं ततः ।। ९२ ।।

अन्तर्बहिर्मातृकाणां न्यासं गाणपतं चरेत् ।
उपास्य मन्त्रसन्ध्याञ्च वैदिकीं वाथ तान्त्रिकीम् ॥९३॥

जप्त्वा गणेशगायत्रीं मूलमन्त्रं ततःपरम् ।
नाममन्त्रं ततो जप्त्वा वर्णसन्ध्यां समाचरेत् ॥ ९४ ॥

जपारम्भे तु कवचं जपान्ते हृदयं पठेत् ।
उषःकालजपस्यैवं क्रमः प्रोक्तो मनीषिभिः ॥ ९५ ॥

इति उषःकाले एकाक्षरजपविधिनिरूपणम्

## पञ्चायतनपूजानिरूपणम्

सनकादयः—

पञ्चायतनपूजाया गणेशस्य विधिं वद! ।

गणक उवाच—

गाणेशा वैदिका लोके पञ्चधा परिकीर्तिताः ।
ज्ञानकाण्डे तु गाणेशा गाणेशाद्वैतिनस्स्मृताः ॥ ९६ ॥

उपासनापराः प्रोक्ता गाणेशा वैदिका इति ।
भक्तिमार्गगताः प्रोक्ता भक्तगाणपता इति ॥ ९७ ॥

पञ्चपूजापरा विप्रास्स्मार्तगाणपता इति ।
कर्मस्मार्तगाणपयोर्नास्ति दीक्षा मुनीश्वराः! ॥ ९८ ॥

दीक्षितादीक्षितभेदादन्ये वै द्विविधास्स्मृताः ।
एवमष्टप्रभेदेन गाणेशा वैदिकास्स्मृताः ॥ ९९ ॥

पञ्चायतनमध्यस्थो गुणेशो न गणेश्वरः ।
स्मार्तगाणपतेनैव दीक्षा गाणपती वरा ॥ १०० ॥

गार्ग्यकल्पोक्तमार्गेण गृहीता यदि चेद् द्विजाः ।
पञ्चार्चनं पृथक्कार्यं सन्ध्यामात्रजपादिवत् ।। १०१ ।।

मध्याह्ने संगवे वापि कार्यं तन्नात्र संशयः ।
पञ्चार्चने गणेशस्य स्थापनं द्विविधं भवेत् ।। १०२ ।।

रविशक्ती मुनीशानाः! द्वारमार्गानुसारके ।
शक्तिस्स्थाप्या नैऋतौ गुणेशस्याङ्गमार्गतः ।। १०३ ।।

रविस्स्थाप्यो नैऋतौ वै एवं भेद उदीरितः ।
गजाननं सिद्धिबुद्धी गणकं गाणपोत्तमान् ।। १०४ ।।

नत्वा क्रमेण पूर्वन्तु जपपूजनमाचरेत् ।
ध्यानश्लोकेन मन्त्राणां सर्वानपि नमेत्क्रमात् ।। १०५।।

ब्रह्माणं शंकरं विष्णुं रविं शक्तिं गुहं भृगुम् ।
भ्रुसुण्डीं मुद्गलं गार्ग्यं नमेद्व्यासञ्च गाणपान्।।१०६।।

एते नम्याश्च गाणेशा गणकं परं क्रमात् ।
पूजाद्रव्याणि संपाद्य दूर्वाङ्कुरमुखानि च ।। १०७ ।।

भूतशुद्ध्यादिकं कृत्वा पूजार्थं समुपाविशेत् ।
अविघ्नेन समाप्त्यर्थं गणेशपूजनं चरेत् ।। १०८ ।।

पूजनं चन्दने कार्यं लघ्वोपचारसंयुतम् ।
तिथिवाराणि संकल्प्य द्वारपूजां ततश्चरेत् ।। १०९ ।।

सदैकदन्तसंयुक्तो गुणेशस्तु तुरीयकः ।
द्विदन्तैकदन्तभेदाद् गणेशानो द्विधा स्मृतः ।। ११० ।।

स्वस्वरूपमयं ब्रह्म दन्तद्वयसमन्वितम् ।
निर्गुणो गणनाथस्तु भग्नवामरदान्वितः ।। १११ ।।

सगुणो भग्नदन्तोऽयं दक्षिणे मुनिसत्तमाः! ।
द्विविधन्तु गणेशस्य कथितं कालभेदतः ॥ ११२ ॥

निर्गुणो बुद्धिगः प्रोक्तस्सगुणस्सिद्धिगस्स्मृतः ।
सिद्धिबुद्धी गतश्चायं स्वानन्देशो गजाननः ॥ ११३ ॥

शक्तिसूर्यविष्णुशिवास्स्वानन्देशस्य द्वारपाः ।
आत्मा तु पञ्चमस्यैव स्वानन्देशो गजाननः ॥ ११४ ॥

पञ्चमस्य पूजने तु पूर्वादिषु क्रमेण च ।
मार्जारी कमलाविष्णू विरजा गिरिजाशिवौ ॥ ११५ ॥

आश्रया शक्तिशक्तीशौ मुक्ता सूर्यः प्रभापि च ।
गुणेशस्य पूजने तु पश्चिमे रतिमन्मथौ ॥ ११६ ॥

महीवराहावाख्यातौ उत्तरे तु क्रमेण च ।
गुणेशद्वारपूजा तु कर्तव्या द्वारपूजने ॥ ११७ ॥

द्वारपूजां पुरा कृत्वा वाहनं पूजयेत्ततः ।
घण्टाग्रे तु प्रार्थनेन घण्टानादं ततश्चरेत् ॥ ११८ ॥

मूलमन्त्रं गणेशस्य जप्त्वा कलशपूजनम् ।
शङ्खपूजां ततः कृत्वा पीठपूजां ततश्चरेत् ॥ ११९ ॥

ध्यात्वा गणेशमावाह्य 'गणानान्त्वे'ति मन्त्रतः ।
'प्रणो देवी'ति मन्त्रेण दक्षिणे तु सरस्वतीम् ॥ १२० ॥

'गन्धद्वारा'मिति ऋचा वामे लक्ष्मीं ततः परम् ।
ईशान्ये केशवं 'विष्णोरराटमसि' मन्त्रतः ॥ १२१ ॥

आग्नेय्यां त्र्यम्बकेनैव नैरृते दिननायकम् ।
'आसत्येने'ति मन्त्रेण वायव्यां परदेवताम् ॥ १२२ ॥

'तामग्निवर्णा' मनुसमावाह्य क्रमेण च ।
आसनं पाद्यमर्घ्यञ्च ह्याचामं मधुपर्ककम् ॥ १२३ ॥

परिवाराय दत्त्वा च पञ्चानामपि सूक्तकैः ।
गणेशसूक्तकैर्वापि पौरुषेणाथ वा विभुम् ॥ १२४ ॥

अभिषिच्य गणेशानं परिवारसमन्वितम् ।
उद्धृत्य पीठे संस्थाप्य वस्त्रं यज्ञोपवीतकम् ॥ १२५ ॥

सिन्दूरमपि गन्धञ्च दूर्वापुष्पाक्षताः क्रमात् ।
वेदमन्त्रैः क्रमेणैव चैकविंशतिनामभिः ॥ १२६ ॥

गणेशं सिद्धिबुद्धी च पञ्चविंशतिनामभिः ।
विष्णुं द्वादशनामभिः शिवाद्यान् दशनामभिः ॥ १२७॥

तथैव भास्करं देवं पञ्चविंशतिनामभिः ।
तेषां तेषां प्रियतमैः पत्रैरभ्यर्च्य तत्परम् ॥ १२८ ॥

अष्टोत्तरशतैर्दिव्यैर्नामभिर्गणनायकम् ।
धूपं दीपञ्च नैवेद्यं ताम्बूलं दक्षिणां ततः ॥ १२९ ॥

नीराजनं मन्त्रपुष्पं नमस्कारं प्रदक्षिणैः ।
मूलमन्त्रं गणेशस्य सिद्धिबुद्ध्योस्ततः परम् ॥ १३० ॥

विष्णुशम्भुसूर्यशक्तिमनून् जप्त्वा यथामति ।
तर्पयित्वा ततः पूजां ध्यात्वा देवं समापयेत् ॥ १३१ ॥

स्मार्तगाणपतानां वै पूजनन्त्विदमीरितम् ।
दीक्षितानां पञ्चपूजा न मुख्या मुनिसत्तमाः ! ।
स्वानन्देशपूजनन्तु तेषां मुख्यं प्रकीर्तितम् ॥ १३२ ॥

इति पञ्चायतनपूजानिरूपणम्

## पञ्चायतनोपयोगिपञ्चदेवनामकथनम्

सनकादयः—

पञ्चायतनदेवानां नामानि वद देशिक! ।

गणक उवाच—

विनायको ज्येष्ठराजो वरदो ब्रह्मणस्पतिः ॥ १३३ ॥

एकदन्तो वक्रतुण्डो ढुण्ढीशो विघ्ननायकः ।
लम्बोदरो गणपतिर्चिन्तामणिर्निजस्थितः ॥ १३४ ॥

माङ्गल्येशस्सर्वपूज्यो विकटो धरणीधरः ।
गजाननस्सिद्धिबुद्धीपतिराशाप्रपूरकः ॥ १३५ ॥

मयूरेशोऽथ हेरम्बो गणेशस्य महात्मनः ।
एकविंशतिनामानि यः पठेच्छृणुयाच्च वा ॥ १३६ ॥

सर्वविघ्नविनिर्मुक्तस्सर्वसिद्धि लभेन्नरः ।
महालक्ष्मीर्महासिद्धिर्मूलप्रकृतिरव्यया ॥ १३७ ॥

ओंकाररूपिणी माया कमला सुन्दरी रमा ।
अजा चैका केशमाता योगानन्दस्वरूपिणी ॥ १३८ ॥

वल्लभा ब्रह्मतनया सृष्टिस्थित्यन्तकारिणी ।
लक्ष्मीर्ब्रह्मभावसिद्धिस्सिद्धिश्श्रीर्विघ्ननाशिनी ॥१३९॥

सहस्रदलपद्मस्था स्वानन्दलोकवासिनी ।
मुक्तिश्चिन्तितदा चेति पंचविंशतिनामभिः ॥ १४० ॥

स्तुवन्ति ये महासिद्धिं वल्लभां परमात्मनः ।
ते प्राप्नुवन्ति योगीन्द्राः पुरुषार्थचतुष्टयम् ॥ १४१ ॥

वागीश्वरी महाविद्या महाबुद्धिस्सरस्वती ।
धीर्धारणावती मेधा ब्रह्मानन्दस्वरूपिणी ।। १४२ ।।

पञ्चचित्तवृत्तिमयी ब्रह्मविद्याप्रदायिनी ।
ब्रह्मज्ञानमयी वाणी निजलोकनिवासिनी ।। १४३ ।।

प्रज्ञा निरुपाधिमाया बुद्धिर्विद्या विरिञ्चिजा ।
वैनायकी महावाणी शारदा विश्वरूपिणी ।। १४४ ।।

सहस्राराम्बुजगता मतिर्देवीति नामभिः ।
पञ्चविंशतिसंख्याभिस्स्तुवन्ति बुद्धिमीश्वरीम् ।। १४५।।

ज्ञानं विद्याञ्च संप्राप्य भुक्तिमुक्तिमवाप्नुयुः ।
प्रथमं केशवं विद्यात् नारायणमतःपरम् ।। १४६ ।।

तृतीयं माधवं विद्यात् गोविन्दं तु तुरीयकम् ।
विष्णुं मधुसूदनञ्च त्रिविक्रममतःपरम् ।। १४७ ।।

वामनं श्रीधरं पश्चाद् हृषीकेशं तु वै ततः ।
एकादशं पद्मनाभं दामोदरमतःपरम् ।। १४८ ।।

द्वादशैतानि नामानि कीर्तितानि रमापतेः ।
प्रथमं तु महादेवं द्वितीयन्तु महेश्वरम् ।। १४९ ।।

तृतीयं शंकरं प्रोक्तं चतुर्थं वृषभध्वजम् ।
पञ्चमं शूलपाणिञ्च षष्ठं कामाङ्गनाशनम् ।। १५० ।।

सप्तमं देवदेवेशं श्रीकण्ठं चाष्टमं तथा ।
नवमं तु हरञ्चैव दशमं पार्वतीपतिम् ।। १५१ ।।

एकादशं महारुद्रं द्वादशं शिवमुच्यते ।
एतद्द्वादशनामानि प्रोक्तानि पार्वतीपतेः ।। १५२ ।।

मित्रो रविस्सूर्यभानू खगः पूषा हिरण्मयः ।
मरीचिस्सवितादित्यो ह्यर्कोऽथ भास्करस्तथा ॥१५३॥

द्वादशैतानि नामानि प्रोक्तानि भास्करस्य च ।
सिंहासने श्रीललिता महाराज्ञी वरांकुशा ॥ १५४ ॥

चापिनी त्रिपुरा चैव महात्रिपुरसुन्दरी ।
सुन्दरी चक्रनाथा च साम्राज्ञी चक्रिणी तथा ॥१५५॥

चक्रेश्वरी महादेवी कामेशी परमेश्वरी ।
कामराजप्रिया कामकोटिका चक्रवर्तिनी ॥ १५६ ॥

महाविद्या शिवानङ्गवल्लभा सर्वपाटला ।
कुलनाथाम्नायनाथा सर्वाम्नायाधिवासिनी ॥ १५७ ॥

शृङ्गारनायिका चेति पञ्चविंशति नामभिः ।
स्तुवन्ति ये पराशक्तिमिष्टसिद्धिमवाप्नुयुः ॥ १५८ ॥

इति पञ्चायतनोपयोगिपञ्चदेवनामकथनम्

## गणेशपञ्चार्चने पीठपूजादिकथनम्

सनकादयः—

पञ्चार्चने पीठपूजामन्त्रान्नो वद सत्तम! ।

गणक उवाच—

पीठार्चनं मध्यगस्य नान्येषां मुनिसत्तमाः! ।
इक्षुसागरमध्यस्थं चिन्तामणिमयं वरम् ॥ १५९ ॥

द्वीपं गणपतेः प्रोक्तं पञ्चायतनपूजने ।
ब्रह्मभूयमण्टपन्तु मध्यदेशे प्रकीर्तितम् ॥ १६० ॥

सरस्वतीमहालक्ष्मीसहितस्सर्वकामदः ।
महागणपतिस्तत्र दिव्यसिह्मासने वरे ।। १६१ ।।

पद्ममध्ये कर्णिकायां तीव्रादिशक्तिसन्धृते ।
तीव्राजा ज्वालिनी नन्दा भोगदा कामरूपिणी ।।

उग्रा तेजोवती सत्या पद्माष्टदलशक्तयः ।
कर्णिकामध्यपीठस्य शक्तिस्सा विघ्ननाशिनी ।। १६३।।

धर्मज्ञानसुवैराग्यैश्वर्याणि च विदिक्षु वै ।
अधर्माज्ञानावैराग्यानैश्वर्याणि च दिक्षु च ।। १६४ ।।

सिह्मासनस्य तिष्ठन्ति पूज्यानि दिक्षु वै क्रमात् ।
ब्रह्मभूयमण्टपस्य रौद्रादिषु विदिक्षु च ।। १६५ ।।

धर्मार्थकाममोक्षाख्यमण्टपान्यत्र सत्तमाः! ।
तुर्यरूपधरा विष्णुशम्भुशक्तिदिनेश्वराः ।। १६६ ।।

तिष्ठन्ति तत्र क्रमशो गणेशसेवनोत्सुकाः ।
सिह्मासने सन्निषण्णाः पद्मासनविवर्जिताः ।। १६७ ।।

पीठपूजादिकं तेषामत्र नास्ति च पूजने ।
आवाहनादयस्तेषां कथिताः पञ्चपूजने ।। १६८ ।।

सन्निधौ मूषकः पूज्यः द्वारेशौ द्वारपार्श्वयोः ।
विष्णुशम्भुशक्तिसूर्याः कथिता मण्टपेश्वराः ।। १६९ ।।

आयुधानि गणेशस्य तिष्ठन्ति प्रथमावृतौ ।
विनायकादयो देवा द्वितीये परिकीर्तिताः ।। १७० ।।

रमारमेशपूर्वाद्यास्तृतीये तु त्रिकोणके ।
मोदादयश्चतुर्थे तु पञ्चमेऽप्यङ्गदेवताः ।। १७१ ।।

बहिर्देशे गणा सन्निसेनेशप्रमुखा वराः ।
चिन्तामणिद्वीपमध्ये तिष्ठन्ति गणपा वराः ।। १७२ ।।

पञ्चायतनपूजायां प्रशस्तं मण्टपार्चनम् ।
पार्श्वयोस्सिद्धिबुद्धी च पुरतो मूषकोऽपि च ।। १७३ ।।

संपूज्यौ भैरवस्कन्दौ गणेशद्वारपार्श्वयोः ।
पञ्चार्चनं गणेशस्य प्रोक्तमेवं मुनीश्वराः ।। १७४ ।।

इति गणेशपञ्चार्चने पीठपूजादिकथनम्

## पुण्ड्रधारणनिरूपणम्

सनकादयः—

स्मार्तगाणपतैः पुण्ड्रं कथं धार्यं वद प्रभो! ।

गणक उवाच—

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रञ्च वर्तुलं चार्द्धपुण्ड्रकम् ।
चतुर्विधानि पुण्ड्राणि वेदादिषु श्रुतानि च ।। १७५ ।।

तिलकं कुङ्कुमेनैव शाक्तानां चिह्नमुच्यते ।
दिव्यगन्धेन तिलकं गाणेशानां प्रकीर्तितम् ।। १७६ ।।

मण्डलाकृतिपुण्ड्रन्तु सौरस्य परिकीर्तितम् ।
द्रव्ये सौरगाणपयोर्न भेदः परिकीर्तितः ।। १७७ ।।

कुलक्रमागतं पुण्ड्रं न त्याज्यं स्मार्तगाणपैः ।
कुलक्रमागतेनैव धर्तव्यं तिलकं तथा ।
सिन्दूरेणाथ गन्धेन धर्तव्यं तिलकं मुदा ।। १७८ ।।

इति पुण्ड्रधारणनिरूपणम्

## कुट्टननिरूपणम्

सनकादयः—

सर्वेषां कर्मणामादौ कुट्टनं सूक्ष्मपूजनम् ।
इति प्रोक्तं कुट्टने तु मन्त्रं ब्रूहि जगद्गुरो! ।। १७९ ।।

गणक उवाच—

'गणानां त्वे'ति मन्त्रस्तु प्रशस्तं कुट्टनेऽथवा ।
शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।। १८० ।।

प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ।
मन्त्र एषोऽथवा जप्यो भावेन मूर्ध्नि कुट्टने ।। १८१ ।।

इति कुट्टननिरूपणम्

## आचमनविधिनिरूपणम्

सनकादयः—

आचामस्य मनून् ब्रूहि सर्वतत्त्वविशारद! ।

गणक उवाच—

श्रीतारकसंयुक्तबीजेन ब्रह्मणस्पतेः ।
आचामो वैदिकः प्रोक्तः कर्तव्यो दीक्षितैर्वरैः ।। १८२।।

ओंभूस्स्वाहा भुवस्स्वाहा सुवस्स्वाहा तथैव च ।
स्मार्ताचमनमन्त्रास्स्युर्महसा परिमार्जनम् ।। १८३ ।।

ततो द्वाभ्यां कपोले च सत्येन दक्षिणाक्षिणः ।
वामं प्रथमपादेन द्वाभ्यां नासिकयोः क्रमात् ।। १८४ ।।

आपो ज्योतीरसोऽमृतं ब्रह्मभिर्कर्णयोरपि ।
तथा बाहुमूलयोश्च हृदयेऽपि ततः परम् ।। १८५ ।।

भूर्भुवःसुवरोमिति मूर्धानञ्च स्पृशेत् क्रमात् ।
स्मार्ताचमनमन्त्राश्च स्मार्तानां कथिता बुधैः ।।१८६।।

अन्यैरपि कृताश्चेत्तु न दोषो मुनिसत्तमाः! ।
अदीक्षितानां सर्वेषां पौराणिकमुदीरितम् ।। १८७ ।।

भिन्नभिन्नपुराणेषु भिन्नत्वेन प्रकीर्तितम् ।
तत्रैकमद्य वक्ष्येऽहं यूयं शृणुत सादरम् ।। १८८ ।।

ओं विनायकाय नमो विघ्नराजाय वै नमः ।
गणेशाय नम इति मन्त्रश्चाचामकर्मणि ।। १८९ ।।

ज्येष्ठराजाय चेति नमः ब्रह्मणस्पतये नमः ।
द्विष्परिमार्जने चैव नाममन्त्रौ प्रकीर्तितौ ।। १९० ।।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्नराजो विनायकः ।। १९१ ।।

धूमकेतुर्गणाध्यक्षः फालचन्द्रो गजाननः ।
द्वादशाङ्गस्पर्शने तु नाममन्त्रा प्रकीर्तिताः ।। १९२ ।।

श्रीतारबीजसहितनामभिर्भक्तिदीक्षितैः ।
आचामाश्च प्रकर्तव्या ज्ञानोपास्तिसुदीक्षितैः ।। १९३ ।।

श्रीतारयुक्तबीजेन सर्वं कार्यं न संशयः ।
केवलं नाममन्त्रैश्च शूद्राणां योषितामपि ।। १९४ ।।

इति आचमनविधिनिरूपणम्

## कर्मान्ते समर्पणविधिः

**सनकादयः—**

**गणेशार्पणमन्त्रान्नः कर्मणां कृपया वद ।**

**गणक उवाच—**

**अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा ।**
**यस्स्मरेद्वल्लभाकान्तं सबाह्याभ्यन्तरश्शुचिः ।। १९५ ।।**

**कर्मणा मनसा वाचा धियेन्द्रियैरथात्मना ।**
**स्वकृतं प्रकृत्या तत्सर्वमर्पयामि गजानने ।। १९६ ।।**

**विधिश्रद्धाभक्तिहीनं मन्त्रहीनं गजानन! ।**
**यत्तत्कृतं मया सर्वं तवास्तु परिपूर्णकम् ।। १९७ ।।**

**प्रायश्चित्तात्मकानाञ्च तपोजपसुकर्मणाम् ।**
**अशेषाणां गणेशानुस्मरणं परमं स्मृतम् ।। १९८ ।।**

**गणेशेति गणेशेति गणेशेति त्रिवारकम् ।**
**कर्मान्ते जपशीलस्य नूनं पूर्णं भवेद् ध्रुवम् ।। १९९ ।।**

इति कर्मान्ते समर्पणविधिः

## अधिकारिनिरूपणम्

**सनकादयः—**

**तारतम्यभावनं तु स्मार्तैर्देवेषु पञ्चसु ।**
**अन्येष्वपि कथं कार्यं तद् ब्रूहि करुणाकर! ।। २०० ।।**

**गणक उवाच—**

**पञ्चस्वपि ज्येष्ठभावात् ज्येष्ठराजो गजाननः ।**
**ब्रह्माण्डानामनेकानां स च सम्राडुदीरितः ।। २०१ ।।**

सम्राज्ञी च महाराज्ञी सिद्धिबुद्धी प्रकीर्तिते ।
एकैकाकारयुक्ताश्च ब्रह्माण्डे पञ्च देवताः ॥ २०२ ॥

तुर्यस्थशिवपूर्वाश्च सचिवा राज्यकर्मणि ।
अण्डमध्ये मुमुक्षूणां सात्विकानां गुहः पतिः ॥ २०३ ॥

मुक्तानां ज्ञानिनां नाथो गणेशो व्योमनायकः ।
दुष्टानां शासको देवो भैरवः परिकीर्तितः ।
शास्ता नागरिकेशस्स्यात् वने दुर्गा प्रकीर्तिता ॥२०४॥

इत्यधिकारिनिरूपणम्

## प्रणवस्वरूपकथनम्

सनकादयः—

वर्णाश्रमधर्मसिद्धयै प्रणवं वेदमातरम् ।
जपन्ति षण्मार्गिणश्च तत्स्वरूपं वद प्रभो! ॥ २०५ ॥

गणक उवाच—

प्रणवस्यापि गायत्र्यास्सर्वे देवाः प्रकीर्तिताः ।
ओंकारस्य पूर्णदेवः पञ्चमो ब्रह्मणस्पतिः ॥ २०६ ॥

गायत्र्या पूर्णदेवस्स्याद् गुणेशः पुरुषः परः ।
ज्योतिस्स्वरूपं प्रत्यक्षं ब्रह्माण्डे सूर्यमण्डलम् ॥ २०७ ॥

शाखाचन्द्रन्यायतश्च मण्डलद्वारतः क्रमात् ।
तुरीयं पुरुषं प्राह तुरीयः पञ्चरूपवान् ॥ २०८ ॥

अतष्षण्मार्गिणश्चापि गृह्णन्ति वेदमातरम् ।
वेदमात्रजपेनैव भवेद्वेदाधिकारता ॥ २०९ ॥

पञ्चस्वपि मुख्यभावाद् ग्राह्यो मण्डलमध्यगः ।
पञ्चायतनदेवाश्च लोकदेवास्तथैव च ।। २१० ।।

तिष्ठन्ति मण्डले सत्यं मध्यस्थो दिननायकः ।
अतो वै वेदमातुश्च देवाः पञ्च प्रतीर्तिताः ।। २११ ।।

ब्रह्मोवाच—

सनकाद्या मुनीशाना बभूवुश्छिन्नसंशयाः ।
नेमुर्भक्त्या तु गणकं तस्यैव शासनात्ततः ।। २१२ ।।

सिद्धाश्रमपदं गत्वा ज्ञानयोगे तु संस्थिताः ।
पूर्णयोगप्रभावेण योगशान्तियुता बभुः ।। २१३ ।।

गणको गणपं नत्वा निजलोकमगात्ततः ।
इदमुत्तरहृदयं दिव्यज्ञानप्रदायकम् ।। २१४ ।।

वेदमार्गस्य सिद्धान्तबोधकं ब्रह्मभावदम् ।
यः पठेद् भक्तिपूर्वं तु ज्ञात्वा चार्थं गुरोर्मुखात्।।२१५।।

धर्ममर्थञ्च कामञ्च लब्ध्वा मोक्षमवाप्नुयात् ।
दशोत्तरनवशतैर्ग्रन्थैरेतत्समन्वितम् ।। २१६ ।।

उत्तरं हृदयं चैतद्भवतां परिकीर्तितम् ।
वेदानां सारभूतं तु गणकाचार्यकीर्तितम् ।
कथयिष्यामि युष्माकं किमन्यच्छ्रोतुमिच्छथ ।। २१७ ।।

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
गणेशोत्तरहृदये अष्टमोऽध्यायः

## नवमोऽध्यायः

## सिद्धिबुद्धिहृदयम्

### द्विविधगणेशाद्वैतिनिरूपणम्

उद्दालकादय ऊचुः—

किमकुर्वन् नारदाद्याश्शान्तिं प्राप्तेषु योगिषु ।

ब्रह्मोवाच—

नारदाद्या गुणेशानं तुरीयं त्रिगुणात्मकम् ।
ध्यात्वा चक्रुर्महाघोरं तपः प्रणवचिन्तकाः ।। १ ।।
पञ्चदेवास्समायाताः वरान् दातुं पृथक् पृथक् ।
तिरस्कृतेषु देवेषु गुणेशस्त्रिगुणात्मकः ।। २ ।।
आविर्भूय पुरस्तेषामुपदेष्टुं दिनेश्वरम् ।
नियुज्य स्वस्थलं प्राप पुरुषस्समुपाविशत् ।
बद्धाञ्जलिपुटा भूत्वा प्रावदन् पुरुषं रविम् ।। ३ ।।

नारदादय ऊचुः—

सनकाद्यैश्च यत्पृष्टं तदेव प्रावदद् गुरुः ।
अस्माकं हृदये सूर्य ! प्रष्टव्यमपि वर्तते ।। ४ ।।
तद् ब्रूहि त्वं दिनेशान! ब्रह्मतत्त्वविशारद ! ।
अष्टधा गाणपाः प्रोक्ता इति प्राह गुरोर्गुरुः ।
तेषां स्वरूपं नो ब्रूहि गाणेशाद्वैतमार्गिणाम् ।। ५ ।।

सूर्य उवाच—

गाणेशाद्वैतमार्गस्था द्विविधाः परिकीर्तिताः ।
ज्ञानदीक्षां गाणपतीं संप्राप्य क्रममार्गतः ।। ६ ।।

गाणेशाद्वैतप्रस्थानत्रयं प्राप्य गुरोर्मुखात् ।
तदर्थज्ञानसंयुक्ता गार्ग्यभाष्यानुसारतः ॥ ७ ॥

गाणेशाद्वैतिनः प्रोक्ता दीक्षिता ज्ञानिसत्तमाः ।
गणेशपञ्चकं चैव ब्राह्मणस्पत्यपञ्चकम् ॥ ८ ॥

दशोपनिषदः प्रोक्ता प्रस्थाने ब्रह्मणस्पतेः ।
गणेशदर्शनं शास्त्रं भागद्वयसमन्वितम् ॥ ९ ॥

ततः प्रोक्तं गणेशस्य गीता भागद्वयान्विता ।
प्रस्थानानां त्रयं प्रोक्तं दीक्षायुक्तस्य योगिनः ॥ १० ॥

अदीक्षितगाणपानां ज्ञानार्हाणां द्विजोत्तमाः ! ।
प्रस्थानत्रयमाख्यातं विचारार्थं तु ब्रह्मणः ॥ ११ ॥

गणेशाथर्वशीर्षाद्वै दशोपनिषदो वराः ।
ईशाद्या कथितास्तेषां प्रस्थाने प्रथमे वरे ॥ १२ ॥

महावाक्यदर्शनेन वेदान्तदर्शनाभिधम् ।
केवलं वाथ विख्यातं द्वितीये तु तृतीयके ॥ १३ ॥

गणेशगीता कथिता गाणेशा परिकीर्तिता ।
गाणेशाद्वैतभाष्यन्तु गार्ग्येण मुनिना कृतम् ॥ १४ ॥

एषामपि मुनीशाना ! गणेशशासनेन च ।
प्रस्थानं द्विविधं चापि गणेशदीक्षयान्विताः ॥ १५ ॥

गणेशशासनेनैव गृहीतुमधिकारिणः ।
पूर्वोक्तमेव मुख्यं स्यात् तद्दीक्षाध्वजमुच्यते ॥ १६ ॥

तस्यैव साधकार्थञ्च ग्राह्यं पश्चात्प्रकीर्तितम् ।
अदीक्षितैश्च पूर्वोक्तभागस्य मुनिसत्तमाः! ॥ १७ ॥

ग्रहणेनाधिकारस्स्यादिति तत्त्वविदो विदुः ।
प्रस्थानानां विचारे च श्रवणे मनने तथा ॥ १८ ॥
निदिध्यासे स्थितास्सर्वे स्वधर्मपरिपालकाः ।
गाणेशाद्वैतिनः प्रोक्ता ज्ञानकाण्डसमाश्रिताः ॥ १९ ॥
गाणेशाद्वैतमार्गस्थैर्दीक्षाविरहितैर्नरैः ।
गणेशपूजनं वाथ गणेशपञ्चपूजनम् ॥ २० ॥
कर्तव्यं मूलमन्त्रेण यथा गुरुमुखागतम् ।
दीक्षितैश्च न कर्तव्यं गणेशपञ्चपूजनम् ॥ २१ ॥
गृहीतं चेत्तु दीक्षायाः पूर्वं वै मुनिसत्तमाः! ।
दीक्षाङ्गपूजनं भक्त्या यन्त्रबिम्बादिषु क्रमात् ॥ २२ ॥
पञ्चार्चनात् पृथक्कार्यमिति तत्त्वविदो विदुः ।
दीक्षितानां भवेत्सत्यं मुक्तिस्तु पञ्चजन्मसु ।
अदीक्षितानां नियमो मुक्तौ नास्ति तथा द्विजाः! ॥२३॥

इति द्विविधगाणेशाद्वैतिनिरूपणम्

## षड्विधगाणपतस्वरूपनिरूपणम्

नारदादय ऊचुः—

उपासनाकाण्डगयोस्स्वरूपमपि नो वद! ।

सूर्य उवाच—

उपासना कल्पशास्त्रं गार्ग्येण मुनिना कृतम् ।
उपनिषत्सु यत्प्रोक्तं तदेव तेन कीर्तितम् ॥ २४ ॥
तदुक्तमार्गतो दीक्षां संप्राप्य विधिपूर्वकम् ।
उपासनपरा वेदे प्रोक्ता वैदिकगाणपाः ॥ २५ ॥

एते दीक्षितगाणेशा निष्कामभजनोत्सुका: ।
उपासनं प्रकुर्वन्ति विना दीक्षां यथामति ॥ २६ ॥

उपासका गाणपता वैदिकाश्चेति कीर्तिता: ।
दीक्षितादीक्षितभागो द्वयोर्भेद: प्रकीर्तित: ॥ २७ ॥

अनर्हाश्चोपासनायां कथिता भक्तिमार्गिण: ।
दीक्षितादीक्षितभेदात्तत्रापि द्विविधो मत: ॥ २८ ॥

गार्ग्योक्तदीक्षां संप्राप्य बल्लालसूत्रमार्गत: ।
भजनं ये प्रकुर्वन्ति तत्तत्कालोत्सवैस्सह ॥ २९ ॥

भक्ता गाणपतास्ते वै भुक्तिभाजो न संशय: ।
दीक्षाहीना यथाशक्ति भजने निरता नरा: ॥ ३० ॥

जपपूजनसंयुक्ता भक्ता गाणपता इति ।
कर्मकाण्डस्थितानां तु न दीक्षा परिकीर्तिता ॥ ३१ ॥

भक्तिमार्गस्थितानान्तु न पञ्चपूजनं स्मृतम् ।
कर्मकाण्डस्थिता भक्ता द्विविधा: परिकीर्तिता: ॥३२॥

पञ्चार्चनपरास्स्मार्ता गणेशार्चनसंयुता: ।
वैदिकाश्चेति कथिता: द्वयोरपि विशेषत: ।
कर्मकाण्डोक्तदेवानां यजनं परिकीर्तितम् ॥ ३३ ॥

इति षड्विधगाणपतस्वरूपनिरूपणम्

## वैनायकगाणपतयो: भेदकथनम्

नारदादय ऊचु:—

वैनायकं गाणपतमिति भेदेन वै द्विधा ।
गाणपं वैदिकं प्राहु: कारणं तस्य नो वद ॥ ३४ ॥

सूर्य उवाच—

वैनायका इति प्रोक्ता दीक्षिता गाणपाश्श्रुतौ ।
भक्त्युपासनसंयुक्ता वैदिका गाणपास्स्मृताः ।
वेदकाण्डप्रभेदेन चतुर्भेदयुता मताः ।। ३५ ।।

इति वैनायकगाणपतयोर्भेदकथनम्

## स्मार्तगाणपतस्वरूपनिरूपणम्

नारदादय ऊचुः—

पञ्चायतनदेवाश्च तुरीयस्यैव मूर्तयः ।
पञ्चसाम्या न सन्देहो गुणेशः पञ्चधा स्थितः ।। ३६ ।।

जगत्सृष्ट्यादिक्रीडार्थं तेषु भेदो न विद्यते ।
एवं भावसुसंयुक्तास्स्मार्ताश्चेति प्रकीर्तिताः ।। ३७ ।।

तत्राधिकप्रेमयुतं मध्ये स्थाप्य विधानतः ।
पञ्चानां पूजनं भक्त्या कुर्वन्ति च जपं तथा ।। ३८ ।।

पञ्चोपासनशीलस्तु कथं गाणपतो भवेत् ।
स्मार्तो गाणपतश्चेति कथं वक्तुं क्षमो भवेत् ।। ३९ ।।

सूर्य उवाच—

मध्यस्थदेवभावेन स्मार्ता पञ्चविधा स्मृताः ।
मध्ये स्थाप्य गणेशानं स्मार्ता ये पूजयन्ति च ।।४०।।

ते केवलं कीर्तिताश्च स्मार्तगाणपता इति ।
पूर्णभावेन ते विप्राः ! भजन्ते च तुरीयकम् ।। ४१ ।।

तुरीयो गणराजस्य कार्यमूर्तिर्न संशयः ।
शैवाद्येकमार्गेभ्यो वरास्ते नात्र संशयः ।। ४२ ।।

पूर्णगाणपतं प्राप्तुमर्हास्ते नात्र संशयः ।
गणेशे मुख्यभावाढ्यास्तेन गाणपता मताः ।। ४३ ।।

पूर्णभावविहीनत्वात् स्मार्तगाणपतास्स्मृताः ।
भृगुस्स्मार्तगाणपतं समाश्रित्य च तत्परम् ।। ४४ ।।

दीक्षां गाणपतीं प्राप्य पूर्णगाणपतोऽभवत् ।
गण्डकीनगराधीशश्चक्रपाणिर्नृपोत्तमः ।। ४५ ।।

वैष्णवो दीक्षया हीनस्स्मार्तगाणपमाश्रितः ।
पञ्चार्चनप्रभावेण गणेशे भक्तिमान् नृपः ।। ४६ ।।

कारणब्रह्मलोकं सः संप्राप मुक्तिरूपकम् ।
हाहाहूहूमुखादेव गन्धर्वजातिसम्भवाः ।। ४७ ।।

स्मार्तवैष्णवमार्गस्था मदोत्कटप्रभावकम् ।
दृष्ट्वा पूर्णगाणपता जाता दीक्षां च संश्रिताः ।
पूर्णगाणपहीनास्तु स्मार्तगाणपतास्स्मृताः ।। ४८ ।।

इति स्मार्तगाणपतस्वरूपनिरूपणम्

## मयूरेशस्य पञ्चमत्वकथनम्

नारदादय ऊचुः—

सिन्धुदैत्यनाशनाच्च परं तस्य पिता नृपः ।
चक्रपाणिस्सुरान् सर्वानानयामास मन्दिरम् ।। ४९ ।।

उपविष्टेषु सर्वेषु सभायां नृपसत्तमः ।
मयूरेशमुखान् सर्वान् पूजयामास वै क्रमात् ।। ५० ।।

गणेशे पूजिते पूर्वं निनिन्देन्द्रो नृपं तथा ।
एतस्मिन् पूजिते पञ्चपूजनञ्च भविष्यति ।। ५१ ।।

इत्युवाच व्योमवाणी मयूरेशश्शिवात्मजः ।
पञ्चधा संस्थितोऽभूच्च पूर्ववच्च पुनर्बभौ ।
कथं तु पञ्चधा जातो गणेशस्तद्वद प्रभो! ॥ ५२ ॥

सूर्य उवाच—

चतुर्णां संयोगमयो हरादीनां गुणेश्वरः ।
शिवादयश्च चत्वारस्तस्य देहमयास्स्मृताः ॥ ५३ ॥

आत्मा तस्य गणेशानः पञ्चमो ब्रह्मणस्पतिः ।
कण्ठादूर्ध्वभागमयस्तस्य शम्भुः प्रकीर्तितः ॥ ५४ ॥

कण्ठादधोभागमयो गुणेशस्य जनार्दनः ।
वामभागमयी शक्तिः दक्षिणाङ्गमयो रविः ॥ ५५ ॥

चतुर्णामपि संयोगे गुणेशः परिकीर्तितः ।
सर्वाङ्गेषु देहिनां तु क्षेत्रज्ञो व्याप्य तिष्ठति ॥ ५६ ॥

देही देहाद्यथा भिन्नो गुणेशस्तु तथा द्विजाः! ।
चतुर्भ्यश्चापि भिन्नस्स्याच्चतुर्षु व्याप्य संस्थितः ॥५७॥

गणेशादेव सञ्जातो गुणेशश्श्रुतिशासनात् ।
पञ्च चापि तुरीयास्स्युरिति वेदविदो विदुः ॥ ५८ ॥

पञ्चमाख्यं परं ब्रह्म तुरीये पञ्चधाऽभवत् ।
शुद्धसत्त्वमायया तु पञ्चमो मूर्तिमान् भवेत् ॥ ५९ ॥

स एव शिवपुत्रोऽभूत् सिन्धुदैत्यवधाय च ।
पञ्चमः पञ्चधा जातो स्वरूपदर्शनाय च ॥ ६० ॥

तुर्यगानाञ्च पञ्चानामात्मभूतस्तु पञ्चमः ।
तुरीये पञ्चधा सोऽपि तिष्ठत्येव गजाननः ॥ ६१ ॥

वृक्षमूलं पञ्चमं तु शाखारूपं तुरीयकम् ।
वृक्षमूलसेचनेन जलस्य मुनिसत्तमाः! ।। ६२ ।।

शाखाः पुष्टा भवेयुश्च तथा पञ्चमपूजनात् ।
तुरीयपदगाः पञ्च पूजितास्स्युर्न संशयः ।। ६३ ।।

सिन्धुदैत्यहारकोऽयं शिवपुत्रस्तु पञ्चमः ।
एतस्मिन् पूजिते पञ्चपूजनञ्च भविष्यति ।
इत्येवं प्राह वाणी तु तेनैव मुनिसत्तमाः! ।। ६४ ।।

नारदादय ऊचुः—

गुणेश एव शम्भोस्तु सिन्धुदैत्यवधाय च ।
पुत्रोऽभूदिति वेदेषु पुराणेषु प्रविश्रुतम् ।
त्वमेव पञ्चमं देव वदसि कारणं वद ।। ६५ ।।

सूर्य उवाच—

वसुदेवसुतः कृष्णो मानुषो नात्र संशयः ।
मर्त्यवद्देहसंयुक्तो मर्त्यधर्मपरायणः ।। ६६ ।।

अमानुषेण कृत्येन लोकेष्वीश इति स्मृतः ।
शुद्धसत्त्वमायया तु मूर्तियुक्तो गणेश्वरः ।। ६७ ।।

सत्त्वमायादेहयुताद् गुणेश इति कथ्यते ।
पञ्चायतनरूपेण जात[illegible]त्मूर्तिसंयुतः ।। ६८ ।।

कथितः पञ्चमश्चेति तत्त्वज्ञैर्गणकादिभिः ।
कृष्णमीशं विजानीयुस्तत्त्वज्ञाः किन्तु प्राकृताः ।। ६९ ।।

मानुषश्च विजानीयुस्तथा शिवसुतं विभुम् ।
मयूरेशं विजानीयुः पञ्चमं मुद्गलादयः ।
तुरीयमेव जानीयुस्सामान्या मुनिसत्तमाः! ।। ७० ।।

इति मयूरेशस्य पञ्चमत्वकथनम्

## पञ्चायतनपूजायाः फलनिरूपणम्

नारदादय ऊचुः—

पञ्चायतनपूजायाः किं फलं वद भास्कर! ।

सूर्य उवाच—

पञ्चार्चनपरो मर्त्यः क्रमेण द्वारमार्गतः ।
विष्णुप्रधानगस्तिष्ठेत् प्रथमं यत्कारणात्तु ।। ७१ ।।
ततश्शम्भुं ततश्शक्तिं ततस्सूर्यं गुणेश्वरम् ।
मध्यदेशे सुसंस्थाप्य संपूज्य विधिपूर्वकम् ।। ७२ ।।
चित्तशुद्धिश्च संप्राप्य ब्रह्मज्ञानमवाप्य च ।
ज्ञानसिद्धिप्रभावेण कैवल्यं मुक्तिमाप्नुयात् ।। ७३ ।।
अथवा तु गुणेशस्य लोकं प्राप्य नरोत्तमः ।
तत्र ज्ञानमवाप्यैव कल्पान्ते गुणपेन च ।। ७४ ।।
प्राप्नुयाद् ब्रह्मसायुज्यं पुनरावृत्तिवर्जितम् ।
अथवा पञ्चपूजाढ्यो भृगुवद् गाणपो भवेत् ।। ७५ ।।
दीक्षां गाणपतीं प्राप्य समाराध्य गजाननम् ।
निर्वाणस्य प्रभावेन स्वानन्दं पञ्चमं लभेत् ।। ७६ ।।
पञ्चमस्थितिगास्सर्वे कथिता ब्रह्मरूपिणः ।
जीवेश्वरभावनं तु तत्र नास्ति मुनीश्वराः! ।। ७७ ।।

इति पञ्चायतनपूजायाः फलनिरूपणम्

## गणेशपूजायाः फलनिरूपणम्

नारदादय ऊचुः—

केवलं गणनाथस्य पूजायाः फलमादिश ।

सूर्य उवाच—

चतुर्विधमिदं विश्वं जडजीवेशरूपकम् ।
इदं देहो गणेशस्य स चात्मा जगतस्स्मृतः ।। ७८ ।।

चतुर्विधदेहयुतो गणेशः पञ्चमो विभुः ।
पञ्चायतनदेवाश्च व्यष्टयः तस्य कीर्तिताः ।। ७९ ।।

पञ्चायतनदेवा वै ईश्वराश्चेति कीर्तिताः ।
ब्रह्मादिस्तम्बकीटान्तं सर्वे जीवाः प्रकीर्तिताः ।। ८० ।।

निर्जीवा जडसंज्ञाख्या ब्रह्माण्डमण्डले द्विजाः! ।
जगज्जीवेशरूपेण पञ्चमोऽयं विराजति ।। ८१ ।।

जगद्गतेन बिम्बेन भावत्रयसमन्वितः ।
स्वयं स्वानन्दगो भूत्वा महिम्नि स्वस्य राजति ।।८२।।

गणेशपूजनेनैव चतुर्विधमिदं जगत् ।
पूजितञ्च भवेत्सत्यं तेन गाणपतः क्रमात् ।। ८३ ।।

चित्तशुद्धिञ्च ज्ञानञ्च संप्राप्य बुद्धिवैभवात् ।
ज्ञानसिद्धिञ्च संप्राप्य स्वानन्दं ब्रह्मभूयकम् ।। ८४ ।।

लभेच्च ह्यथवा योगसिद्धया कैवल्यमाप्नुयात् ।
जगद्ब्रह्ममयो देवो गणेशः पञ्चमो विभुः ।
विघ्नेशे पूजिते सर्वं भवेच्च तेन पूजितम् ।। ८५ ।।

इति गणेशपूजायाः फलनिरूपणम्

## कर्मोपासनाकाण्डगतदेवतास्वरूपनिरूपणम्

नारदादय ऊचुः—

लोकसौख्यं ब्रह्मसौख्यं लभ्यं चेद् ब्रह्मणस्पतेः ।
वेदशास्त्रपुराणेषु कर्माणि विविधानि च ॥ ८६ ॥

नानाविधदेवतुष्टयै भिन्नभिन्नप्रदानि च ।
फलानां कथितान्येव कर्मकाण्डे दिनेश्वर! ॥ ८७ ॥

तथैवोपासनाकाण्डे मन्त्राश्च विविधास्स्मृताः ।
मन्त्राणां देवता भिन्ना भिन्नभिन्नफलप्रदाः ।
किमर्थं कथितं चैवं कारणं तस्य नो वद ॥ ८८ ॥

सूर्य उवाच—

'सर्वं ब्रह्मे'ति वेदेषु प्रोक्तं पश्यत सत्तमाः! ।
व्याकृताव्याकृतभेदाद्विश्वं तु द्विविधं स्मृतम् ॥ ८९ ॥

व्याकृते संस्थितं सर्वं नानाभावस्वरूपकम् ।
तिष्ठत्यव्याकृते चापि वासनारूपसंयुतम् ॥ ९० ॥

नानाविचित्रवर्णाढ्यकलापपरिशोभितः ।
मयूराण्डे मयूरस्तु तथैव व्याकृतं जगत् ॥ ९१ ॥

तिष्ठत्यव्याकृते चापि नानाभावसमन्वितम् ।
पत्रपुष्पफलोपेतो बीजे वृक्षो यथा स्मृतः ॥ ९२ ॥

नानाभेदयुतं विश्वं तुरीये तु प्रतिष्ठितम् ।
वृक्षवद्व्याकृतं विश्वं बीजवच्च तुरीयकम् ॥ ९३ ॥

भावद्वययुतं ब्रह्म भावद्वयविवर्जितम् ।
पञ्चमं ब्रह्म कथितं तदेव गणनायकः ॥ ९४ ॥

बीजाद्वृक्षसमुत्पत्तिः कथ्यते ब्रह्मसत्तया ।
बीजोत्पत्तिः पुनर्वृक्षात्सत्तया ब्रह्मणस्पतेः ।। ९५ ।।

व्याकृताव्यकृतं सर्वं विभाति ब्रह्मसत्तया ।
देवतिर्यङ्मनुष्याश्च त्रिविधा जीवकोटयः ।। ९६ ।।

पृथक् पृथक् च भोगास्तु तेषां भिन्ना जगत्तले ।
कर्मरूपमयाः प्रोक्तास्तेषां भोगा जगत्तले ।। ९७ ।।

तिर्यग्जन्तुमर्त्ययोश्च भोगा देववशंगताः ।
देवानामपि भोगाश्च पञ्चदेववशंगताः ।। ९८ ।।

तेषां भोगास्तुर्यगता गुणेशस्य वशंगताः ।
तस्य भोगः पञ्चमस्य गणेशस्य वशे स्थितः ।। ९९ ।।

तिर्यग्जन्तुमर्त्ययोश्च भोगसिद्धयर्थमेव च ।
देवानां कर्मरूपाणां तुष्टयर्थं मुनिसत्तमाः! ।। १०० ।।

वेदेषु कर्मकाण्डेषु कर्माणि कथितानि च ।
यज्ञोक्तकर्मफलदा देवास्ते कर्मरूपिणः ।। १०१ ।।

यज्ञादेव हि जायन्ते भोगान् यच्छन्ति वै ततः ।
एवं चोपासनाकाण्डे कथितेषु सुरेषु च ।। १०२ ।।

नानाभोगास्स्थापिताश्च तदुक्तोपास्तिकर्मणा ।
सन्तुष्टाः प्रकटीभूय भोगान् स्वांश्च वशंगतान् ।।१०३

प्रयच्छन्ति तदर्थं तु वेदादिषु मुनीश्वराः ।
उपासनं कर्म चापि कथिते तेऽपि सत्तया ।। १०४ ।।

ब्रह्मणो भोगदानेषु नृणां शक्ता भवन्ति च ।
ज्योतिष्टोमेन यज्ञेन संभूता देवसत्तमाः ।। १०५ ।।

स्वर्गभोगप्रदाने वै शक्तास्ते वेदवाक्यतः ।
अन्यभोगप्रदाने वै शक्तिस्तेषां न विद्यते ।। १०६ ।।

शताश्वमेधयज्ञैश्च तोषिता देवसत्तमाः ।
सुरेन्द्रपदभोगस्य दाने शक्ता न संशयः ।। १०७ ।।

अग्निसूर्यादिपदस्य भोगानां तु प्रदानके ।
न शक्तास्ते मुनीशाना! एवं कर्मफलं स्मृतम् ।। १०८।।

यस्य यस्य कर्मणश्च यद्यत्फलमुदीरितम् ।
तत्तद्दाने तु ते शक्ता देवाः कर्मफलप्रदाः ।। १०९ ।।

इष्टान् भोगान् प्रदातुं च स्वराष्ट्रे संस्थितेषु च ।
दातुं शक्तो नृपवरो राजाधिपत्यसंयुतः ।। ११० ।।

न स्वाधीनो नृपवरश्चक्रवर्तिवशंगतः ।
चक्रवर्तिर्वर्षपतिस्सार्वभौमवशंगतः ।। १११ ।।

जम्बूद्वीपमशेषेण वशे यस्य प्रतिष्ठितम् ।
स एव सार्वभौमस्स्यान्मानवेषु स्वतन्त्रकः ।। ११२ ।।

सेनाचरास्सैन्यपाश्च मन्त्रिणश्च प्रधानकाः ।
चारा वीरा किङ्कराश्च नृपाद्वेतनग्राहकाः ।। ११३ ।।

सर्वेऽपि राजपुरुषा इति प्रोक्ता मनीषिभिः ।
देवजातिसमुद्भूताः कथिता राजपूरुषाः ।। ११४ ।।

त्रयस्त्रिंशत्कोटिदेवा नृपवत्कीर्तिताः क्षितौ ।
दिगीशग्रहनाथाश्च कथिताश्चक्रवर्तिवत् ।। ११५ ।।

ब्रह्मविष्णुहराद्याश्च कथितास्सार्वभौमवत् ।
प्रजावत् कथिताश्चान्ये जीवाश्च मानवादयः ।। ११६ ।।

त्रिलोकनायकश्चेन्द्रः सार्वभौमाद्वरो मतः ।
स तिष्ठति परोक्षेण प्रत्यक्षेण न च स्मृतः ।। ११७ ।।

तथैव पञ्चदेवानां नायकस्तु गुणेश्वरः ।
परोक्षेणैव पञ्चानां तिष्ठत्यव्याकृते पदे ।। ११८ ।।

देवतिर्यङ्मनुष्याणां स्रष्टा ब्रह्मा पदे स्वके ।
इन्द्रस्यापि परोक्षे तु यथा तिष्ठति सत्तमाः! ।।११९।।

व्याकृताव्याकृतानां च जनिता पञ्चमो विभुः ।
गुणेशस्य परोक्षत्वे महिम्नि स्वस्य तिष्ठति ।। १२० ।।

राजभृत्येन यत्कार्यं कर्तव्यं तत्तु तेन वै ।
प्रजारूपस्य जीवस्य राजभृत्यः प्रियेण वा ।। १२१ ।।

स्वाधिपस्य शासनेन कुर्यादेव च विष्टपे ।
न कुर्याच्च स्वयं तं तु प्रजा प्रीतियुतो नृपः ।। १२२ ।।

आज्ञां कुर्याच्च भृत्याय भृत्यः कुर्यात्तदाज्ञया ।
राजभृत्यसाध्यकार्ये राजानं कस्समाश्रयेत्? ।। १२३ ।।

राजभृत्यसाध्यकार्यसिद्ध्यर्थन्तु प्रजात्मकः ।
नृपप्रीतिसुलभार्थं न कुर्याद्यत्नमुत्तमम् ।। १२४ ।।

भृत्यप्रीतिस्तु सुलभाद्भवेदेव न संशयः ।
नानाविधश्रमेणैव नृपप्रीतिर्भवेन्न वा ।। १२५ ।।

सुलभेन स्वस्वभोगप्राप्त्यर्थं तु नृजन्मनाम् ।
कर्मोपासनकाण्डयोर्देवा वै बहवस्स्मृताः ।। १२६ ।।

नृपप्रीतियुतस्यैव सर्वेऽपि राजपूरुषाः ।
यद्यदिष्टं तस्य सर्वं कुर्युश्च स्वयमेव ते ।। १२७ ।।

नृपप्रीतिं काङ्क्षमाणास्तद्द्वारा मुनिसत्तमाः ! ।
पञ्चायतनदेवाश्च कथितास्सार्वभौमवत् ।। १२८ ।।

गुणेशरूपिणः पञ्च तुरीयपदगा वराः ।
अण्डानां व्याकृतानां च जनितारः प्रकीर्तिताः ।।१२९।।

जीवेश्वराणां जनिता व्याकृताव्याकृतात्मनाम् ।
गणेशः पञ्चमो देवो ब्रह्मणां ब्रह्मणस्पतिः ।। १३० ।।

तस्यैव सत्तया सर्वं चलति प्रतिसूत्रवत् ।
राजपूरुषपदवी तिष्ठेच्च राजशासने ।। १३१ ।।

कर्मोपासनदेवानां पदवी सत्तयान्विता ।
आज्ञायां गणराजस्य ब्रह्माण्डेषु प्रतिष्ठिता ।। १३२ ।।

यस्मिन् कस्मिन् राजकीयपुरुषे नृपसत्तमः ।
रुष्टश्चेत्तु तदा तस्य पदभ्रंशो भवेद् ध्रुवम् । १३३ ।।

अधिकारविरहितः प्रजाप्रोक्तः ततः परम् ।
पञ्च देवादयस्सर्वे गणेशाज्ञावशंगताः ।। १३४ ।।

तस्य शासनमाश्रित्य तिष्ठन्ति स्वपदेषु ते ।
स्वतन्त्रो गणराजस्तु महिम्नि स्वस्य तिष्ठति ।।१३५।।

वयं तदंशसंभूतास्तस्य सत्तासमन्विताः ।
सत्यसंकल्पसंयुक्ताः कर्मसृष्ट्यादिकं क्रमात् ।। १३६ ।।

अहंभावो धृतश्चेद्वै रुष्टो भूत्वा गजाननः ।
सत्यसंकल्पतां सत्तां गृह्णीयाच्च ततः परम् ।। १३७ ।।

सृष्ट्यादिकरणे शक्तिवर्जिता जीवतुल्यगाः ।
भवेम चेति भीत्या ते तिष्ठन्ति पञ्च देवताः ।। १३८।।

जपार्चनध्यानरूपं तस्य शासनचिह्नकम् ।
धृत्वा ब्रह्ममुखास्सर्वे तिष्ठन्ति स्वपदेषु च ॥ १३९ ॥

एको देवः पञ्चमस्तु विनायक इति स्मृतः ।
अनेकनायकाः प्रोक्ता ब्रह्माद्या राजकीयकाः ॥ १४० ॥

शैवैश्शाक्तैर्वैष्णवैश्च सौरैः स्मार्तैश्च गाणपैः ।
श्रौते स्मार्ते तान्त्रिके च लौकिके वैदिकेऽपि च ॥ १४१ ॥

अर्चनं प्रथमं तस्य गणराजस्य कीर्तितम् ।
एवं कृत्वा कर्मकर्ता तदाज्ञासंयुतो मतः ॥ १४२ ॥

कर्मदेवा गणेशाज्ञापालकास्तस्य तोषिताः ।
प्रयच्छन्ति कर्मफलं नो चेद्देवो गजाननः ॥ १४३ ॥

आज्ञाभङ्गकारिणोऽस्य कर्मसत्तां तथैव च ।
तेषां फलदानसत्तां गृह्णाति च स्वतन्त्रकः ॥ १४४ ॥

ततो विघ्नपीडितश्च भवेत् कर्ता न संशयः ।
आदौ गणेशपूजा तु तदाज्ञाधारणं मता ॥ १४५ ॥

गणेशो ब्रह्मणां नाथः चतुर्विधमिदं जगत् ।
जडजीवेशरूपं तु नानाभावसमन्वितम् ॥ १४६ ॥

सृष्टं तस्य खेलनाय खेलनार्थं जगत्तले ।
कर्मोपासनदेवाश्च कर्मभोगप्रदायकाः ॥ १४७ ॥

राजकीयपदेष्वेव स्थापिता राजपूरुषाः ।
नृपेणैव यथा तद्वद् गणेशेन च ते सुराः ।
पञ्चदेवादयस्सर्वे स्थापिता नात्र संशयः ॥ १४८ ॥

इति कर्मोपासनकाण्डगतदेवतास्वरूपनिरूपणम्

इति श्रीविनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये नवमोऽध्यायः

## दशमोऽध्यायः

### गणेशपूजनेन सर्वेषामर्धंप्रीतिनिरूपणम्

नारदादय ऊचुः—

गणेशपूजनेनैव चतुर्विधजगद्गताः ।
जीवेश्वरा ह्यर्धतृप्तिं प्राप्नुवन्ति च विष्टपे ।। १ ।।

इति प्राहुर्मुनीशाना योगतत्त्वविशारदाः ।
न केन पूर्णतृप्ताश्च भवेयुस्तद्वद प्रभो ! ।। २ ।।

सूर्य उवाच—

जगज्जीवेश्वराः प्रोक्ता व्यक्ताव्यक्तस्वरूपिणः ।
तेषामात्मा गणेशानः पञ्चमो ब्रह्मणस्पतिः ।। ३ ।।

गणेशतोषणेनैव सर्वेषामात्मतोषणम् ।
भवेदेव न सन्देह इति वेदानुशासनम् ।। ४ ।।

भिन्नमानधारकाणां देहपोषणकारणात् ।
तेषां देहभोगदाख्यं कर्म देहप्रतोषकम् ।। ५ ।।

देहात्मतोषणेनैव पूर्णतृप्तिः प्रजायते ।
तेषां शास्त्रेषु कथितं कर्म नात्मप्रतोषकम् ।। ६ ।।

देहभोगकरं प्रोक्तं गणेशस्य प्रतोषकम् ।
आत्मतृप्तिकरं प्रोक्तं गणेशपूजनेन च ।। ७ ।।

क्रियमाणं तु तत्कर्म तेषां पूर्णप्रतोषकम् ।
राज्यमध्ये नरः कश्चित् स्वकार्यसिद्धये नृपे ।। ८ ।।

विज्ञापनं चकारायं तथैवाज्ञां ददौ नृपः ।
तस्य कार्यसुसिद्ध्यर्थं मन्त्रिणे स नराय च ।। ९ ।।

कार्यसिद्धिर्भवेच्चेति प्रावदत्स ययौ मुदा ।
यन्मूलास्तस्य सिद्धिस्तु भवितव्या नराय वै ।। १० ।।

तस्याज्ञां प्रददौ मन्त्री राजपूरुषमार्गतः ।
नरे प्रीतियुतश्चेत्तु क्षिप्रं यच्छति तत्फलम् ।। ११ ।।

नो चेत्स तु विलम्बेन प्रयच्छति नृपाज्ञया ।
भोक्तृकाले ह्यलाभाच्च ह्यकाले तस्य लाभतः ।।१२।।

फलहीनो न सन्देहो नृपाज्ञासंयुतोऽपि च ।
राजकीयजनानां च नृपप्रीतिस्तथैव च ।। १३ ।।

फलेप्सुभिश्च संप्राप्ये तदर्थं निगमादिषु ।
नित्ये नैमित्तिके काम्ये तेषां तोषणमीरितम् ।। १४ ।।

वेदेषु नानाकर्माणि तदर्थं कथितानि च ।
अदीक्षितैष्षण्मतस्थैर्गणेशतोषणेन च ।। १५ ।।

स्वदेवप्रीतिपूर्वं तु लोकदेवप्रतोषणम् ।
कर्तव्यं स्वात्मभोगार्थं देहभावप्रधारणात् ।। १६ ।।

इति गणेशपूजनेन सर्वेषामर्ध्रप्रीतिनिरूपणम्

## एकनिष्ठगाणपतस्थितिनिरूपणम्

नारदादय ऊचुः—

एकनिष्ठा गाणपता लोकदेवप्रतोषदम् ।
न कुर्वन्ति च तेषां वै देहभोगः कथं भवेत्? ।। १७ ।।

सूर्य उवाच—

गणेशदीक्षासंयुक्ता एकनिष्ठा इति स्मृताः ।
पूर्णभावाद् गणेशस्य प्रीतियुक्ता इति स्मृताः ।। १८ ।।

बान्धवेषु यथाःप्रीतियुतस्तिष्ठेन्नृपोत्तमः ।
भक्तिमार्गदीक्षितेषु तथा तिष्ठेद् गजाननः ।। १९ ।।

मित्रेषु च यथा तिष्ठेन्नृपस्तद्वद् गजाननः ।
उपासनादीक्षितेषु पुत्रेषु च यथा नृपः ।। २० ।।

अपरोक्षज्ञानदीक्षायुतेषु ब्रह्मणस्पतिः ।
नृपबन्धुपुत्रमित्रजनान् वै राजकीयकाः ।। २१ ।।

मन्त्रिपूर्वास्तु तेषाञ्च प्रीतिं कुर्यान्न संशयः ।
तेषामिष्टप्रदानेन नृपस्तुष्टो भवेद् ध्रुवम् ।। २२ ।।

इच्छाभङ्गेन तेषां वै भवेद्रुष्टो नृपोत्तमः ।
तथैव चैकनिष्ठानां देहपोषणकारणात् ।। २३ ।।

तेषामिष्टप्रदानेन कर्मदेवेषु विघ्नपः ।
प्रीतियुक्तो भवेदेव नो चेद्रुष्टो गजाननः ।। २४ ।।

विघ्नेन पीडयेत्तांश्च कुर्यात्सत्ताविवर्जितान् ।
गणेशे भीतिसंयुक्ताः पञ्चदेवादयस्सुराः ।। २५ ।।

दीक्षिताय गाणपाय कामान् हृदि संस्थितान् ।
पूरयेयुर्न सन्देहो गणेशाज्ञाप्रपालकाः ।
पञ्चदेवादिदेवांश्च गणयेन्न तु दीक्षितः ।। २६ ।।

इत्येकनिष्ठगाणपतस्थितिनिरूपणम्

## अदीक्षितगाणपतस्थितिनिरूपणम्

नारदादय ऊचुः—

दीक्षाविरहिता भक्ता गाणेशास्सन्ति भूतले ।
तेषां देहभोगकरास्सिद्धयेयुश्च कथं वद ।। २७ ।।

सूर्य उवाच—

श्रौतं स्मार्तञ्च कुर्युस्ते गाणेशा वैदिका द्विजाः ।
तेन तृप्तियुता देवा भवेयुः कर्मरूपिणः ।। २८ ।।

गणेशप्रीतिसंयुक्ता गाणेशत्वप्रधारणात् ।
तेषामिष्टं प्रयच्छेयुर्देवाः कर्मप्रतोषिताः ।। २९ ।।

इत्यदीक्षितगाणपतस्थितिनिरूपणम्

## शिवादिस्थितिनिरूपणम्

नारदादय ऊचुः—

चतुर्विधमिदं विश्वं देहस्स्याद्ब्रह्मणस्पतेः ।
तस्य तुष्टचा कथं विश्वं न पूर्णतुष्टिमाप्नुयात् ।।३०।।

सूर्य उवाच—

एकात्मभावनायुक्तयोगिनां भावनं च तत् ।
तादृग्भावनशीलानां तथैव च भवेद् ध्रुवम् ।। ३१ ।।

भिन्नभावविहीनत्वात्तेषां हृदि मुनीश्वराः! ।
एकात्मा गणनाथस्तु सर्वं कुर्यान्न संशयः ।। ३२ ।।

भिन्नभावसंयुतेभ्यो मया सर्वमिदं स्मृतम् ।
गणेशकार्यमूर्तिस्स्याद् गुणेशो नात्र संशयः ।। ३३ ।।

विष्णवीशशक्तिसूर्याश्च मन्त्रिवत् परिकीर्तिताः ।
मन्त्रिणां शासनं चापि कर्तव्यं राजकीयकैः ।। ३४ ।।

एकनिष्ठैश्शाम्भवाद्यैर्गणेशार्चनपूर्वकम् ।
कर्तव्यं स्वस्वदेवानां भजनं स्वार्थसिद्धये ।। ३५ ।।

न स्वतन्त्रा मन्त्रिवरा विनाज्ञां राज्यकर्मणि ।
नृपस्य तद्वत्कथिताश्शिवाद्या राजसत्तमाः ।। ३६ ।।

इति शिवादिस्थितिनिरूपणम्

## गुणेशादिप्रीणनेन जायमानप्रीतिनिरूपणम्

नारदादय ऊचुः—

चतुर्विधमिदं विश्वं देहस्स्याद् ब्रह्मणस्पतेः ।
जीवेश्वरा जगद्रूपास्तस्य देहमयास्स्मृताः ।
तेषां प्रीत्या कियत्प्रीतिर्गणेशस्य भवेद्वद ।। ३७ ।।

सूर्य उवाच—

चतुर्विधानां जगतां जीवेशपूर्णतोषणैः ।
अर्धप्रीतिर्गणेशस्य भवेदेव न चान्यथा ।। ३८ ।।

समष्टिरूपी भगवान् चतुर्णां जगतामपि ।
जीवेश्वराणामीशोऽयं गुणेशस्त्रिगुणात्मकः ।। ३९ ।।

अहं देहमयः प्रोक्तो गणेशस्य परात्मनः ।
अर्धतृप्तिर्भवेत्तस्य गुणेशस्य प्रतोषणात् ।। ४० ।।

गुणेश्वरस्याङ्गमया शक्तीशविष्णुभास्कराः ।
गुणेश्वरस्य पादांशमया प्रोक्ता मनीषिभिः ।। ४१ ।।

एकैकगुणसंयुक्ताः पञ्च देवा महेश्वराः ।
ब्रह्माण्डमध्यगाः पादे पञ्चमांशसमन्विताः ।। ४२ ।।

नांशरूपा लोकदेवा दश दिक्पालकादयः ।
विभूतिधारकाः प्रोक्ता देवाश्च मुनयोऽपि च ।। ४३।।

तुरीयस्थितिगानां तु शिवादीनां प्रतोषणात् ।
अष्टमांशप्रीतिरेव भवेदेव हि नान्यथा ।
अंशानुसारतस्तस्य भवेत्प्रीतिर्द्विजोत्तमाः! ।। ४४ ।।

इति गुणेशादिप्रीणनेन जायमानप्रीतिनिरूपणम्

## गाणेशतोषणेन जायमानतृप्तिनिरूपणम्

नारदादय ऊचुः—

गाणपानां प्रीणनेन भवेत् प्रीतिः कथं? वद ।

सूर्य उवाच—

योगिनस्तोषणेनैव गणेशो योगनायकः ।
पूर्णतुष्टिमवाप्नोति निर्वाणदीक्षितस्य च ।। ४५ ।।

त्रिपात् तृप्तिमवाप्नोति गणेशो ब्रह्मणस्पतिः ।
योगदीक्षायुतस्यैव तोषणेनार्धमाप्नुयात् ।। ४६ ।।

उपासनादीक्षितस्य तदर्धं प्राप्नुयाद्ध्रुवम् ।
भक्तिमार्गदीक्षितस्य तदर्धं प्राप्नुयात् प्रभुः ।। ४७ ।।

अदीक्षितगाणपानां तोषणाच्च गणेश्वरः ।
लेशमात्रं भवेत् तृप्तो गणेशभावधारणात् ।। ४८ ।।

इति गाणेशतोषणेन जायमानतृप्तिनिरूपणम्

## स्वर्गस्वानन्दे गणेशाज्ञानिरूपणम्

नारदादय ऊचुः—

एकैकस्मिन्नपि कल्पे तु स्वर्गस्वानन्दपट्टणम् ।
अनुग्रहार्थं लोकानां गणेशो ब्रह्मणस्पतिः ।। ४९ ।।

स्वानन्दनगरात्सिद्धिबुद्धिभ्यां गणसंयुतः ।
आगत्य स्वसभां तत्र करोति मुनीश्वराः ।
भ्रुसुण्डिमुद्गलाद्यश्च वदन्ति तत्क्रमं वद ।। ५० ।।

सूर्य उवाच—

स्वर्गस्वानन्दनगरे कैलासात्पूर्वसंस्थिते ।
इच्छया गणनाथस्य स्वानन्दे भवने यथा ॥ ५१ ॥

सिद्धिबुद्धिगणेशानां सभा तत्र प्रजायते ।
स्वर्गस्वानन्दभवनं गन्तुं शक्तास्सुरोत्तमाः ॥ ५२ ॥

मुनयो मानवाश्चापि गच्छन्ति स्वार्थसिद्धये ।
शूरश्चैव महाशूरो गणेशद्वारपालकौ ॥ ५३ ॥

आज्ञासभायां मध्ये तु ज्येष्ठराजो गजाननः ।
दिव्यसिंहासने सिद्धिबुद्धिभ्यां सह तिष्ठति ॥ ५४ ॥

गुणेशो युवराट् तत्र वामे न्यूनासने वरे ।
अव्यक्तो मुख्यमन्त्री तु तस्मान्न्यूनासने वरे ॥ ५५ ॥

तिष्ठतः क्रमशस्तद्वद्ध्वंसस्सेनापतिर्वरः ।
देवस्य दक्षिणे पार्श्वे सेनेशैस्सह तिष्ठति ॥ ५६ ॥

हस्ते पुस्तकसंयुक्तो गणेशपार्श्वकेऽस्ति च ।
द्वारेशयोरनुज्ञाञ्च प्राप्नुवन्ति च ये सुराः ॥ ५७ ॥

आगच्छन्ति प्रभुसभामन्ये द्वारि निराकृताः ।
स्वानन्दगणपानां तु बहिर्भागे शिवादयः ॥ ५८ ॥

तुरीयपदगास्तत्र तिष्ठन्ति गणकाज्ञया ।
पञ्च देवादयो देवा मुनीशास्तद्बहिस्स्थले ॥ ५९ ॥

स्वर्गस्वानन्दनाथस्तु शम्भुपुत्रो गणेश्वरः ।
कृत्वा सभायां सञ्चारं निश्शब्दं कुरुते जनान् ॥६०॥

गणकः पुस्तकं दृष्ट्वा विज्ञापकस्य नाम च ।
विज्ञापनं वदेद्देवे दूतौ सुमुखदुर्मुखौ ॥ ६१ ॥

उक्त्वा नाम त्रिवारं तौ तत्रैवाह्वयतः क्रमात् ।
तेऽपि गत्वा स्वकार्याणि वदन्ति निकटे प्रभोः ।। ६२ ।।

भ्रूभङ्गं गणनाथस्य दृष्ट्वा देवो गुणेश्वरः ।
अव्यक्तस्य मतेनैव तेषामिष्टसुसिद्धये ।। ६३ ।।

करोत्याज्ञां तदा व्यक्तो गुणेशस्यैव मुद्रया ।
स्वमुद्राञ्च सुसंस्थाप्य विज्ञापनसुपत्रिकाम् ।। ६४ ।।

ददाति गणकस्यैव हस्ते हर्षसमन्वितः ।
विलिख्य पुस्तके स्वस्य तत्सर्वं गणकेश्वरः ।। ६५ ।।

शिवपुत्रस्य हस्ते तु पत्रिकां तां प्रयच्छति ।
विद्याविषयमासीच्चेद् वृत्तं तच्छम्भुनन्दनः ।। ६६ ।।

उपनिषन्महादेवीहस्ते तां तु प्रयच्छति ।
पत्रं पठति सा देवी महाबुद्धेश्च सन्निधौ ।। ६७ ।।

महाबुद्धेशशासनेन विद्यां विज्ञापकप्रियाम् ।
विज्ञापकस्तु प्राप्नोति तत्क्षणात् सर्वदुर्लभाम् ।। ६८ ।।

तदन्यविषयं चेत्तु तद्वृत्तं शम्भुनन्दनः ।
ईशित्वशक्तिहस्ते तां ददाति गणकाज्ञया ।। ६९ ।।

पत्रं पठति सा देवी महासिद्धेस्तु सन्निधौ ।
महासिद्धेशशासनेन भक्तसिद्धिमवाप्नुयात् ।। ७० ।।

अत एव सिद्धिबुद्धी सर्वेषां कारणं स्मृते ।
एवमाज्ञास्थले देवः स्वर्गस्वानन्दपट्टणे ।
सर्वेषामपि भक्तानां इष्टसिद्धिं प्रयच्छति ।। ७१ ।।

इति स्वर्गस्वानन्दे गणेशाज्ञानिरूपणम्

## पञ्चपूजासिद्धिमार्गः

नारदादय ऊचु—

पञ्चार्चनपरस्यैव सिद्धिमार्गान् क्रमाद् वद ।

सूर्य उवाच—

राजसदननगरे गुणेशांशसमुद्भवः ।
राजपुत्रगणेशानश्शशास पृथिवीतलम् ।। ७२ ।।

राज्यलक्ष्मी राज्यविद्या वनिते तस्य कीर्तिते ।
राजसदननगरात् कदाचित् द्विजसत्तमः ।। ७३ ।।

अगमद्दक्षिणं देशं तत्रस्थश्चण्डसंज्ञकः ।
नृपेण पीडितोऽत्यन्तं स्वराज्यवृत्तमब्रवीत् ।। ७४ ।।

चण्डं प्राह तदा विप्रो भो चण्ड! शृणु मे वचः ।
मम राष्ट्रे महाराजा स्वतन्त्रस्सर्वनायकः ।। ७५ ।।

तस्य दृष्टिगतानां तु पश्चाद् दुःखं न विद्यते ।
राजस्थानपट्टणस्य तस्मिन् देशे द्विजोत्तम! ।। ७६ ।।

पञ्चावृतिपट्टणानि तिष्ठन्ति कोशवद् द्विज! ।
तेषां केशशक्तिसूर्याः पतयः परिकीर्तिताः ।। ७७ ।।

पञ्चानां कृपया गम्यं सदनं राजपूजितम् ।
महाबुद्धेस्तु कृपया द्रष्टव्यो नृपसत्तमः ।। ७८ ।।

उत्पादयेन्नृपप्रीतिं महासिद्धिस्ततःपरम् ।
तत्कृपापात्रभूतस्य ब्रह्माण्डे दुर्लभं न हि ।। ७९ ।।

तच्छ्रुत्वा चण्डविप्रस्तु राजस्थानं ययौ मुदा ।
पञ्चावृतिगणेशानां संप्राप्य च कृपां क्रमात् ।। ८० ।।

राजविद्यां महाबुद्धिमुपास्य द्विजसत्तमः ।
ददर्श राजपुत्रं तं दर्शितं गणपं तथा ।। ८१ ।।

उपासनं महासिद्धेश्चकार ब्राह्मणोत्तमः ।
नृपेण तस्य सख्यं च कारयामास वल्लभा ।। ८२ ।।

नृपवत्सर्वसाम्राज्यसौख्यं लेभे द्विजोत्तमः ।
एवं पञ्चार्चनपरो गाणेशो धर्मतत्परः ।। ८३ ।।

क्रमेण पञ्चदेवानां स्थानेषु विविधं सुखम् ।
भुक्त्वा गाणेश्वरं धाम प्राप्नुयान्नात्र संशयः ।। ८४ ।।

अथवा पञ्चकोशेभ्यो मुक्त्वा योगप्रभावतः ।
गुहास्थितमात्मरूपं गणेशं प्राप्नुयाद् ध्रुवम् ।। ८५ ।।

इति पञ्चपूजासिद्धिमार्गः

## गुणेशस्य अष्टोत्तरशतनाममूर्तीनां नामकथनम्

नारदादय ऊचुः—

अष्टोत्तरशताः प्रोक्ता गुणेशस्यैव मूर्तयः ।
गुणेशमूर्तिनामानि निस्सन्देहं वद प्रभो! ।। ८६ ।।

सूर्य उवाच—

गणाधिपः फालचन्द्रस्स्थूलदन्तः पिचण्डिलः ।
मणिकर्णी चतुर्दन्तः पिङ्गलश्चाशु विघ्नपः ।। ८७ ।।

कालानलप्रशमनस्सर्वविघ्नविनाशनः ।
नवनीतो रत्नगर्भो वीरश्चापि प्रवालकः ।। ८८ ।।

धर्मेश्वरोऽथ कामेशो विद्येशो भाग्यवर्द्धनः ।
विभवदो मुक्तिदाता भुक्तिरूपप्रदायकः ।। ८९ ।।

विजयो गर्भदोषघ्नो मेधादः कीर्तिदायकः ।
दौर्भाग्यनाशकश्शोकहरो दुःखप्रणाशनः ।। ९० ।।
गौरीगर्भसमुद्भूतो वामनो राजपुत्रकः ।
मित्रश्च वल्लभेशान उच्छिष्टस्स्वर्णदायकः ।। ९१ ।।
चित्रघण्टेश्वरो द्वारो मोदश्चैव प्रमोदकः ।
मुहूर्तश्च कपर्दी च हेरम्बो गजकर्णकः ।। ९२ ।।
दन्तहस्तोऽष्टशक्तीशस्सिद्धोऽष्टसिद्धिनायकः ।
सन्तानो द्विमुखो मार्गः कूश्माण्डः कूटदन्तकः ।। ९३ ।।
प्रतिवादिमुखस्तम्भकारको मृत्युनाशनः ।
महापापहरश्चाथ दुष्टचित्तप्रसादनः ।। ९४ ।।
पुष्टिदो योगिनीशानो मृतसञ्जीविनीपतिः ।
मोहिनीशोऽथ गणको भगीरथवरप्रदः ।। ९५ ।।
हरिश्चन्द्रगणेशानस्तथैवोर्ध्वगणाधिपः ।
शूलटंकश्च वल्लालश्चण्डोद्दण्डः कलिप्रियः ।। ९६ ।।
कूणिताक्षो मोदकाशी चण्डी देहलिसंभवः ।
पृथगवतारयुक्तमूर्तयः परिकीर्तिताः ।। ९७ ।।
गणेशमूर्तिनामाढ्या अन्या वै मूर्तयस्स्मृताः ।
सिद्धिबुद्धीपतिर्हेमगर्भबाधो विराट्पतिः ।। ९८ ।।
एकदन्तेशवरदौ पुष्टीशः कपिलात्मजः ।
पाराशरो महामन्त्रधनुर्वेदवरप्रदौ ।। ९९ ।।
महोदरः पञ्चकन्यापतिर्ज्ञानारिनाशकः ।
संकष्टहारकः पञ्चवरदो वरदाभिधः ।। १०० ।।

गजाननो विघ्नहर्ता सिन्दूरगणनायकः ।
स्कन्दाग्रजस्तत्त्वपतिर्ज्ञानेशो योगनायकः ॥ १०१ ॥

लम्बोदरश्शक्तिपतिश्शक्तिरूपधरस्तथा ।
मूषकेशश्शक्तिपुत्रः श्रीशमीवरदस्तथा ॥ १०२ ॥

श्रीशक्तिवरदस्सूर्यरूपधृक् च प्रभापतिः ।
हिरण्यपुरुषपुत्रस्सूर्येशो विकटस्तथा ॥ १०३ ॥

रक्तश्श्वेतार्कवरदो विघ्नेशश्शूर्पकर्णकः ।
चतुर्भुजो विष्णुरूपो विष्ण्वीशो धरणीधरः ॥ १०४ ॥

धूम्रवर्णश्शम्भुरूपी स्वात्मबुद्धिप्रकाशकः ।
महेशवरदो दूर्वापार्वतीगणनायकः ॥ १०५ ॥

गजदन्तो मङ्गलेशश्शोणभद्रगणेश्वरः ।
कटङ्कटस्सुधामूर्तिर्हारिद्रो गव्यचन्दनौ ॥ १०६ ॥

अविमुक्तोऽथ लक्षेशो लाभेशो बीजविघ्नपः ।
षडाननस्सहस्रास्यस्सुमुखश्चाथ कल्पकः ॥ १०७ ॥

पञ्चवक्त्रश्चतुर्वक्त्रशिवपुत्रवरप्रदः ।
दुर्मुखो निधिदः कुक्षिर्बालो घोरोऽथ नृत्तकः ॥ १०८ ॥

सरस्वतीपतिः कृष्णो महालक्ष्मीवरप्रदः ।
आशापूरस्तु कथिता गणेशस्यैव मूर्तयः ॥ १०९ ॥

गणेशस्यैव संबन्धरहिताः पञ्चमस्य च ।
केवलं मूर्तयः प्रोक्ता गणकादिमहात्मभिः ॥ ११० ॥

वक्रतुण्डो ढुण्ढिराजो मयूरेशो मदोत्कटः ।
ओंकारश्चाथ लक्ष्मीशः कालश्वेतार्कविघ्नपः ॥ १११ ॥

मन्दारगणपश्चैव शमीगणपतिस्तथा ।
गौरीमलसमुद्भूतो यक्षो दुर्गोऽथ बालकः ॥ ११२ ॥
भूतीशस्तरुणो वृद्धो धूमकेतुश्च भूमिपः ।
वायुर्वह्निः पाशपाणिः व्योमक्षिप्रप्रसादनः ॥ ११३ ॥
एकोऽभयप्रदश्चेन्द्रो ह्याज्ञासिद्धमुखस्तथा ।
सत्यस्त्रिमुखसंज्ञश्च त्रिंशत्संख्यात्मका वराः ॥ ११४ ॥
द्वयोरप्येकनामाढ्यमूर्तयश्चेति कीर्तिताः ।
सूर्यांशजोऽथ विष्णवंशजातो रुद्रांशसंभवः ॥ ११५ ॥
द्वैमातुरो गजोद्भूतो गौर्यंशसंभवस्तथा ।
स्वर्गस्वानन्दसंस्थस्य गणेशस्यैव मूर्तयः ॥ ११६ ॥
गुणेशमूर्तिनामानि पृथगद्य ब्रवीम्यहम् ।
गणाधिपः फालचन्द्रः स्थूलदन्तः पिचण्डिलः ॥ ११७ ॥
मणिकर्णी चतुर्दन्तः पिङ्गलश्चाशुविघ्नपः ।
कालानलप्रशमनस्सर्वविघ्नविनाशकः ॥ ११८ ॥
नवनीतो रत्नगर्भो वीरश्चापि प्रवालकः ।
धर्मेश्वरोऽथ कामेशो विद्येशो भाग्यवर्धनः ॥ ११९ ॥
विभवदो भुक्तिमुक्तिदाता रूपप्रदायकः ।
विजयो गर्भदोषघ्नो मेधादः कीर्तिदायकः ॥ १२० ॥
दौर्भाग्यनाशकश्शोकः हरो दुःखप्रणाशनः ।
गौरीगर्भसमुद्भूतो वामनो राजपुत्रकः ॥ १२१ ॥
मित्रोऽथ वल्लभेशान उच्छिष्टस्स्वर्णदायकः ।
चित्रघण्टेश्वरो द्वारो मोदश्चैव प्रमोदकः ॥ १२२ ॥

मुहूर्तोऽथ कपर्दीशो हेरम्बो गजकर्णकः ।
दन्तहस्तो प्रचण्डश्च सिद्धेशो ह्यष्टसिद्धदः ।। १२३ ।।

सन्तानो द्विमुखो मार्गः कूश्माण्डः कूटदन्तकः ।
प्रतिवादिमुखस्तम्भकारको मृत्युनाशनः ।। १२४ ।।

महापापहरश्चाथ रुष्टचित्तप्रसादनः ।
पुष्टिदो योगिनीनाथो मृतसञ्जीविनीपतिः ।। १२५ ।।

मोहिनीशोऽथ गणको भगीरथवरप्रदः ।
हरिश्चन्द्रगणेशानस्तथैवोर्ध्वगणाधिपः ।। १२६ ।।

शूलटंकश्च बल्लालश्चण्डोद्दण्डः कलिप्रियः ।
कूणिताक्षो मोदकाशी चण्डी देहलिसंभवः ।। १२७ ।।

वक्रतुण्डो डुण्ढिराजो मयूरेशो विनायकः ।
ओंकारश्चाथ लक्ष्मीशः कालश्वेतार्कविघ्नपः ।। १२८ ।।

मन्दारश्च शमी यक्षो दुर्गास्यालो मलोद्भवः ।
भूतीशस्तरुणो वृद्धो धूमकेतुश्च भूमिपः ।। १२९ ।।

वायुर्वह्निः पाशपाणिर्व्योमक्षिप्रप्रसादनः ।
एकोऽभयप्रदश्चेन्द्रो ह्याज्ञासिद्धमुखस्तथा ।। १३० ।।

सत्यस्विमुखसंज्ञश्च बल्लवीनायकस्तथा ।
गजोद्भवो बीजभवो वटगोऽश्वत्थगस्तथा ।
द्वैमातुरश्च विख्याता गुणेशस्यैव मूर्तयः ।। १३१ ।।

इति गुणेशस्याष्टोत्तरशतमूर्तीनां नामकथनम्

## गुणेशगणेशयोः एकनामयुक्तमूर्तिभेदकयनम्

नारदादय ऊचुः—

द्वयोस्सम्बन्धयुक्तानां मूर्तीनां भेदलक्षणम् ।
गुणेशस्य गणेशस्य कृपया वद देशिक! ॥ १३२ ॥

सूर्य उवाच—

वक्रतुण्डगणेशानो मत्सरासुरनाशकः ।
वक्रतुण्डगुणेशस्तु त्रिमूर्तिवरदो मतः ॥ १३३ ॥

दुरासदनिहन्तायं दुण्ढिराजो गणेश्वरः ।
दिवोदास्यराज्यभ्रंशकर्ता ढुण्ढिर्गुणेश्वरः ॥ १३४ ॥

विनायकमयूरेशौ कथितावुभयात्मकौ ।
ओंकारवरदो देवो गणेशो ब्रह्मणस्पतिः ॥ १३५ ॥

ओंकाररूपसंयुक्तो गुणेशानस्तुरीयकः ।
समब्रह्ममयो लक्ष्मीनायको गणनायकः ॥ १३६ ॥

क्षीरसागरसंभूतलक्ष्मीयुक्तो गुणेश्वरः ।
गणेशः कालवरदो गुणेशः कालरूपधृक् ॥ १३७ ॥

श्वेतार्कमूलसञ्जातो गणेशानश्चतुर्भुजः ।
गुणेशस्तु दशभुजो शमीमूलसमुद्भवः ॥ १३८ ॥

गणेश्वरो दशभुजो गुणेशानश्चतुर्भुजः ।
मन्दारसंभवो देवो गणेशो हाटकप्रभः ॥ १३९ ॥

गन्धमन्दारसंभूतो गुणेशो भिन्नवर्णकः ।
शक्तिलोके शक्तिमलाज्जातो देवो गणेश्वरः ॥ १४० ॥

उमादेवीमलाज्जातो गुणेशस्त्रिगुणात्मकः ।
देवानां गर्वनाशार्थं सत्ताहर्ता तु यक्षकः ।। १४१ ।।
केनोपनिषत्पूर्वासु कथितो गणनायकः ।
नायको बुद्धियक्षिण्या गुणेशानस्तुरीयकः ।। १४२ ।।
दुर्गाया वरदो देवो गणेशः पञ्चमस्स्मृतः ।
दुर्गारूपधरो देवः कण्ठायोगजवक्त्रकः ।। १४३ ।।
दुर्गागणपतिरयं गुणेश इति कथ्यते ।
सूर्यपत्नीसुताबालस्तरुणो वृद्धरूपवान् ।। १४४ ।।
त्रिमुखश्चापि कथिता गणेशस्यैव मूर्तयः ।
आत्रेयस्तु गुणेशानो मुखत्रयविराजितः ।। १४५ ।।
नायं गजमुखो देवो बालादिमूर्तयोऽस्य वै ।
त्रयो गजवक्त्रहीना लोके लीलाधरा मताः ।। १४६ ।।
भक्तिप्रिय इति प्रोक्तो गणेशो वृद्धसंज्ञकः ।
तत्त्वानां भस्मनो जातो गणेशो भूतिविघ्नपः ।। १४७ ।।
शंकरस्य सुतो भूत्वा ब्रह्ममानससंभवाः ।
अष्टसिद्धीश्च जग्राह भार्यार्थं तु गुणेश्वरः ।। १४८ ।।
महासिद्धेः प्रसेवार्थं सिद्धिं जग्राह पञ्चमः ।
धूमासुरनिहन्ता तु धूमकेतुर्गणेश्वरः ।। १४९ ।।
कलेरन्ते म्लेच्छहन्ता नववक्त्रगुणेश्वरः ।
द्वयोरन्यावताराश्च भिन्नभिन्नचरित्रकाः ।। १५० ।।
गजोद्भवस्तुरीयस्तु गजाकारात् परात्मनः ।
तुर्यात् समष्टिरूपाच्च समुद्भूत इति स्मृतः ।। १५१ ।।

गजरूपधारकयोश्शिवयोश्च समुद्भवः ।
स्वर्गस्वानन्दनिलयो गङ्गागौरीसमुद्भवः ।। १५२ ।।

द्वैमातुरस्तु सूर्यात्मा स्वर्गस्स्वानन्दगस्स्मृतः ।
समष्टिव्यष्टिमायया जातो देवो गुणेश्वरः ।
स्वरूपभेदज्ञानार्थं मूर्तिमाहात्म्यमीरितम् ।। १५३ ।।

इति गुणेशगणेशयोरेकनामयुक्तमूर्तिभेदकथनम्

## गणेशमूर्तिशक्तिभेदकथनम्

नारदादय ऊचुः—

अष्टोत्तरशतास्वेव मूर्तिषु ब्रह्मणस्पतेः ।
शक्तिसंयुक्तभावानां भेदं दर्शय सत्तम! ।। १५४ ।।

सूर्य उवाच—

पञ्चदशमूर्तयो वै एकशक्तिसमन्विताः ।
पञ्चकन्यायुता चैका सिद्धयष्टकयुताऽपरा ।। १५५ ।।
शक्त्यष्टकयुता चैका तथा नवतिमूर्तयः ।
सिद्धिबुद्धियुताः प्रोक्ता वेदेषु ब्रह्मणस्पतिः ।। १५६ ।।
शक्तिपतिः पुष्टिपतिः लक्ष्मीशश्च प्रभेश्वरः ।
पार्वती गणपो वाणी षण्मुखः पञ्चवक्त्रकः ।। १५७ ।।
इन्द्रो वह्निश्च वायुश्च व्योमभूसिह्मवक्त्रकः ।
पाशपाणिश्च विख्याता एकशक्तिसमन्विताः ।।१५८।।
तरुणोऽष्टशक्तियुतः इच्छाज्ञानक्रियापरा ।
विद्या माया द्रव्यशक्तिर्योगशक्तय ईरिताः ।। १५९ ।।
सरस्वती च पुष्टिश्च योगिनी मोहिनी तथा ।
पञ्चकन्याश्शक्तयश्च पञ्चकन्यापतेः प्रभोः ।। १६० ।।

अणिमाद्यास्सिद्धयश्च भूतीशस्यैव शक्तयः ।
यथाभिन्ननामयुक्तो ह्यवतारेषु विघ्नपः ।
सिद्धिबुद्ध्योस्तथा भिन्ननामानि कथितानि च ।।१६१।।

इति गणेशमूर्तिशक्तिभेदकथनम्

## गुणेशमूर्तिभेदकथनम्

नारदादय ऊचुः—

गुणेशस्यापि मूर्तीनां ब्रूहि त्वं शक्तिलक्षणम् ।

सूर्य उवाच—

षट्पञ्चाशन्मूर्तयश्च शक्तिद्वयसमन्विताः ।। १६२ ।।
एकशक्तियुताः प्रोक्ता मूर्तयश्चापि षोडश ।
अष्टशक्तियुतास्तस्य चत्वारो मूर्तयस्स्मृताः ।। १६३ ।।
अभिन्नशक्तिसंयुक्ता द्वात्रिंशन्मूर्तयोऽपराः ।
बालो वृद्धोऽथ ढुण्ढीशः कालः क्षिप्रप्रसादनः ।।१६४।।
त्रिमुखश्चाशुसदगस्सिद्धास्योऽश्वत्थगस्तदा ।
शूलटंको भीमचण्डी कूणिताक्षः कलिप्रियः ।। १६५ ।।
चण्डोद्दण्डोऽथ गणको दुर्गाकूश्माण्डमुण्डकः ।
कूटदन्तो हरिश्चन्द्रो हेरम्बोऽथ भगीरथः ।। १६६ ।।
गौरीगर्भसमुद्भूतो मूहूर्तो द्विमुखस्तथा ।
मार्गेशश्च कपर्दीशस्सिद्धेशः पापनाशनः ।। १६७ ।।
रुष्ट८ प्रचण्डश्चिख्याता अभिन्नशक्तिसंयुताः ।
अष्टविद्यासुसंयुक्तो दन्तहस्तगणेश्वरः ।। १६८ ।।
श्रुतिस्स्मृतिश्च मीमांसा विद्या न्यायाभिधाऽपरा ।
अर्थविद्या धनुर्विद्या शिल्पा गन्धर्वसंज्ञिका ।। १६९ ।।

आर्युर्विद्या च कथिता अष्टविद्या मुनीश्वरैः ।
अष्टशक्तियुतः प्रोक्तस्तरुणो गणनायकः ।। १७० ।।
अष्टबुद्धियुतः प्रोक्तो देवो मेधागणेश्वरः ।
बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।।१७१।।

मेधा चैवेति कथिता बुद्धयोऽष्ट मुनीश्वरैः ।
अणिमाद्यष्टसिद्धयाढ्यो देवस्सिद्धिविनायकः ।।१७२।।

दन्तहस्तोऽथ तरुणो मेधासिद्धिविनायकः ।
अष्टशक्तियुताः प्रोक्ता निगमेषु मुनीश्वरैः ।। १७३ ।।
पाशपाणिवह्निवायुव्योमपुष्टिविनायकः ।
वल्लभेशश्शारदेशो भूमीशो यक्षिणीपतिः ।। १७४ ।।

सन्तानो वल्लवीनाथो लक्ष्मीशो योगिनीपतिः ।
उच्छिष्टो मोहिनीनाथस्तथा सञ्जीवनीपतिः ।।१७५।।

एकशक्तियुताश्चैते गणेशाष्षोडश स्मृताः ।
प्राणशक्तिर्व्योमवाणी शारदा यक्षिणी तथा ।। १७६ ।।

सञ्जिनी मोहिनी वल्लवी नीलसरस्वती ।
महाबुद्धयंशसंभूता शक्तयोऽष्ट क्रमेण च ।। १७७ ।।

सिद्धलक्ष्मीरन्नलक्ष्मीर्भाग्यलक्ष्मीस्सुयोगिनी ।
सन्तानलक्ष्मीः पुष्टिश्च रूपलक्ष्मीस्तथैव च ।। १७८ ।।

मुक्तालक्ष्मीश्च कथिता महासिद्धयंशसंभवाः ।
अन्याश्शक्तिद्वययुता गुणेशस्यैव मूर्तयः ।। १७९ ।।

इति गुणेशमूर्तिभेदकथनम्

## लम्बोदरनिरूपणम्

नारदादय ऊचुः—

गुणेशस्यैव देहस्थरोमकूपेषु भास्कर! ।
ब्रह्माण्डानामनेकानि लम्बन्ते वेदशासनात् ।। १८० ।।

गुणेशस्तु गणेशस्य देहरूपो न संशयः ।
लम्बोदर इति प्रोक्तो वद तत्कारणं श्रुतौ ।। १८१ ।।

सूर्य उवाच—

लम्बोदरोऽयमेकश्च वेदे संकथितोऽभवत् ।
न वयं तादृशा वेदे लम्बोदरप्रवाचकाः ।। १८२ ।।

तस्योदरात्समुत्पन्नं नानाविश्वं न संशयः ।
नानाब्रह्म तथेशश्च ह्यन्ते तत्र स्थितो भवेत् ।। १८३ ।।

मध्ये कलांशरूपेण क्रीडते गणनायकः ।
अतस्सर्वादिपूज्यश्च सर्वपूज्यो बभूव ह ।। १८४ ।।

सर्वेषां जनको माता तथा सर्वप्रदायकः ।
तत्र किं संशयं विप्राः! कुरुथ ब्रह्मणस्पतौ ।। १८५ ।।
लम्बोदरोपनिषदि प्रोक्तमेवं मुनीश्वराः! ।
उदरादेव सृष्टिस्तु लोकेऽवद्य प्रदृश्यते ।। १८६ ।।
उदरात्पञ्चमस्यैव गणेशस्य परात्मनः ।
चतुर्विधमिदं विश्वं जडजीवेशरूपकम् ।। १८७ ।।

जातमन्ते स्थितं तत्र भवेदेव न संशयः ।
उदरे तस्य लम्बन्ते जगज्जीवेश्वरादयः ।
तेन लम्बोदरः प्रोक्तो गणेशो ब्रह्मणस्पतिः ।। १८८ ।।

इति लम्बोदरनिरूपणम्

## मूषकस्य वाहनत्वनिरूपणम्

नारदादय ऊचुः—

गजाश्वप्लवंगा लोके तिष्ठन्ति वाहनात्मकाः ।
वेदे मूषकवाहश्च कथितः कारणं वद ॥ १८९ ॥

सूर्य उवाच—

मूषकं व्यापकाख्यं च पश्यन्ति वाहनं बुधाः ।
तेन मूषकवाहोऽयं वेदे संकथितोऽभवत् ॥ १९० ॥
'मूष-स्तेये' तथा धातुः ज्ञातव्यस्तेन ब्रह्मधृक् ।
नामरूपात्मकं सर्वं तत्रासद्ब्रह्म वर्तते ॥ १९१ ॥
नामरूपेषु यो भोक्ता तेषां भोक्तृतया स्थितः ।
भोगेषु भोगभोक्ता तु ब्रह्माकारेण वर्तते ॥ १९२ ॥
अहंकारयुतास्तं वै न जानन्ति विमोहिताः ।
'वयं भोक्तार' एवं ते मानयन्ति विशेषतः ॥ १९३ ॥
ईश्वरस्सर्वभोक्ता च चोरवत् तत्र संस्थितः ।
तदेव मूषकः प्रोक्तो मनुजानां प्रचालकः ॥ १९४ ॥
मायया गूढरूपस्सो भोगान् भुङ्क्ते हि चोरवत् ।
ईश्वरस्तु तुरीयस्स्यात् हृद्देशे सर्वदेहिनाम् ॥ १९५ ॥
स्थित्वायं चोरवद् भुङ्क्ते भोगांश्च भोगतस्करः ।
'मूष स्तेये'ति धातुस्स्यात् मूषको भोगतस्करः ॥१९६॥
तुरीय ईश्वरोऽयं तु वाहनः पञ्चमस्य च ।
तेनायं पञ्चमो वेदे प्रोक्तो मूषकवाहनः ॥ १९७ ॥

इति मूषकस्य वाहनत्वनिरूपणम्

## गजजातकृतलिङ्गपूजाकारणनिरूपणम्

नारदादय ऊचुः—

लिङ्गप्रतिष्ठां चक्रे वै गजजातो गणेश्वरः ।
कैलासे नन्दिनं भक्त्या करोति लिङ्गपूजनम् ॥१९८॥

वदन्त्येवं जैगिषव्यदधीचिप्रमुखा वराः ।
सारूप्यपदभोक्तायं ब्रह्माण्डे ब्रह्मणस्पतेः ॥ १९९ ॥

शङ्करं पार्वतीकान्तं गुणेशस्य कलामयम् ।
संपूजयति भक्त्या चेत् तेन वै ब्रह्मणस्पतेः ॥ २०० ॥
न्यूनता संभवेच्चेति भाति तत्त्वं वद प्रभो ! ।

सूर्य उवाच—

शिववीर्याच्च पार्वत्यां जातोऽयं गजसंभवः ।
यथा गजमुखो दैत्यो विघ्नांशसंभवस्स्मृतः ॥ २०१ ॥

तथा देवजातिभूतो गजवक्त्रशिवांशजः ।
ब्रह्मचिह्नमन्यन्नास्ति मुखे विप्राः ! तदा ध्रुवम् ॥२०२॥

त्रिनेत्रचन्द्रचूडाढ्यगजवक्त्रो मुनीश्वराः! ।
मुखे चिह्नो गणेशस्य देहे लम्बोदरत्वता ॥ २०३ ॥

तादृक् चिह्नविहीनोऽयं जनने शिवनन्दनः ।
विघ्नाधिपत्यं प्रददौ दृष्ट्वैव गजवक्त्रताम् ॥ २०४ ॥

शिवस्ततो विचार्यास्य स्ववाक्यपालनाय च ।
एकाक्षरं गणेशस्य दीक्षापूर्वं विधानतः ॥ २०५ ॥

स च योगे स्वयं स्थित्वा सहस्रवत्सरान् बहून् ।
तोषयामास विघ्नेशं सिद्धिबुद्धिपतिं प्रभुम् ॥ २०६ ॥

आविर्भूय पुरस्तस्य गणेशो ब्रह्मणस्पतिः ।। २०७ ।।

ब्रह्मचिह्नाढ्यसारूप्यं लीलामूर्तिधरस्य च ।
व्योमतत्वान्तविघ्नानामाधिपत्यं जगत्तले ।। २०८ ।।

स्वर्गस्वानन्दवसतिं प्रददौ प्रीतिपूर्वकम् ।
गणेशरूपसंयुक्तो नामयुक्तो बभूव च ।। २०९ ।।

यथा भूम्यां तु भ्रूसुण्डी तथा स्वर्गेऽभवत्प्रभुः ।
अयं गाणपतश्रेष्ठो योगशान्तिधरो मतः ।। २१० ।।

जनकश्च गुरुश्चास्य महेशः पार्वतीपतिः ।
परमैकान्तिकानां च गुरुपूजनमीरितम् ।। २११ ।।

अयं गजमुखो देवो हेतुना तेन शङ्करम् ।
स्वगुरुं जनकं भक्त्या पूजयत्यपि विघ्नपम् ।। २१२ ।।

स्वेष्टदेवं मतपतिं कालदेवं गजाननम् ।
हृदि योगेन बाह्ये तु बिम्बेऽर्चयति सादरम् ।। २१३ ।।

न न्यूनता गुरोस्सेवापूजनेन मुनीश्वराः! ।
शिवं विना विष्णुमुखान् गणयेन्न तु शंभुजः ।। २१४ ।।

लिङ्गप्रतिष्ठां चक्रे तु हत्वा गजमुखं खलम् ।
हतो दैत्यो मूषकोऽभूदारुरोह गजाननः ।। २१५ ।।

गणेशपूर्णसारूप्यमभूत् तेन मुदान्वितः ।
स्वगुरुं लिङ्गमध्ये तु पूजयामास हृष्टधीः ।
अनेन न्यूनता नास्ति गणेशस्य मुनीश्वराः! ।। २१६ ।।

इति गजातकृतलिङ्गपूजाकारणनिरूपणम्

## शिवदत्तवरादिनिरूपणम्

नारदादय ऊचुः—

गणेशस्यावताराय मयूरेशाय शङ्करः ।
सर्वादौ सर्वपूज्यत्वं प्रददाविति कीर्तितम् ।
शिवदत्तवरोपेतः कथं श्रेष्ठो भवेच्छिवात् ॥ २१७ ॥

सूर्य उवाच—

शिवयोस्तपसा तुष्टस्तयोः पुत्रो बभूव च ।
सर्वपूज्यादिपूज्याय तत्त्वज्ञश्शंकरो मुदा ॥ २१८ ॥

गौतमादिमुनिभ्यश्च स्वरूपज्ञानसिद्धये ।
पुत्रस्य पुत्रस्नेहेन सर्वादौ सर्वपूज्यताम् ॥ २१९ ॥

प्रददौ तत्तु जग्राह पितृभक्त्या गजाननः ।
पितृदत्तं यथा राज्यं रामचन्द्रो हरिर्यथा ।
अनेन न्यूनता न वर्तेत द्विजसत्तमाः! ॥ २२० ॥

इति शिवदत्तवरादिनिरूपणम्

## शिवपुत्रस्य वेदप्रतिपादकत्वनिरूपणम्

नारदादय ऊचुः—

शिवपुत्रगणेशस्य प्रमाणमस्ति किं श्रुतौ ? ।

सूर्य उवाच—

श्रीरुद्रनमके चास्ति शिवोपनिषदि क्रमात् ॥ २२१ ॥

'गणेभ्यो गणपतिभ्यश्च' नमके चैवमीरितम् ।
'यञ्च विनायकश्चे'ति शिवोपनिषदि क्रमात् ॥२२२॥

शिवस्य कथितोऽयं तु जाबालेऽपि प्रकीर्तितः ।
चतुर्ष्वपि च वेदेषु सूक्तानि ब्रह्मणस्पतेः ॥ २२३ ॥

दश सन्ति महाभागाः! शतोपनिषदस्तथा ।
रौद्रैश्च गाणपैर्मन्त्रैः पूजनीयश्शिवात्मजः ॥ २२४ ॥

गाणपैरेव पूज्योऽयं गणेशो ब्रह्मणस्पतिः ।
न तु रौद्रमन्त्रकैश्च पूजितो विघ्नदायकः ॥ २२५ ॥

वेदपारायणेनैव भवेत्तुष्टो न संशयः ।
पौरुषादीनि सूक्तानि गुणेशस्य श्रुतानि च ॥ २२६ ॥

तैश्च वा गणनाथस्य सूक्तैर्गुणपपूजनम् ।
पुराणवेदशास्त्राणां सम्मतं नात्र संशयः ॥ २२७ ॥

साक्षादात्मा गुणेशस्य गणेशो ब्रह्मणस्पतिः ।
साक्षाद्देहो गणेशस्य गुणेशानस्तुरीयकः ॥ २२८ ॥

इति शिवपुत्रस्य वेदप्रतिपादकत्वनिरूपणम्
इति श्रीविनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये दशमोऽध्यायः

—o—

## एकादशोऽध्यायः

### गाणपतधर्मनिरूपणम्

नारदादय ऊचुः—

गाणेशधर्मान् नो ब्रूहि कृपया दिननायक! ।

सूर्य उवाच—

सिन्दूरोद्धूलनं दिव्यरक्तगन्धानुलेपनम् ।
सिन्दूरेणाथ गन्धेन रक्तेन तिलकं क्रमात् ॥ १ ॥

शमीश्वेतार्कमन्दारमणीनां धारणं तथा ।
रक्तवस्त्रधारणञ्च जपो गाणपतस्य च ॥ २ ॥

षडर्णैकाक्षरस्यैव मन्त्रस्यैकस्य भावतः ।
गणेशपूजनं चैव चतुर्थ्योश्च व्रतस्तथा ॥ ३ ॥

अथर्वशीर्षपठनं ब्राह्मणस्पत्यकस्य च ।
पठनं पञ्चरत्नानां शतोपनिषदामपि ॥ ४ ॥

पुराणविचारश्चैव श्रावणे मासि पूजनम् ।
विनायकरहस्यस्य विचारः पूर्णभावतः ॥ ५ ॥

संवत्सरस्यैकवारं स्वदेशे सेवनं प्रभोः ।
द्वादशाब्दस्यैकवारं मयूरेशे तु सेवनम् ॥ ६ ॥

ब्राह्मणस्पत्येष्टिहोमयज्ञानां करणं तथा ।
मन्त्रादीनां पुरश्चर्या गणेशभक्ततोषणम् ॥ ७ ॥

वैशाखे सिद्धिपूजा वै आश्वीजे बुद्धिपूजनम् ।
आषाढपूर्णिमायां तु गणकस्यैव पूजनम् ॥ ८ ॥

धर्मा गाणपताः प्रोक्ता गणेशोपनिषत्सु च ।
एते धर्माश्च न त्याज्या कदापि दीक्षितैर्वरैः ॥ ९ ॥

दीक्षाविरहितानां तु नियमो नास्ति वै तथा ।
यावच्च क्रियते तावत् फलं प्रोक्तं मनीषिभिः ॥ १० ॥

जपादावपि पूजादौ वारुणस्नानतः परम् ।
पुण्ड्रं गाणपतं धार्यमक्षा धार्याश्च गाणपाः ॥ ११ ॥

विना स्नानं न धर्तव्यं रक्तगन्धेन वर्तुलम् ।
पूजान्तेषु च कर्तव्यं रक्तगन्धानुलेपनम् ॥ १२ ॥

सिन्दूरोद्धूलनं कार्यं वारुणस्नानतः परम् ।
पुण्ड्रस्य धारणात्पूर्वमशुद्धशुद्धहेतवे ॥ १३ ॥

रात्रौ शयनकाले च ब्राह्मे चोत्थाय तत्क्षणात् ।
पूजामध्ये तु देवाय कृत्वा सिन्दूरधारणम् ॥ १४ ॥

तत्परं चापि कर्तव्यं सिन्दूरोद्धूलनं च वा ।
तिलकं वा गाणपतैष्षट्कालेषु ह्यथ त्रिषु ॥ १५ ॥

जपश्च पूजनं चापि कार्ये वेदानुशासनात् ।
कालद्वये जपः कार्यः सन्ध्यया गाणपोत्तमैः ॥ १६ ॥

पूजनं चैककाले वा कर्तव्यं विधिपूर्वकम् ।
यदि क्षेत्रनिवासी चेत् सायंकाले तु सेवनम् ॥ १७ ॥

प्रातःकाले नित्ययात्रा कर्तव्या विधिपूर्वकम् ।
विनायकरहस्ये वा पुराणेष्वपि षट्सु च ॥ १८ ॥

एकाध्यायस्य पठनं श्रवणं स्मरणं च वा ।
व्याख्यानं वाथ कर्तव्यं नित्यं तु भक्तिपूर्वकम् ॥ १९ ॥

न नमस्या गाणपतैश्शैवादिमतसंश्रयाः ।
अभिगम्य न द्रष्टव्यो यतिश्शैवादिसंश्रितः ।। २० ।।

यदि मार्गवशाद् दृष्टो गुणेशभावपूर्वकम् ।
वन्दनीयो नृपो मान्यस्सर्वे मान्या यथार्हकम् ।। २१ ।।

शैवाद्येकमार्गेभ्यो वरास्स्मार्ता न संशयः ।
दीक्षिता ह्यदीक्षितेभ्यो वरास्तेषु न संशयः ।। २२ ।।

अदीक्षितगाणपतो वरस्स्मार्तान्न संशयः ।
एषु कर्मसंस्थिताच्च वरो भक्तिसुसंस्थितः ।। २३ ।।

उपासनापरस्तस्मात् तस्माद् ज्ञानस्थितो वरः ।
ज्ञानयोगे स्थितस्तस्माच्छ्रेष्ठस्सत्यं न संशयः ।। २४ ।।

एभ्यो दीक्षायुतश्श्रेष्ठो वेदशास्त्रप्रमाणतः ।
उपासको वरो भक्तात् ज्ञानस्थ उपासकाद्वरः ।। २५ ।।

योगदीक्षायुतस्तस्मात्तस्मान्निर्वाणदीक्षितः ।
तस्माद्योगी वरः प्रोक्तो वन्द्याश्श्रेष्ठक्रमेण च ।। २६ ।।

परस्परं वन्दनीया दीक्षिता भक्तियोगिनः ।
तयोर्मध्ये गणेशानः स्थित्या गृह्णाति वन्दनम् ।। २७ ।।

अदीक्षितपिता माता वन्द्यौ दीक्षितपुत्रकैः ।
दीक्षितेन तु न त्याज्यस्सन्ध्यया जप उत्तमः ।। २८ ।।

अशक्तविषये बाह्यपूजनं पुत्रकेण वा ।
शिष्येण कारयित्वा च कर्तव्यं मानसार्चनम् ।। २९ ।।

अस्मिन् शक्तिविहीनेन न त्याज्यं बाह्यपूजनम् ।
आशौचे तु शिष्येण पुत्रेण ऋत्विजाऽथवा ।। ३० ।।

अर्हेण गाणपेनैव स्वार्था कारयितव्यापि च ।
अथवा वारुणं स्नानं कृत्वार्द्रवासस्संयुतः ।। ३१ ।।

अस्पृष्ट्वा प्रतिमां यन्त्रं स्पृष्ट्वा शोणशिलां वराम् ।
कार्या पूजातिसंग्रहान्न त्याज्यं पूजनं तथा ।। ३२ ।।

विशेषदीक्षायुक्तस्तु कर्तव्यं शोणपूजनम् ।
महाविशेषसंयुक्तैर्बिम्बेन शोणपूजनम् ।। ३३ ।।

ज्ञानदीक्षायुतैर्यन्त्रप्रतिमाशोणपूजनम् ।
एवं गाणपता धर्मास्संग्रहेण निरूपिताः ।। ३४ ।।

सिन्दूरोद्धूलनं चापि रक्तगन्धानुलेपनम् ।
गाणेशाक्षधारणं च न च कार्याण्यदीक्षितैः ।
अन्यधर्मा यथाशक्ति कार्या दीक्षाविवर्जितैः ।। ३५ ।।

इति गाणपतधर्मनिरूपणम्

## गाणेशनित्यकर्मनिरूपणम्

नारदादय ऊचुः—

नित्यकर्मक्रमं ब्रूहि गाणेशानां जगद्गुरो ! ।

सूर्य उवाच—

ब्राह्मे मुहूर्ते चोत्थाय शुचिर्भूत्वा यथामति ।
समुद्धूल्य च सर्वाङ्गं सिन्दूरेणाथ भस्मना ।। ३६ ।।

ध्यायेच्च हृदयाम्भोजे गणेशं सिद्धिबुद्धिपम् ।
गात्संमदविधानेन मनस्यापूजयेद्विभुम् ।। ३७ ।।

आशीर्षपादस्तवनैस्तोषयेद् गणनायकम् ।
ततो भूमिं सुसंप्रार्थ्य पञ्चायतनरत्नकम् ।। ३८ ।।

सुप्रभातपञ्चकं च पठित्वा गमनेषु च ।
स्मृत्वा गाणपतान् पश्चान्नैऋतिं च दिशं व्रजेत् ॥३९॥

विसृज्य मलमूत्रादीन् शुद्धिं कृत्वा विधानतः ।
आस्यशुद्धिं दन्तशुद्धिं कुर्याच्च विधिपूर्वकम् ॥ ४० ॥

नदीनदसरःकूपतटाकपल्वलेषु च ।
एकस्मिन् विधिवत्स्नानं कर्तव्यं भावपूर्वकम् ॥ ४१ ॥

उषःकाले संग्रहेण स्नानं कार्यं तु दीक्षितैः ।
बाह्याभ्यन्तरशुद्ध्यर्थं प्रीत्यर्थं ब्रह्मणस्पतेः ॥ ४२ ॥

कमण्डलुमहानद्यां तीर्थे गाणपते वरे ।
स्नानमद्य करोमीति संकल्पं गाणपश्चरेत् ॥ ४३ ॥

संप्रार्थ्य भैरवं पश्चादृचा स्तुत्वा जलात्मकम् ।
कमण्डलुनदीस्तोत्रे तीर्थस्य स्तवनेऽपि च ॥ ४४ ॥

एकैकं श्लोकमुच्चार्य स्नानं कुर्याज्जले नरः ।
एकत्रिसंख्याः कृत्वा तदा तीर्थे निमज्जनम् ॥ ४५ ॥

सुधागणपतिं ध्यात्वा तीर्थे च हृदयाम्बुजे ।
सुधाबीजेन पुटितैकवर्णेन जलं तदा ॥ ४६ ॥

शतं जप्त्वाथ दश वा ह्यभिमन्त्र्य ततः परम् ।
कृत्वा च मज्जनं तीर्थे जप्त्वा च दशवारकम् ॥ ४७ ॥

गायत्र्या गणनाथस्य त्रिः प्रोक्ष्य स्वमूर्धनि ।
पुनस्स्नात्वा देवमुनीन् पितॄंश्च तर्पयेत्ततः ॥ ४८ ॥

यक्ष्माणं तर्पयित्वा च दत्वा चापि शिखोदकम् ।
वस्त्रनिष्पीडनं कृत्वा देहप्रमार्जनं ततः ॥ ४९ ॥

कृत्वा कुर्याच्च शुष्कवाससा च वस्त्रधारणम् ।
तर्पणादीनि यतिभिर्न कार्याणि मुनीश्वराः! ॥ ५० ॥

पितृयुक्तगाणपतैर्न देयं तु शिखोदकम् ।
न मुख्यमद्य स्नानं तु जपाङ्गं परिकीर्तितम् ॥ ५१ ॥

स्नानं कार्यं विस्तरेण गाणपैस्स्नानकर्मणि ।
रक्तवस्त्रद्वयं धार्यं दीक्षितैर्गाणपोत्तमैः ॥ ५२ ॥

वर्णाश्रमं समाश्रित्य धार्यं तु रक्तवस्त्रकम् ।
ततो गणेशगायत्र्या सिन्दूरोद्धूलनं चरेत् ॥ ५३ ॥

शिरोललाटहृदयकर्णकण्ठोदरेषु च ।
भुजद्वयपार्श्वपृष्ठद्वादशेषु स्थलेषु च ॥ ५४ ॥

उद्धूलनं भस्मना वा सर्वाङ्गेषु समाचरेत् ।
रक्तगन्धेन तिलकं धार्यं द्वादशनामभिः ॥ ५५ ॥

त्रिपुण्ड्रादिधारकैश्च त्रिपुण्ड्रो परिवर्तुलम् ।
धर्तव्यं रक्तगन्धेन ललाटे केवलं च वा ॥ ५६ ॥

सिन्दूरेणैव तिलकं मध्ये भ्रूयुगयोरपि ।
गाणेशाक्षान् ततो धृत्वा सन्ध्यां गाणपतिं चरेत् ॥५७॥

अक्षमेकं शिखायां तु यज्ञसूत्रं तथैककम् ।
द्विचतुर्विंशदक्षांश्च कण्ठदेशे तु कर्णयोः ॥ ५८ ॥

पृथक् पृथक् षण्मणीन् अष्टोत्तरशतान् ततः ।
उदरे च ततो बाह्वोः सप्तविंशतिसंयुतान् ॥ ५९ ॥

अष्टादशसुसंख्याकान् तथैव मणिबन्धयोः ।
एकविंशतिसंख्याढ्यं स्मरमणिं धारयेन्नरः ॥ ६० ॥

यावच्छक्यं धारयेच्च शिरोदेशे तु गाणपैः ।
स्वानन्दवासी प्रथमं द्वितीयं गणराजकम् ।। ६१ ।।

गजकर्णं तृतीयं स्यात् चतुर्थं शूर्पकर्णकम् ।
पञ्चमं विघ्नराजं च षष्ठं हेरम्बकं स्मृतम् ।। ६२ ।।

सप्तमं सिद्धिनाथं स्यादष्टमं बुद्धिनायकम् ।
लम्बोदरं तु नवमं दशमं वक्रतुण्डकम् ।। ६३ ।।

चिन्तामणिं ततः प्रोक्तं ढुण्ढिराजं तु द्वादशम् ।
एतद्द्वादशनामानि युज्यन्ते सर्वकर्मसु ।। ६४ ।।

श्रीतारबीजसंयुक्तनमोन्तनाममन्त्रकैः ।
तिलकानुलेपने च कार्याणि गाणपोत्तमैः ।। ६५ ।।

वक्ष्यमाणनाममन्त्रैः क्रमेण मणिधारणम् ।
स्वानन्देशशिखायां तु कण्ठे तु गजवक्त्रकः ।। ६६ ।।

लम्बोदरोऽयमुदरे वक्रतुण्डैकदन्तकौ ।
श्रुत्योस्तु विकटो विघ्नराजो बाह्वोः प्रकीर्तितौ ।।६७।।

महोदरो धूम्रकेतुस्तथैव मणिबन्धयोः ।
यज्ञसूत्रे तु कथितो गणेशो ब्रह्मणस्पतिः ।। ६८ ।।

तथैव च स्मरण्यां तु कथितस्तु गणेश्वरः ।
श्रीतारबीजसंयुक्तैरेतेषां नाममन्त्रकैः ।। ६९ ।।

धार्याणि गाणपाक्षाणि तेषामङ्गेषु भावतः ।
मन्त्रसन्ध्यां ततः कृत्वा वैदिकीं तु त्रिवर्णजः ।। ७० ।।

सूतशूद्रमागधाद्यैः कार्या तन्त्रप्रकीर्तिता ।
जप्त्वा गणेशगायत्रीं मूलमन्त्रं ततः परम् ।। ७१ ।।

बीजनाममनुं पश्चात् विधिपूर्वं तु गाणपः ।
कृत्वा पश्चाद्वर्णसन्ध्यां चरेत्सूत्रानुसारतः ॥ ७२ ॥
जप्त्वा च मातरं पश्चात् हुत्वा च पावकं क्रमात् ।
अङ्गानि कवचादीनि जप्यानि च यथाविधि ॥ ७३ ॥
दूर्वापुष्पाद्याहरणे जप्यान्येतानि वा क्रमात् ।
ब्रह्मयज्ञगाणपतैः सूक्तोपनिषदामपि ॥ ७४ ॥
गीतादर्शनपूर्वाणां पुराणानां तथैव च ।
एषामर्थविचारो वा कर्तव्यः पठनञ्च वा ॥ ७५ ॥
मध्याह्ने संगवे वापि कर्तव्यं पूजनं प्रभोः ।
एककालिकपूजायां मध्यकालो वरो मतः ॥ ७६ ॥
रात्रौ संग्रहपूजा वा यद्यस्ति संगवो वरः ।
संगवे यदि पूजा चेत् पूजान्ते दर्शनस्य च ॥ ७७ ॥
उपनिषद्गीतयोश्च पठनं वरमुच्यते ।
मतदेवतर्पणं च गणेशवैश्वदेवकम् ॥ ७८ ॥
कर्तव्यं दीक्षितैर्भक्त्या तत्संस्कारयुतैर्दिनम् ।
भोजनाच्च परं कुर्यात् पुराणानां विचारकम् ॥ ७९ ॥
अर्चनं धूपदीपाभ्यां नैवेद्यञ्च ततः परम् ।
नीराजनं च कर्तव्यं रात्रौ चापि सुसंग्रहात् ॥ ८० ॥
सायमस्तमनात्पूर्वं सन्ध्या सा घटिकात्रयम् ।
परं चापि ततः पूर्वं कार्या गाणपती वरा ॥ ८१ ॥
प्रातःकाले वन्दनं च सायाह्ने सेवनं वरम् ।
अष्टोत्तरशतैर्नामभिर्देवमर्चयेद्दिनम् ॥ ८२ ॥

शतत्रयनामभिश्च भौमे शुक्रेऽर्चयेद्विभुम् ।
सहस्रनामभिर्भक्त्या चतुर्थ्योरपि यत्नतः ॥ ८३ ॥

नारिकेलं मोदकं वा देयं वारव्रते प्रभोः ।
मोदकानि विशेषेण चतुर्थ्योर्ब्रह्मणस्पतेः ॥ ८४ ॥

गुलक्षीरमुद्गघृततण्डुलानां सुयोगतः ।
पक्वं सिद्धोदनं प्रोक्तं गणेशस्य प्रियङ्करम् ॥ ८५ ॥

उपवासदिने भुक्तं न दोषाय प्रकल्पते ।
अशक्तविषये चैतद्भोज्ये सिद्धोदनं स्मृतम् ॥ ८६ ॥

एकसंवत्सरस्यैव मध्ये वै दशलक्षकः ।
एकाक्षरजपः कार्यः षल्लक्षाश्च षडक्षरे ॥ ८७ ॥

इति गणेशनित्यकर्मनिरूपणम्

## मन्त्रसन्ध्यानिरूपणम्

नारदादय ऊचुः—

ब्रूहि गाणपतीं सन्ध्यां वेदवेदान्तकीर्तिताम् ।

सूर्य उवाच—

बिन्दुत्रिकोणषट्कोणाष्टपत्रसंयुतं वरम् ।
यन्त्रं विलिख्य तन्मध्ये चैकार्णेन जले क्रमात् ॥ ८८ ॥

अभिमन्त्र्य मूलमन्त्रं जप्त्वा तद्दशवारकम् ।
तद् गृहीत्वा वामहस्ते संस्थाप्य निस्सृतेन च ॥ ८९ ॥

'नमो व्रातपतये'ति नामभिश्शीर्षकीर्तितैः ।
कृत्वा मूर्ध्नः प्रोक्षणं तु गृहीत्वा दक्षिणे करे ॥ ९० ॥

मूलेन दशवारं वै अभिमन्त्र्य जलं पिबेत् ।
अर्घ्यत्रयं तु गायत्र्या गणेशाय ददेत् क्रमात् ।। ९१ ।।

कालातीते तदर्थं च दातव्यमर्घ्यमेककम् ।
महावाक्यानुसन्धानं कर्तव्यं च ततः परम् ।। ९२ ।।

अथवा तु महावाक्यषट्कस्य जपमाचरेत् ।
श्रीतारबीजसंयुक्तमहावाक्यजपस्स्मृतः ।। ९३ ।।

एकार्णवच्च स्यात्तु कर्तव्यं तज्जपे द्विजाः! ।
'प्रज्ञाना'दिमहावाक्यचतुष्टयमुदीरितम् ।। ९४ ।।

'अहं गणपतिरेक एवास्मि' तथैव च ।
'विनायकोऽह'मिति च वाक्यानि ब्रह्मणस्पतेः ।। ९५ ।।

विनायकोऽहमिति च तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं प्रमोदा वै न संशयः ।। ९६ ।।

एवमुक्त्वा ततः कार्यं तर्पणं वक्ष्यमाणकैः ।
गणेश्वरं गणक्रीडं गणनाथं गणाधिपम् ।। ९७ ।

वक्रतुण्डमेकदंष्ट्रं महोदरं गजाननम् ।
लम्बोदरं च विकटं विघ्नेशं धूम्रवर्णकम् ।। ९८ ।।

तर्पयेच्च ततो देवं गायत्रीजपमाचरेत् ।
ऋष्यादिकं च कथितमेकार्णमन्त्रवत् क्रमात् ।। ९९ ।।

न्यासादिकं च षड्खण्डैर्ध्यानं तु मूलमन्त्रवत् ।
ध्यानं तु त्रिविधं प्रोक्तमेकवर्णस्य योगिभिः ।। १०० ।।

गणेशाथर्वशीर्षे तु कथितं बिन्दुबोधकम् ।
स्वानन्दबोधकं ध्यानं शिखायां परिकीर्तितम् ।
तापिनीकथितं ध्यानं सोऽहंब्रह्मप्रबोधकम् ।। १०१ ।।

इति मन्त्रसन्ध्यानिरूपणम्

## एकाक्षरजपविधिनिरूपणम्

नारदादय ऊचुः—

एकाक्षरजपविधिं कृपया क्रमशो वद ।

सूर्य उवाच—

हलात्मको गकारस्तु त्वंपदब्रह्म कथ्यते ।
अकारस्तत्रसंस्थो वै निर्गुणस्तत्पदात्मकः ।। १०२ ।।

बिन्दुस्तत्र स्वसंवेद्यो ह्यसिरूप इति स्मृतः ।
तत्त्वमस्यात्मकं ब्रह्म गंकारस्यैव देवता ।। १०३ ।।

गङ्कारो वृत्तिरहितस्सर्वसाक्षीति कथ्यते ।
तस्मादेव समुद्भूतस्तारकध्वनिरुत्तमः ।। १०४ ।।

दैवी प्रकृतिरोंकारध्वनिरूपा प्रकीर्तिता ।
श्रीङ्काररूपिणी शक्तिः माया मूलप्रकृतिरुच्यते ।।१०५।।

ओङ्काररूपिणी बुद्धिः सिद्धिः श्रीङ्काररूपिणी ।
श्रीमोंयुतगं बीजमन्त्रो ह्येकाक्षरस्स्मृतः ।। १०६ ।।

त्यक्त्वा श्रीकारमतुलं प्रणवं केवलं जगुः ।
केचिच्च तारकं त्यक्त्वा श्रीङ्कारं प्रवदन्ति च ।।१०७।।

व्याकृतं त्रिविधं विश्वं श्रीङ्कार इति कथ्यते ।
अव्याकृतं तुरीयं वै ओंकार इति कीर्त्यते ।। १०८ ।।

द्वयोरभेदभावे वै गंकारः पञ्चमस्स्मृतः ।
कण्ठाधो गणनाथस्तु श्रीङ्कारमय उच्यते ।। १०९ ।।

ओंकारो मस्तकं तस्य पूर्णाङ्गं तु गकारकः ।
वर्णात्मकं व्याकृतं स्यात् प्रणवे तेन केचन ।। ११० ।।

श्रीङ्कारमतुलं त्यक्त्वा जगुस्तं प्रणवेन च ।
ओंकारवच्च श्रींकारश्चतुर्विधजगन्मयः ॥ १११ ॥

द्वयोरमात्रभावे तु गंकारः पञ्चमस्स्थितः ।
श्रद्यों शक्तिर्गणेशस्य गंबीजरूपिणः प्रभोः ॥ ११२ ॥

गुणेशस्तुर्यसंज्ञस्तु वेदानां जनको मतः ।
निश्वासवदनायासाद्वेदान् सृष्ट्वा गुणेश्वरः ॥ ११३ ॥

तत्क्रमेणैव सकलं ससर्ज विश्वमञ्जसा ।
समष्टिव्यष्टयभेदाख्यभावत्रययुतस्तु सः ॥ ११४ ॥

ईश्वराणामीश्वरोऽयं समष्टिरिति कथ्यते ।
स च व्यष्टिरिति प्रोक्तः प्रतिब्रह्माण्डधारणात् ॥११५॥

व्यष्टीनां समवाये तु समष्टिर्वै गणो मतः ।
द्वयोरभेदधारको गणेश इति कथ्यते ॥ ११६ ॥

एवं भावत्रयोपेतस्तुरीयः पुरुषः परः ।
व्यष्टिभावधरोऽयं तु गणको गुरुराद्यकः ॥ ११७ ॥

अनेककोटिब्रह्माण्डधारकाच्च गुणेश्वरात् ।
ब्रह्माण्डे चानयामास वेदादीन् गणको गुरुः ॥ ११८ ॥

एकाक्षरस्य मन्त्रस्य गणको ऋषिरुच्यते ।
मन्त्राणामादिदृष्टा तु ऋषिर्मन्त्रस्य कथ्यते ॥ ११९ ॥

उपनिषदां जननी गायत्री तु निचृत्स्मृता ।
छन्दोऽस्य निचृद्गायत्री देवता तु गणेश्वरः ॥ १२० ॥

चतुर्विधानां जगतां समूहो गण उच्यते ।
तदात्मकस्तदीशश्च गणेशः पञ्चमो मतः ॥ १२१ ॥

श्चौं शक्ती तु गं बीजो गणकऋषये नमः ।
इति हस्तं न्यस्य मूर्ध्नि मन्त्रन्यासो मुनीश्वराः! ।।१२२

निचृद्गायत्री छन्दसे नम इति मुखाम्बुजे।
गणेशादेवतायै नम इति च हृदम्बुजे ।। १२३ ।।

गं बीजाय चेति बीजे श्चौंशक्त्यै पदद्वयोः ।
श्चौं गामित्यादि दीर्घैश्च कराङ्गन्यासमाचरेत् ।
दीर्घषट्कैश्च दिग्बन्धं कृत्वा ध्यानं समाचरेत् ।।१२४।।

ध्यानम्—

सत्यानन्दविराजिते निजगृहे रक्ताम्बुजे संस्थितं
सत्ये ज्योतिषि विघ्नराजममलं रक्तं सदा साक्षिणम् ।
कण्ठाधस्सगुणं परात्मवदनं युक्तं प्रियाभ्यां मुदा
बिभ्राणं वरदाभये निजकरैः पाशांकुशौ तं भजे ।।१२५

स्वसंवेद्यब्रह्मणस्तु ध्यानमेतदुदीरितम्

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं रक्तवस्त्रावृतं तं
पाशं चैवाङ्कुशं वै रदनमभयके पाणिभिस्सन्दधानम् ।
सिद्ध्या बुद्ध्या प्रश्लिष्टं गजवदनमहं चिन्तये ह्येकदन्तं
नानाभूषाभिरामं निजजनसुखदं नाभिशेषं गणेशम् ।। १२६ ।।

सोऽह ब्रह्मात्मकस्यैव निर्गुणस्य प्रकीर्तितम्
एकदन्तं चतुर्हस्तं पाशमंकुशधारिणम् ।
रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ।। १२७ ।।

रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् ।
रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैस्सुपूजितम् ।। १२८ ।।

भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् ।
आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ १२९ ॥

सर्वाभरणशोभाढ्यं सुगन्धतिलकोज्ज्वलम् ।
सिद्धिबुद्धियुतं ध्यायेत् स्वानन्दभवनेश्वरम् ॥ १३० ॥

पञ्चोपचारैस्संपूज्य जपं कुर्याद्यथाविधि ।
न्यासं कृत्वा पूर्ववच्च मनसा पूजयेद्विभुम् ॥ १३१ ॥

जागृद्ब्रह्म समारभ्य पूर्णयोगान्तमेव च ।
उत्तमस्यानुसन्धानं गणकेन महात्मना ॥ १३२ ॥

तुरीयस्य पञ्चमस्य कथितश्च षडक्षरः ।
स्वानन्देशगणेशस्य मूर्तिष्वष्टसु बिन्दुगा ॥ १३३ ॥

वक्रतुण्डाभिधा प्रोक्ता पूर्णोंकारमयो विभुः ।
पञ्चमो बिन्दुसंज्ञस्तु षडर्णस्यैव देवता ॥ १३४ ॥

त्रिमूर्तिवरदो देवो गुणेशो वक्रतुण्डकः ।
वक्रं मायामुखं प्रोक्तं मोहितं तज्जगद्गतम् ॥ १३५ ॥

तद्भावं हन्ति तुण्डेन तेनायं वक्रतुण्डकः ।
वक्रतुण्डस्य मन्त्रस्य भार्गवो ऋषिरुच्यते ॥ १३६ ॥

अनुष्टुप्छन्दस्तूदितो देवता वक्रतुण्डकः ।
हुंबीजं वक्रतुण्डाय शक्तिरित्यभिधीयते ॥ १३७ ॥

षडक्षरैस्तु न्यासाद्याः ध्यानं पूर्वमुदीरितम् ।
'वक्रतुण्डाय हुं'चेति मन्त्रः प्रोक्तष्षडक्षरः ॥ १३८ ॥

एकाक्षरस्य मन्त्रस्य श्रींकारं प्रणवस्तथा ।
यथा वै कथितो विप्राः! षडर्णस्य तथैव च ।
मायाबीजश्च श्रींकारो युज्येते जपकर्मणि ॥ १३९ ॥

इति एकाक्षरजपविधिनिरूपणम्.

## चिन्तामणिद्वीपपतेः मुख्यमन्त्रनिरूपणम्

नारदादय ऊचुः—

चिन्तामणिद्वीपपतेः मन्त्राश्च विविधाश्श्रुताः ।
तेषु मुख्यतमान् ब्रूहि कृपया दिननायक! ॥ १४० ॥

सूर्य उवाच—

तारश्रीमायया युक्तो वक्रतुण्डषडक्षरः ।
नवाक्षर इति प्रोक्तो स तूच्छिष्टमनुस्स्मृतः ॥ १४१ ॥

तारश्रीशक्तिकन्दर्पभूविघ्नबीजसंयुतः ।
षडक्षरो महामन्त्रो द्वादशाक्षर उच्यते ॥ १४२ ॥

अष्टाविंशत्यर्णमन्त्रो महागणपतेस्स्मृतः ।
एकोनविंशत्यर्णस्तु शारदेशस्य कीर्तितः ॥ १४३ ॥

अन्यस्स्वर्णप्रदो मन्त्रः तथान्यः पुत्रदस्स्मृतः ।
एते मन्त्रा मुख्यतमा गुणेशस्य प्रकीर्तिताः ॥ १४४ ॥

इति चिन्तामणिद्वीपपतेर्मुख्यमन्त्रनिरूपणम्

## गुणेशस्य नानामन्त्रनिरूपणम्

नारदादय ऊचुः—

सर्वार्थसाधकं मन्त्रं गुणेशस्य वद प्रभो! ।

सूर्य उवाच—

षडक्षरो नवार्णश्च तथैव द्वादशाक्षरः ।
चिन्तामणिद्वीपपतेर्मुख्यमन्त्रा इति स्मृताः ॥ १४५ ॥

षडक्षरो मुक्तिदस्स्यात् नवार्णो भुक्तिमुक्तिदः ।
पुरुषार्थप्रदो मन्त्रो द्वादशार्णो मनुर्वरः ।। १४६ ।।

त्रयाणामपि मन्त्राणां भार्गवो ऋषिरुच्यते ।
छन्दोनुष्टुप् निचृच्चापि देवता गणनायकः ।। १४७ ।।

बीजन्यासादयः प्रोक्ता मन्त्रैरेव द्विजोत्तमाः! ।

चक्राब्जत्रिशिखान् गुणेक्षुजधनुर्नीलोत्पलं सद्गदां,
व्रीह्यग्रस्त्वथ बीजपूररदनान् कुम्भं करैर्बिभ्रतम् ।
पद्मोद्यत्करनालशोभितमहाविद्यारुचा संयुतं
सार्द्धार्द्धेन्दुमहं भजे गणपतिं नेत्रत्रयोद्भासितम् ।। १४८ ।।

एवं ध्यात्वा च जप्तव्यास्त्रयो मन्त्राश्च गाणपैः ।
आज्ञास्थानगतस्यैव ध्यानमेतदुदीरितम् ।। १४९ ।।

ज्ञानस्थाने गणेशानस्तथा दशभुजान्वितः ।
अभयं कल्पवल्लीं च ज्ञानमुद्राक्षमालिके ।। १५० ।।

मुद्गरं पूर्णपात्रं च कुठारं मातुलिङ्गकम् ।
शंखं च चूतकलिकां कलशं पुष्करे तथा ।। १५१ ।।

दधानश्श्वेतवर्णाभो गुणेशो ज्ञानमण्टपे ।
विद्याबुद्धिज्ञानदाता ज्ञानमण्टपसंस्थितः ।। १५२ ।।

पुरुषार्थप्रदोऽयं वै आज्ञामण्टपसंस्थितः ।
गजाकारस्वरूपेण नराकारस्वरूपतः ।। १५३ ।।

गजाननस्वरूपेण मूलस्थाने तु तिष्ठति ।
'ओंग्'मिति चैकवर्णो गजाकारस्वरूपिणः ।। १५४ ।।

अनेककोटिब्रह्माण्डरूपिणः परितोषदः ।
'ओं गं गणेशाय नमः' इत्यष्टाक्षरमनुर्वरः ॥ १५५ ॥

नराकाररूपिणस्तु गुणेशस्य प्रतोषकः ।
षडक्षरो महामन्त्रो गजाननस्वरूपिणः ॥ १५६ ॥

गुणपो गजवक्त्राढ्यो मूलस्थाने चतुर्भुजः ।
आज्ञामण्टपसंस्थोऽयं वल्लभानायकोऽभवत् ॥ १५७ ॥

ज्ञानमण्टपसंस्थोऽयं शारदागणपोऽभवत् ।
अवतारमूर्तयश्च स्थानत्रयगतोद्भवाः ॥ १५८ ॥

वल्लभेश्वरमन्त्रस्य गणको ऋषिरुच्यते ।
छन्दो निचृद्गायत्री देवता वल्लभेश्वरः ॥ १५९ ॥

गंबीजं प्रणवश्शक्तिस्स्वाहा वै कीलकं स्मृतम् ।
गामित्यादि दीर्घषट्कैः षड्बीजसंयुतैः पृथक् ॥१६०॥

न्यासश्च कथिता विप्राः! संबुद्धिर्गणपतेः प्रभोः ।
षट्बीजसहितो वेदे प्रथमः कूट उच्यते ॥ १६१ ॥

वरदद्वितयं वेदे द्वितीयः कूट ईरितः ।
'सर्वजनं मे वशमानय स्वाहा' तृतीयकः ॥ १६२ ॥

चतुर्थ्यन्तादिभेदाश्च मन्त्रे दशविधा स्मृताः ।
तारो माया रमा वाणी मारो बाला गणे वरः ॥१६३॥

गणपतेश्चतुर्थी च ततो विद्याप्रदाय च ।
स्वाहया च शारदेशमनुर्वेदप्रविश्रुतः ॥ १६४ ॥

एकोनविंशत्यर्णाढ्यो विद्याबुद्धिप्रदायकः ।
ऋष्यादिकं वल्लभेशमनुवत्परिकीर्तितः ॥ १६५ ॥

तारमायारमाभूमिबीजो गाणपतस्स्मृतः ।
गणपतेश्चतुर्थी च स्वर्णगेहे ततः परम् ॥ १६६ ॥

व्यवस्थिताय तत्पश्चात् ततस्स्वर्णप्रदाय च ।
हुंफट् स्वाहा स्वर्णदोऽयमष्टाविंशतिवर्णकः ॥ १६७ ॥

शंखादिनिधिभिश्चैव वसुधारादिशक्तिभिः ।
सेवितं तं निधिपतिं श्रीसमृद्धिसमन्वितम् ॥ १६८ ॥

स्वर्णवर्णं विरूपाक्षं पाशांकुशवराभयम् ।
हृदि स्वर्णमयं ध्यायेत् स्वर्णगेहे व्यवस्थितम् ॥१६९॥

एवं नानाभीष्टदाश्च गर्गस्य मन्त्रकल्पके ।
उक्ताः क्रमेण मन्त्राश्च गणेशस्य यथाविधि ॥ १७० ॥

इति गणेशस्य नानामन्त्रनिरूपणम्

## सिद्धिबुद्धिमन्त्रकथनम्

नारदादय ऊचुः—

सिद्धिबुद्ध्योर्मुख्यमन्त्रानपि नो वद भास्कर! ।

सूर्य उवाच—

अनेकमन्त्राः कथितास्सिद्धिबुद्ध्योः पृथक् पृथक् ।
षडक्षरो वरस्तेषु गणको ऋषिरुच्यते ॥ १७१ ॥

छन्दस्तु निचृद्गायत्री सर्वं च मन्त्रखण्डकैः ।
तारकश्रीनमस्सिद्ध्यै महासिद्धेष्षडक्षरः ॥ १७२ ॥

तारवाणिनमो बुद्ध्यै महाबुद्धेष्षडक्षरः ।

सिद्धिं ब्रह्मकवल्लभां कनकभां हेमाम्बरालङ्कृतां
दक्षे पद्मकरां कृपार्द्रहृदयां विघ्नेशवामे स्थिताम् ।

वामे लम्बकरां गणेशवनितां कल्हारमालाधरां
चिन्तारत्नविभूषणां स्मितमुखीं योगाग्निरूपां भजे ।।१७३

बुद्धिं विघ्नपवल्लभां स्मितमुखीं हेमाग्रश्वेताम्बरां
वामे पद्मकरां शशांकहिमभां चिन्तामणीभूषणाम् ।
दक्षे लम्बकरां शशांकवदनां विघ्नेशदक्षे स्थितां
चम्पामाल्यधरां कृपार्द्रहृदयां ज्ञानाग्निरूपां भजे ।।१७४।।

स्वानन्दे संस्थितयोर्गणेशपार्श्वयोः क्रमात् ।
एवं चिन्तामणिद्वीपे सिद्धिर्लक्ष्मीति कथ्यते ।। १७५ ।।

सरस्वती महाबुद्धिरिति वेदविदो विदुः ।
ऋष्यादिकं वल्लभेशमनुवत् परिकीर्तितम् ।। १७६ ।।

प्रणवश्च चतुर्बीजाश्श्रीमायामारभूमयः ।
'ओन्नमो भगवती महालक्ष्मीः' ततः परम् ।। १७७ ।।

'वरवरदा' यूतत् पश्चात् 'श्रीविभूतये स्वाहया' ।
ऋष्यादिकं शारदेशमन्त्रवत्परिकीर्तितम् ।। १७८ ।।

तारमायारमावाणीमारबालास्ततः परम् ।
'नमो भगवती' चेति ततः प्रोक्ता सरस्वती ।। १७९ ।।

'वर वरदे वाणी च विद्यायै स्वाहया' ततः ।

मुक्ताभां दिव्यवस्त्रां मृगमदतिलकां रत्नकल्हारमालां
केयूरैर्मेखलाद्यैर्नरमणिखचितैर्भूषणैर्भासमानाम् ।
कर्पूरामोदवक्त्रामपरिमितकृपापूर्णनेत्रारविन्दां
श्रीलक्ष्मीं पद्महस्तां जितपतिहृदयां विश्वभूत्यै नमामि ।।

नीहारहारघनसारसुधाकराभां
कल्याणदां कनकचम्पकदामभूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं
वाणीं नमामि मनसा वचसा विभूत्यै ॥ १८१ ॥

इति सिद्धिबुद्धिमन्त्रकथनम्

## अत्यावश्यकमन्त्रनिरूपणम्

नारदादय ऊचुः—

एकाक्षरजपाढ्यानां नाममन्त्रं वद प्रभो! ।

सूर्य उवाच—

श्रीतारवैघ्नबीजांश्च गणपतये ततः परम् ।
सिद्धिबुद्धिपतये च सिद्धिबुद्धिप्रदाय च ॥ १८२ ॥

स्वाहया च महामन्त्रश्चतुर्विंशतिवर्णकः ।
'सिन्दूराभं' ध्यानमस्य मन्त्रो गणपतोषकः ॥ १८३ ॥

एकार्णमन्त्रवत्सर्वं ऋष्यादिकमुदीरितम् ।
सर्वारिष्टनाशनाख्यगुणेशस्य मनुं ब्रुवे ॥ १८४ ॥

द्वादशार्णवच्च सर्वं ध्यानादिकमुदीरितम् ।
गणकोऽस्य ऋषिः प्रोक्तो न्यासाश्च वल्लभेशवत् ॥

तारश्रीशक्तिकन्दर्पभूमिवैघ्नास्ततः परः ।
गणपतेश्च संसिद्धिर्वरदद्वितयं ततः ॥ १८६ ॥

मम प्रतिबन्धऋणदारिद्र्यरोगसंकटान् ।
क्षिप्रं नाशय नाशयेति श्रीसमृद्धिं ततः परम् ॥ १८७ ॥

देहि देहि स्वाहया च पञ्चाशद्वर्णमन्त्रकः ।
पञ्चलक्षजपेनैव सर्वकष्टनिवारकः ॥ १८८ ॥

इति अत्यावश्यकमन्त्रनिरूपणम्

## मन्त्रसिद्धिसाधननिरूपणम्

नारदादय ऊचुः—

तन्त्रशास्त्रप्रवक्तारो लोकानां मोहदायकाः ।
वेदोक्तमन्त्रान् शेपुस्ते तन्त्रमन्त्रप्रभावतः ।। १८९ ।।

सत्ताहीना बभूवुस्ते मन्त्रास्तेनैव वैदिकाः ।
प्राहुरेवं शुक्रमुखास्तन्त्रमन्त्रविदुत्तमाः ।
कथं सत्तासमायुक्ता भवेयुस्तद्वद प्रभो! ।। १९० ।।

सूर्यं उवाच—

शापदोषप्रशान्त्यर्थं मन्त्राणां कीलकं स्मृतम् ।
गाणेशानां दोषशान्त्यै शिवेन परमात्मना ।। १९१ ।।

कीलकं गणनाथस्य मन्त्रसिद्ध्यै प्रकीर्तितम् ।
सहस्रनामस्तोत्रं च कवचं वज्रपञ्जरम् ।। १९२ ।।

हृदयं स्तवराजश्च वेदपादस्तवस्तथा ।
गीतावरणस्तोत्रं वा लहरी वा गुरुत्रयम् ।। १९३ ।।

सूक्तं चापि दशाङ्गानि देवतुष्ट्यै स्मृतानि च ।
जपो होमस्तर्पणं च मार्जनं द्विजभोजनम् ।। १९४ ।।

पञ्चाङ्गानि मन्त्रसिद्ध्यै कथितानि महात्मभिः ।
कवचं हृदयं देवपूजनं चावृतिस्तवः ।। १९५ ।।

त्रिशतीस्तोत्रकाण्येव चात्मदेवादितोषणे ।
कथितानि पञ्चकानि ज्ञेयान्येतानि निश्चितम् ।।१९६।।

इति मन्त्रसिद्धिसाधननिरूपणम्

## कीलकनिरूपणम्

नारदादय ऊचुः—

मन्त्रशापदोषशान्त्यै कीलकं ब्रूहि भास्कर! ।

सूर्य उवाच—

कीलकस्य ऋषिश्शंभुश्छन्दोऽनुष्टुप् प्रकीर्तितम् ।
देवता गणनाथस्तु सर्वं च मूलमन्त्रवत् ॥ १९७ ॥

एकविंशतिवारं तु जप्त्वा मूलं ततः पठेत् ।

शिव उवाच—

रूपं बलं श्रियं देहि यशो वीर्यं गजानन! ।
मेधां प्रज्ञां तथा कीर्तिं विघ्नराज! नमोस्तु ते ॥१९८॥

यदा देवादयस्सर्वे कुण्ठिता दानवैः कृताः ।
तदा त्वं तान् निहन्तिस्स्म कुरुषे वीर्यसंयुतान् ॥१९९॥

तथा मन्त्रा गणेशान! कुण्ठिताश्च दुरात्मभिः ।
शापैश्च तान् सवीर्यांस्तु कुरुष्व त्वं नमो नमः ॥ २००॥

शक्तयः कुण्ठितास्सर्वास्स्मरणेन त्वया प्रभो ।
ज्ञानयुक्तास्सवीर्याश्च कृता विघ्नेश ते नमः ॥ २०१ ॥

चराचरं जगत्सर्वं सत्ताहीनं यदा भवेत् ।
त्वया सत्तायुतं ढुण्ढे! स्मरणेन कृतं च ते ॥ २०२ ॥

तत्त्वानि वीर्यहीनानि यदा ज्ञानानि विघ्नप! ।
स्मृत्या ते वीर्ययुक्तानि पुनर्जातानि ते नमः ॥ २०३ ॥

ब्रह्माणि योगहीनानि जातानि स्मरणेन ते ।
यदा पुनर्गणेशान! योगयुक्तानि ते नमः ॥ २०४ ॥

इत्यादि विविधं सर्वं स्मरणेन च ते प्रभो ।
सत्तायुक्तं बभूवैव विघ्नेशाय नमो नमः ।। २०५ ।।

तथा मन्त्रा गणेशान! वीर्यहीना बभूविरे ।
स्मरणेन पुनर्ढुण्ढे! वीर्ययुक्तान् कुरुष्व तान् ।। २०६ ।।

सर्वं सत्तासमायुक्तं मन्त्रपूजादिकं प्रभो! ।
मम नाम्ना भवतु ते वक्रतुण्डाय ते नमः ।। २०७ ।।

उत्कीलय महामन्त्रान् जपेन स्तोत्रपाठतः ।
सर्वसिद्धिप्रदा मन्त्रा भवन्तु त्वत्प्रसादतः ।। २०८ ।।

गणेशाय नमस्तुभ्यं हेरम्बायैकदन्तिने ।
स्वानन्दवासिने तुभ्यं ब्रह्मणस्पतये नमः ।। २०९ ।।

एवं पठित्वा पश्चात्तु न्यासादीन् पूर्ववच्चरेत् ।
गणेशकीलकमिदं मन्त्रशापनिवारकम् ।
अनेन मन्त्रसिद्धिं च लेभिरे शिवपूर्वकाः ।। २१० ।।

इति कीलकनिरूपणम्

## वज्रपञ्जरकथनम्

नारदादय ऊचुः—

वज्रपञ्जरकं ब्रूहि गणेशस्य दिनेश्वर! ।

सूर्य उवाच—

उपदिष्टं गुणेशेन शिवाय वज्रपञ्जरम् ।
गुणेशो ऋषिरेतस्य छन्दोऽनुष्टुप् प्रकीर्तितम् ।। २११ ।।

मूलमन्त्रवच्च शेषं कृत्वा च धारयेदिदम् ।
बिन्दुरूपो वक्रतुण्डो रक्षतु मे हृदि स्थितः ।। २१२ ।।

देहान् चतुर्विधान् पातु तत्त्वाधारस्सनातनः ।
एकदन्तो देहमोहयुतं सोऽहंस्वरूपधृक् ।। २१३ ।।

देहिनं मां विशेषेण रक्षतु भ्रमनाशकः ।
महोदरः पातु देवो नानाबोधान् प्रतापवान् ।। २१४।।

सदा रक्षतु मे बोधानन्दसंस्थो ह्यहर्निशम् ।
सांख्यान् रक्षतु सांख्येशो गजवक्त्रस्सुसिद्धिदः ।। २१५ ।।

असत्येषु संस्थितं मां पातु लम्बोदरस्सदा ।
सत्सु स्थितं सुमोहेन पातु मां विकटो विभुः ।। २१६ ।।

आनन्देषु स्थितं नित्यं मां रक्षतु समात्मकः ।
विघ्नराजो महाविघ्नैर्नानाखेलकरः प्रभुः ।। २१७ ।।

अव्यक्तेषु स्थितं नित्यं पातु मां धूम्रवर्णकः ।
स्वसंवेद्येषु संस्थं मां गणेशस्स्वस्वरूपधृक् ।। २१८ ।।

भयेश्वरस्सदा पातु योगभावेन संस्थितः ।
अयोगेषु स्थितं पातु ह्यसमाधिसुखे रतः ।। २१९ ।।

योगशान्तिधरः पातु सर्वदा योगसंस्थितम् ।
गणाधीशः प्रसन्नात्मा सिद्धिबुद्धिसमन्वितः ।। २२० ।।

गजकर्णः पुरः पातु पश्चिमे ढुण्ढिनायकः ।
याम्यां चिन्तामणिः पातु कौबेर्यां निधिदायकः।।२२१।।

आग्नेय्यां विघ्नहर्तापि नैर्ऋत्यां वरदोऽवतु ।
वायव्यां पातु हेरम्बः ऐशान्यामीशनन्दनः ।। २२२ ।।

ऊर्ध्वं सिद्धिपतिः पातु बुद्धीशो यस्सदाऽवतु ।
सर्वाङ्गेषु मयूरेशः पातु मां भक्तिलालसः ।। २२३ ।।

यत्रतत्रस्थितं मां तु सदा रक्षतु योगपः ।
परशुपाशसुसंयुक्तो वरदाऽभयधारकः ।। २२४ ।।

असिलक्ष्यमयः पातु पितरौ मे गणेश्वरः ।
आत्मानं मे तत्पदार्थो गणक्रीडस्तु रक्षतु ।। २२५ ।।

त्वंपदार्थमयः पातु गणनाथो मम प्रियाम् ।
गणाधिपो गुणेशो मे पुत्रान् पुत्रींश्च रक्षतु ।। २२६ ।।

धनं गृहं पशून् भृत्यान् भ्रातृंश्च गुरुसत्तमान् ।
वरदः पञ्चदेवानां मयूरेशस्सदाऽवतु ।। २२७ ।।

इदं गणपतेः प्रोक्तं वज्रपञ्जरकं वरम् ।
धारयस्व महादेव विजयी त्वं भविष्यसि ।। २२८ ।।

य इदं पञ्जरं धृत्वा यत्रकुत्रस्थितो भवेत् ।
न तस्य जायते क्वापि भयं नानास्वभावजम् ।। २२९।।

त्रिकालं यः पठेन्नित्यं स गणेश इवापरः ।
निर्विघ्नस्सर्वकार्येषु ब्रह्मभूतो भवेन्नरः ।। २३० ।।

यश्शृणोति गणेशस्य वज्रपञ्जरकं वरम् ।
आरोग्यादिसमायुक्तो भवेच्च गणपप्रियः ।। २३१ ।।

धनं धान्यं पशून् विद्यामायुष्यं पुत्रपौत्रकम् ।
सर्वसंपत्समायुक्तमैश्वर्यं पठनाल्लभेत् ।। २३२ ।।

न भयं तस्य वज्रात्तु चक्राच्छूलाद्भवेत् कदा ।
यं यं चिन्तयते मर्त्यस्तं तं प्राप्नोति शाश्वतम् ।।२३३।।

पठनादस्य विघ्नेशपञ्जरस्य निरन्तरम् ।
लक्षावृत्तिभिरेवं सः सिद्धपञ्जरको भवेत् ।। २३४ ।।

स्तम्भयेदपि सूर्यं तु ब्रह्माण्डं वशमानयेत् ।
एवमुक्त्वा महादेवं तिरोऽभूच्च गुणेश्वरः ।। २३५ ।।

इति वज्रपञ्जरकथनम्

## एकार्णकवचनिरूपणम्

नारदादय ऊचुः—

एकार्णकवचं ब्रूहि कृपया दिननायक! ।

सूर्य उवाच—

पुरेदं कवचं प्रोक्तं पार्वत्यै शंभुना द्विजाः! ।

शम्भुरुवाच—

एकार्णगणनाथस्य कवचं सर्वकामदम् ।
प्रभवन्ति च निर्विघ्नास्स्मरणेनान्यमानवाः ।। २३६ ।।

एककालं त्रिकालं वा पठन्ति गाणपाश्च ये ।
तेषां क्वापि भयं नास्ति संग्रामे संकटे गिरौ ।। २३७ ।।

भूतवेतालकृत्यादिग्रहैरपि न बाध्यते ।
इदं कवचमज्ञात्वा यो भजेद् गणनायकम् ।। २३८ ।।

न स सिद्धिमवाप्नोति मूढो वर्षशतैरपि ।
इदमेकार्णकवचं गणकेन प्रकीर्तितम् ।। २३९ ।।

गोपनीयं प्रयत्नेन नाख्येयं यस्यकस्यचित् ।
एकार्णमन्त्रवत्सर्वं ऋष्यादिकमुदीरितम् ।। २४० ।।

गणेशो मे शिरः पातु फालं पातु गजाननः ।
नेत्रे गणावृतः पातु गजकर्णश्श्रुती मम ।। २४१ ।।

कपोलौ गणनाथोऽव्याद् घ्राणं गन्धर्वपूजितः ।। २४२ ।।

मुखं मे सुमुखः पातु चुबुकं गिरिजासुतः ।
जिह्वां पातु गणक्रीडो दन्तान् रक्षतु दुर्मुखः ।। २४३ ।।

वाचं विनायकः पातु कण्ठं पातु मदोत्कटः ।
स्कन्धौ पातु गजस्कन्धो बाहू मे विघ्ननाशनः ।।२४४।।

हस्तौ रक्षतु हेरम्बो वक्षः पातु महाबलः ।
हृदयं मे गणपतिरुदरं मे महोदरः ।। २४५ ।।

नाभिं गम्भीरहृदयः पृष्ठं पातु सुरप्रियः ।
कटिं मे विकटः पातु गुह्यं गुह्यकपूजितः ।। २४६ ।।

कुमारगुरुरूरू मे जानुनी मे गणाधिपः ।
जङ्घे जयप्रदः पातु गुल्फौ मे धूर्जटिप्रियः ।। २४७ ।।

चरणौ दुर्जयः पातु सर्वाङ्गं गणनायकः ।
आमोदो मेऽग्रतः पातु प्रमोदः पृष्ठतोऽवतु ।। २४८ ।।

दक्षिणे पातु बुद्धीशो वामे सिद्धिप्रियोऽवतु ।
प्राच्यां रक्षतु मां नित्यं चिन्तामणिविनायकः ।।२४९।।

आग्नेय्यां वक्रतुण्डोऽव्याद्दक्षिणस्यामुमासुतः ।
नैर्ऋत्यां सर्वसिद्धीशः पातु नित्यं गणेश्वरः ।। २५० ।।

प्रतीच्यां सिद्धिदः पातु वायव्यां गजकर्णकः ।
कौबेर्यां सर्वबुद्धीशः ऐशान्यमीशनन्दनः ।। २५१ ।।

ऊर्ध्वं विनायकः पातु ह्यधो मूषकवाहनः ।
दिवा गोक्षीरधवलः पातु नित्यं गजाननः ।। २५२ ।।

सत्त्वं रजस्तमो वाचं बुद्धिं ज्ञानं स्मृतिं दयाम् ।
धर्मं चतुर्विधं लक्ष्मीं लज्जां कीर्तिं धियं कुलम् ।। २५३

धनं धान्यं गृहं दारान् पुत्रान् पौत्रान् सखीन् गुरून् ।
एकदन्तोऽवतु श्रीमान् सर्वतः शङ्करात्मजः ॥ २५४ ॥
य इदं कवचं देवी प्रपठेन्नियतश्शुचिः ।
एककालं द्विकालं वा त्रिकालं वापि भक्तितः ॥२५५॥
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते ।
यं यं कामयते मर्त्यस्सुदुर्लभमनोरथम् ॥ २५६ ॥
तं तमेवैति सकलं षण्मासान्नात्रसंशयः ।
सर्वपापविनिर्मुक्तो जायते भुवि मानवः ॥ २५७ ॥
मोहनस्तम्भनाकर्षमारणोच्चाटनादिकम् ।
स्मरणादेव जायन्ते नात्र कार्या विचारणा ॥ २५८ ॥
सर्वविघ्नहरं सर्वग्रहपीडानिवारणम् ।
सर्वशत्रुक्षयकरं सर्वापत्तिविनाशनम् ॥ २५९ ॥
धृत्वेदं कवचं देवि! यो भजेन्मन्त्रमुत्तमम् ।
न बाध्यते स विघ्नौघैः कदाचिदपि कुत्रचित् ॥ २६०॥
भूर्जे लिखित्वा विधिवद्धारयेद्यो नरश्शुचिः ।
एकाक्षरस्य मन्त्रस्य कवचं सर्वदुर्लभम् ॥ २६१ ॥
बाहौ शिरसि कण्ठे वा पूजयित्वा गणाधिपम् ।
यो धारयेन्महेशानि! विघ्नौघैर्न स बाध्यते ॥ २६२ ॥
एकाक्षरगणेशस्य कवचं सर्वसिद्धिदम् ।
पठेद्वा पाठयेद्वापि तस्य सिद्धिः करे स्थिता ॥ २६३ ॥
न प्रकाश्यं महेशानि! कवचं यत्रकुत्रचित् ।
दातव्यं भक्तियुक्ताय शिष्याय तनुजाय वै ॥ २६४ ॥

एकार्णकवचं चैतद्गणकेन प्रकीर्तितम् ।
उपदिष्टं पुरा मह्यं तत्ते प्रोक्तं महेश्वरि! ।। २६५ ।।

इत्येकार्णकवचनिरूपणम्
इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये एकादशोऽध्यायः

## द्वादशोऽध्यायः

### एकार्णहृदयनिरूपणम्

नारदादय ऊचुः—

एकार्णहृदयं ब्रूहि कृपया दिननायक! ।

सूर्य उवाच—

एकाक्षरगणेशस्य हृदयं हृदयात्मकम् ।
उपदिष्टं शङ्कराय गणकेन महात्मना ।। १ ।।
तदेवाद्य प्रवक्ष्यामि यूयं शृणुत सादरम् ।

गौर्युवाच—

एकाक्षरगणेशस्य स्वानन्देशस्य ब्रह्मणः ।
नामरूपार्थसत्ताभिस्स्वरूपज्ञानसिद्धये ।। २ ।।
एकाक्षरगणेशस्य हृदयं ब्रूहि शङ्कर! ।

शिव उवाच—

एकार्णमन्त्रवत्सर्वं ऋष्यादिकमुदीरितम् ।
छन्दोऽनुष्टुप् कीर्तितं च प्रसादे विनियोगकः ।। ३ ।।

स्थितं गमिति यद् ब्रह्म स्वयं ज्योतिस्वरूपकम् ।
नमस्तस्मै स्वस्वरूपब्रह्मणेऽसिपदात्मने ।। ४ ।।

स्वानन्दब्रह्मबीजाय स्वात्मानन्दस्वरूपिणे ।
मायावृत्तिविहीनाय गंकाराय नमो नमः ।। ५ ।।

गंकारशक्तिरूपाय गंकारसंभवाय ते ।
गुणनिर्गुणरूपाय प्रणवाय नमो नमः ।। ६ ।।

अकाराय नमस्तुभ्यं जाग्रद्ब्रह्मस्वरूपिणे ।
उकाराय नमस्तेऽस्तु स्वाप्नब्रह्ममयाय वै ।। ७ ।।

नमस्तेऽस्तु मकाराय सौषुप्तब्रह्मधारिणे ।
नमो ध्वनिस्वरूपाय स्मिताभावप्रधारिणे ।। ८ ।।

पूर्णोंकारस्वरूपाय नमो बिन्दुमयाय ते ।
शून्यप्रणवरूपाय निर्गुणाय नमो नमः ।। ९ ।।

ओंकारशक्तियुक्ताय गंकाराय सदात्मने ।
एकार्णमन्त्ररूपाय तत्त्वमस्यात्मने नमः ।। १० ।।

ओंकारबुद्धिसंस्थाय श्रींकारशक्तिदायिने ।
श्रचोंकारसंयुताय गंकाराय नमो नमः ।। ११ ।।

ओंकारमुखयुक्ताय श्रींकारदेहधारिणे ।
गंकाराय नमस्तेऽस्तु महावाक्यार्थब्रह्मणे ।। १२ ।।

शून्यप्रणववक्त्राय बिन्दुदेहप्रधारिणे ।
व्याकृताव्याकृतमयतारपादद्वयाय ते ।। १३ ।।

वर्णत्रयनादरूपचतुर्भुजधराय च ।
गंकारात्मस्वरूपाय चैकार्णाय नमो नमः ।। १४ ।।

एकार्णमन्त्रदेवाय स्वानन्दब्रह्मरूपिणे ।
गुणनिर्गुणभावाभ्यां विहीनाय नमो नमः ।। १५ ।।
स्वस्वरूपमहिम्निस्थभावयुक्ताय ब्रह्मणे ।
स्वयंज्योतिस्वरूपाय साक्षादात्मात्मने नमः ।। १६ ।।
गकारमूर्द्धयुक्ताय णकारजठराय च ।
ईशपादसंयुताय गणेशाय नमो नमः ।। १७ ।।
निर्गुणब्रह्ममूर्ध्ने ते सगुणब्रह्मदेहिने ।
स्वस्वरूपपूर्णदेहयुताय ब्रह्मणे नमः ।। १८ ।।
समष्टिव्यष्टिरूपाख्यं यद् ब्रह्म वेदकीर्तितम् ।
यस्य कुम्भस्थलं प्रोक्तं तं नतोऽस्मि गजाननम् ।।१९।।
यस्य नेत्रत्रयं प्रोक्तं वेदे ब्रह्म त्रिधा स्थितम् ।
महारूपं नमस्तस्मै साक्षिणे केवलात्मने ।। २० ।।
यद् ब्रह्म कथितं वेदे कारणानां च कारणम् ।
तदेव शुण्डा यस्यैव मुखे तस्मै नमो नमः ।। २१ ।।
ज्ञानरूपं तु यद् ब्रह्म वेदेषु गजसंज्ञिकम् ।
तदेव यस्य कर्णौ स्याद् गजकर्णाय ब्रह्मणे ।। २२ ।।
नमो बिन्दुमयं ब्रह्म यस्य कण्ठमुदीरितम् ।
नमस्तस्मै गणेशाय पूर्णोंकारस्वरूपिणे ।। २३ ।।
बोधात्मकं परं ब्रह्म जठरं यस्य कीर्तितम् ।
गुणनिर्गुणरूपाय गणेशाय नमो नमः ।। २४ ।।
सदसत्समसहजसंज्ञिकं तु चतुर्विधम् ।
स्वानन्दं ब्रह्म कथितं यस्य वेदे चतुर्भुजम् ।। २५ ।।

नमस्तस्मै गणेशाय चतुस्संयोगधारिणे ।
केवलं निर्गुणं सोऽहं सर्वसत्तास्वरूपकम् ॥ २६ ॥

तदेव यस्य दन्तस्स्याद्दन्तिने ते नमो नमः ।
जीवात्मपरमात्मानौ पादौ यस्य प्रकीर्तितौ ॥ २७ ॥

नमस्चतुर्षु विश्वेषु पदद्वयधराय ते ।
सर्वसंहारकं ब्रह्म यस्यैव परशुस्स्मृतम् ॥ २८ ॥

अंकुशं तु नियन्त्राख्यं पाशं मोहस्वरूपकम् ।
सृष्टिरूपं तु कमलं चत्वारि यस्य बाहुषु ॥ २९ ॥

शस्त्ररूपेण राजन्ति नमः स्वानन्दधारिणे ।
अभयं रक्षकं यस्य ब्रह्मणां जगतामपि ॥ ३० ॥

कामदं वरदं प्रोक्तं तन्नमामि गजाननम् ।
भुक्तिमुक्तिप्रदं ब्रह्म चिन्तामणिसुसंज्ञिकम् ॥ ३१ ॥

यस्य कण्ठे भूषणं तं विघ्नेशं प्रणतोऽस्म्यहम् ।
अमृतं ब्रह्म यत्प्रोक्तमक्षीणचन्द्ररूपकम् ॥ ३२ ॥

तदेव भूषणं यस्य निटिले तन्नतोऽस्म्यहम् ।
स्वानन्दाख्यं परं ब्रह्म यस्यैव नगरं स्मृतम् ॥ ३३ ॥

स्वानन्दवासिनं देवं तन्नमामि गजाननम् ।
रसानां ब्रह्म यत्प्रोक्तं यस्य स्वानन्दपट्टणे ॥ ३४ ॥

इक्षुसागररूपं तत् नमस्तस्मै सदात्मने ।
उरो यस्य स्मृतो धर्मो ह्यधर्मः पृष्ठ उच्यते ॥ ३५ ॥

शुभाशुभे यस्य पार्श्वे नमस्तस्मै परात्मने ।
ओषध्यो यस्य रोमाणि लयो यस्य निमेषणम् ॥३६॥

उन्मेषणं जगत्सृष्टिर्नमस्तस्मै गुणात्मने ।
पञ्चचित्तवृत्तिमयी हृद्गुहारूपिणी परा ॥ ३७ ॥
बुद्धिर्यस्य भोगशक्तिस्तस्मै धीपतये नमः ।
बुद्धेर्मोहप्रदा सिद्धिर्यस्य सामर्थ्यरूपिणी ॥ ३८ ॥
नमस्तस्मै गणेशाय सर्वसिद्धिप्रदायिने ।
अन्तर्यामी स्तेयरूपो यस्यैव वाहनं स्मृतः ॥ ३९ ॥
नमो मूषकवाहाय मूषकध्वजिने नमः ।
जगद्ब्रह्म लक्षरूपं लाभरूपा तयोरपि ॥ ४० ॥
ब्रह्मणी कथिते यस्य तनयौ वेदविश्रुतौ ।
लक्षलाभकारणाय ब्रह्मणस्पतये नमः ॥ ४१ ॥
सगुणं कण्ठपर्यन्तं यस्य देहे प्रकीर्तितम् ।
ओंकाररूपिणे तस्मै नमस्त्वम्पदधारिणे ॥ ४२ ॥
यस्य मूर्द्धा परं ब्रह्म निर्गुणं गजवाचकम् ।
शून्यप्रणवरूपाय नमस्तत्पदधारिणे ॥ ४३ ॥
निराकारं च साकारं द्विभेदपरिवर्जितम् ।
असिरूपं यस्य देहं नमो ब्रह्ममयाय ते ॥ ४४ ॥
तत्त्वमस्याकृतिधरमेकार्णमन्त्रदैवतम् ।
सिद्धिबुद्धिपतिं ध्यायेत् स्वानन्देशं गजाननम् ॥ ४५ ॥
जीवेश्वराणां हृदये चित्तरूपगुहामये ।
स्वयं भोगविरहितो लिप्तलेपातिवर्जितः ॥ ४६ ॥
चित्तप्रकाशको भूत्वा ज्ञानरूपेण संस्थितः ।
यो देवस्तं गणेशानं वन्दे चिन्तामणिप्रभुम् ॥ ४७ ॥

गकारस्सगुणः प्रोक्तो णकारो निर्गुणस्स्मृतः ।
द्विभावसंयुतं हीनं गणेशं प्रणतोऽस्म्यहम् ॥ ४८ ॥

'अजो ह्येक' इति प्रोक्तस्सगुणो मायया युतः ।
दन्तो मायाधारकस्स्यान्निर्गुणोऽसङ्गपूरुषः ॥ ४९ ॥

द्वयोरभेदसंयोगधारकं ब्रह्मणस्पतिम् ।
एकदन्तं गणेशानं नतोऽस्मि भक्तिलालसः ॥ ५० ॥

सर्वेषां नायको भूत्वा स्वस्य नायकवर्जितम् ।
निरङ्कुशं तं गणपं प्रणतोऽस्मि विनायकम् ॥ ५१ ॥

जगज्जीवेश्वराद्याश्च ब्रह्माण्यन्नमुखानि च ।
यस्योदराच्च जातानि जठरे यस्य सन्ति च ॥ ५२ ॥

उदरे यस्य लम्बन्ते तं वै लम्बोदरं भजे ।
समाधिना यं डुण्ढन्ति योगिनश्चेश्वरस्तथा ॥ ५३ ॥

तमेव गणपं भक्त्या डुण्ढिराजं नतोऽस्म्यहम् ।
विचित्रचित्रकलापैर्नानाभ्रमप्रदर्शकः ॥ ५४ ॥

मयूरस्तु तथा माया नानाभावप्रदर्शनात् ।
सर्वमोहकरी तेन मयूरा चेति कथ्यते ॥ ५५ ॥

स्वानन्दरूपमायाया ईश्वरो यो गणेश्वरः ।
मयूरेशं गणेशानं मायेशं प्रणतोऽस्म्यहम् ॥ ५६ ॥

गजाकारा महामाया तस्यास्सत्ताप्रदानतः ।
अनने जीवदानाद् गजानन इति श्रुतः ॥ ५७ ॥

गजाननं गणेशानं नतोऽहं भक्तिलालसः ।
दीनार्थवाच्यो हेसंज्ञो विश्वगः परमेश्वरः ॥ ५८ ॥

ब्रह्म तत्पालकत्वाच्च रम्ब इत्यभिधीयते ।
द्विभावधारकं ब्रह्म हेरम्बं प्रणतोऽस्म्यहम् ।। ५९ ।।

जगद्भावधरं वक्रं हन्ति तुण्डेन यस्तु तम् ।
वक्रतुण्डं गणेशानं प्रणतोऽस्मि सदा मुदा ।। ६० ।।

जगतां ब्रह्मणां ज्येष्ठभावे राजति यो विभुः ।
ज्येष्ठराजं गणेशानं नमामि भक्तपालकम् ।। ६१ ।।

समाधिना यद्गतस्य पुनर्जन्म न वै भवेत् ।
तत्स्थानं नैजमित्येव कथितं वेदपारगैः ।। ६२ ।।

तत्र स्थितं गणपतिं नैजगं प्रणतोऽस्म्यहम् ।
चतुर्विधानां जगतां जीवेशानां मनोरथाः ।। ६३ ।।

यांस्तेषां पूरकं चाशापूरकं प्रणतोऽस्म्यहम् ।
यद्वरेण समं विश्वं स्थापितं स्वपदेषु च ।। ६४ ।।

तं वन्दे वरदं देवं गणेशं ब्रह्मणस्पतिम् ।
मायामयमिदं विश्वमज्ञानरूपकं कटम् ।। ६५ ।।

मायामोहविहीनं तं विकटं प्रणतोऽस्म्यहम् ।
धारकं योगभूमीनां नमामि धरणीधरम् ।। ६६ ।।

विश्वब्रह्ममयी माया महाबुद्धिरिति स्मृता ।
अस्या अपि मोहदात्री सिद्धिर्मायामयी परा ।। ६७ ।।

ताभ्यां खेलति यो देवस्तं सिद्धिबुद्धिपं भजे ।
सर्वब्रह्मपतिं देवं भजेऽहं ब्रह्मणस्पतिम् ।। ६८ ।।

विघ्नप्रदमभक्तानां भक्तानां विघ्नहारकम् ।
भुक्तिमुक्तिप्रदं देवं विघ्नेशं प्रणतोऽस्म्यहम् ।। ६९ ।।

अमङ्गलमिदं विश्वं विश्वातीतस्तु मङ्गलः ।
मङ्गलस्य पतिं वन्दे माङ्गल्येशं गजाननम् ।। ७० ।।

शुभाशुभे सर्वकार्ये जीवेशैः पूर्वपूजितम् ।
यस्मात्पूज्यो नास्ति वेदे सर्वपूज्यं नमाम्यहम् ।। ७१ ।।

नामरूपार्थसत्ताभिः परब्रह्मप्रबोधकम् ।
गणेशहृदयं चैतद् गोपनीयं विशेषतः ।। ७२ ।।

गणकेन पुरा मह्यं कथितं गणपाज्ञया ।
इदं हृदयमज्ञात्वा यो भजेद् ब्रह्मणस्पतिम् ।। ७३ ।।

न च सिद्धिमवाप्नोति मूढो जन्मशतैरपि ।
एकाक्षरो यथा मन्त्रो मन्त्राणामुत्तमोत्तमः ।। ७४ ।।

तथेदं हृदयं प्रोक्तं दुर्लभं मुक्तिदायकम् ।
सर्वशत्रुक्षयकरं सर्वव्याधिनिवारणम् ।। ७५ ।।

सर्ववश्यकरं नृणां महापातकनाशनम् ।
संसारदुःखशमनं मोक्षसाम्राज्यदायकम् ।। ७६ ।।

हृदयं भावनापूर्वं प्रातᳲकाले विशेषतः ।
पठितव्यं जपान्ते वै एकार्णजपतत्परैः ।
गच्छेत्स्वानन्दभवनं देहान्ते ब्रह्मभूयकम् ।। ७७ ।।

इत्येकार्णहृदयनिरूपणम्

## षोडशावरणस्तवकथनम्

नारदादय ऊचुः—

एकाक्षरगणेशस्य स्वानन्देशस्य ब्रह्मणः ।
षोडशावरणस्तोत्रं कृपया वद भास्कर! ।। ७८ ।।

सूर्य उवाच–

सप्तावरणकं स्तोत्रं गणकेन प्रकीर्तितम् ।
उपदिष्टं पराशक्त्यै महेशेन तदेव हि ।। ७९ ।।

तदहं वः प्रवक्ष्यामि यूयं शृणुत सादरम् ।
एकार्णमन्त्रवत्सर्वं ध्यानान्तं परिकीर्तितम् ।। ८० ।।

शिव उवाच–

अनेककोटिब्रह्माण्डाधारभूतं स्थलं परम् ।
कारणब्रह्मलोकं तं पञ्चधा कथितं बुधैः ।। ८१ ।।

नैजस्य द्वारभूतं तं महोरूपं नमाम्यहम् ।
अनेकादित्यसंकाशां ब्रह्माण्डग्राहसाहसाम् ।। ८२ ।।

प्रसारितमुखीं भीमां त्वम्पदब्रह्मरूपिणीम् ।
मेघनादध्वनियुतां शक्तिं भ्रामरिकां भजे ।। ८३ ।।

तत्पदां भ्रामरीमूर्ध्वस्थितामतिभयङ्कराम् ।
करालकेशीं लम्बोष्ठीं दीर्घजिह्वां प्रभायुताम् ।। ८४ ।।

आधारशक्तिं संविष्टां योजनायुतविस्तृताम् ।
वज्रादिनिष्ठुरतरदेहयुक्तां भजाम्यहम् ।। ८५ ।।

आधारशक्तिमूर्ध्निस्थामसिरूपां तु कामदाम् ।
विकरालं जटाभारं बिभ्रतीं वदनं तथा ।। ८६ ।।

सहस्रसूर्यसंकाशां भासयन्तीं दिशो दश ।
विस्तीर्णं दशसाहस्रयोजनं तावदायतम् ।। ८७ ।।

कोटिसूर्यनिभं यस्यामूर्ध्वपीठं महत्तरम् ।
चामीकरनिभां तां तु भजेऽहं कामदायिनीम् ।। ८८ ।।

स्वानन्दभवनं रम्यमिक्षुसागरमध्यगम् ।
सच्चिदानन्दरूपाढ्यं कोटिसूर्यनिभं शुभम् ।। ८९ ।।

रत्नकाञ्चनसंभिन्ना भान्ति यत्र गृहाः परे ।
मुक्ताप्रवालसूर्याश्मनिर्मिताश्च सहस्रशः ।। ९० ।।

नीलाश्मकुट्टिमा यत्र पुमांसो यत्र वह्निभाः ।
यत्र वापीकूपतटागा भान्ति च सरांसि च ।। ९१ ।।

इक्षुसारसुशीताम्बुयुक्तानि गणपाज्ञया ।
आक्रीडा विमला नानावृक्षवल्लीविराजिताः ।। ९२ ।।

दिव्यौषध्यो दिवा सूर्यकोटिभा यान्ति यत्र च ।
चन्द्रपृष्ठे प्रपश्यन्ति कलङ्करहिते मुखम् ।। ९३ ।।

विलासिनीजना यत्र सर्वदा योगतो निशि ।
यत्र पुष्पवनामोदः श्रमं हन्ति विहारिणाम् ।। ९४ ।।

इक्षुसागरमध्यस्थं स्वसंवेद्यस्वरूपकम् ।
स्वयंज्योतिस्वरूपं तं स्वानन्दभवनं भजे ।। ९५ ।।

वर्तुलाकाररूपं तमेकार्णयन्त्ररूपकम् ।
चिन्तामणिमयं नैजं महोरूपं भजाम्यहम् ।। ९६ ।।

निजालोके महोरूपे वरं ज्योतिस्वरूपके ।
स्वानन्दपट्टणं रम्यं भावये स्वस्वरूपकम् ।। ९७ ।।

मन्दारकल्पवृक्षादिशोभितं दिव्यगन्धिकम् ।
आरामं पुरमध्यस्थं भावये ब्रह्मणस्पतेः ।। ९८ ।।

तस्य मध्ये गणेशस्य स्थानं चातिमनोहरम् ।
बिन्दुरूपं महोरूपं गुणनिर्गुणवर्जितम् ।। ९९ ।।

गुणनिर्गुणसंयुक्तं स्वस्वरूपमहं भजे ।
मूलस्थाने तु तन्मध्ये चिन्तामणिविनिर्मिते ।। १०० ।।

सहस्रस्तम्भयुक्तं भावये रत्नपट्टकम् ।
तत्र सिंहासने श्रेष्ठे पीठे चैकार्णरूपके ।। १०१ ।।

पद्ममध्ये कर्णिकायां तीव्रादिशक्तिभिर्धृते ।
संयोगस्वानन्दसंज्ञं परंज्योतिरहं भजे ।। १०२ ।।

तीव्रां च ज्वालिनीं नन्दां भोगदां कामरूपिणीम् ।
उग्रां तेजोवतीं सन्ध्यां मध्ये विघ्नविनाशिनीम्।।१०३।।

किंजल्ककर्णिकासीनास्सर्वाश्शोणांगवाससः ।
देवीर्वराभयकराः पीठशक्तीर्नमाम्यहम् ।। १०४ ।।

तज्ज्योतिषो मध्यभागे सुखासीनं शुचिस्मितम् ।
जपाकुसुमसंकाशं शुण्डादण्डविराजितम् ।। १०५ ।।

कुटिलालकशोभाढ्यं सोमसूर्याग्निलोचनम् ।
फालचन्द्रं शूर्पकर्णं दन्तद्वयविराजितम् ।। १०६ ।।

स्तबकाकारकुम्भाग्रं लम्बोष्ठं लम्बनासिकम् ।
ह्रस्वनेत्रत्रयं लम्बकर्णं निबिडमस्तकम् ।। १०७ ।।

कम्बुकण्ठं बृहद्बाहुं तुन्दिलं पीनवक्षसम् ।
निम्ननाभिं चतुर्बाहुं स्थूलोरुं प्रोल्लसत्कटिम् ।। १०८ ।।

श्लिष्टजानुं पीनजङ्घं पद्मपादद्वयान्वितम् ।
उन्नतप्रपदं गूढगुल्फं संवृतपार्ष्णिकम् ।। १०९ ।।

रक्तवस्त्रधरं पीतरक्तवस्त्रोत्तरीयकम् ।
हेमतन्तुसमुद्भूतब्रह्मसूत्रत्रयान्वितम् ।। ११० ।।

भानुकोटिप्रतीकाशरत्नमौलिविराजितम् ।
रत्नकुण्डलशोभाढ्यं फालपट्टविराजितम् ॥ १११ ॥
चिन्तामणिरत्नमयकेयूरकटकान्वितम् ।
चिन्तामणिसुरचितराजमुद्राङ्गुलीयकम् ॥ ११२ ॥
चिन्तामणिकण्ठभूषं रत्नहारसमन्वितम् ।
चिन्तामण्यग्रसंयुक्तकटिसूत्रविराजितम् ॥ ११३ ॥
शिञ्जानमणिमञ्जीररत्नपादुकसंयुतम् ।
दूर्वाशम्यर्कमन्दारकुसुमैस्सुविराजितम् ॥ ११४ ॥
सर्वाभरणशोभाढ्यं सुगन्धतिलकोज्वलम् ।
रक्तगन्धविलिप्ताङ्गं रक्तमन्दारमालिकम् ॥ ११५ ॥
पुष्करे रत्नकलशं नानारत्नप्रपूरितम् ।
पङ्कजं परशुं पाशमंकुशं धारकं करैः ॥ ११६ ॥
स्मितवक्त्रं सुन्दराङ्गं मृदुमञ्जुलभाषिणम् ।
महासिद्धिमहाबुद्धिशोभिपार्श्वद्वयान्वितम् ॥ ११७ ॥
श्वेतातपत्ररुचिरं श्वेतचामरवीजितम् ।
एकाक्षरमन्त्रदेवं स्वानन्देशमहं भजे ॥ ११८ ॥
चतुर्णामपि मूर्तीनां स्वानन्देशस्य ब्रह्मणः ।
स्थानस्यास्य चतुर्दिक्षु बिन्द्वन्तस्संस्थितानि च ॥११९॥
गृहाणि भावये भक्त्या सर्वदा प्रथमावृतौ ।
चिन्तामण्यादिरत्नैश्च निर्मिते दिव्यवेश्मनि ॥ १२० ॥
ईशानदिग्भागसंस्थे वाप्यारामसुशोभिते ।
तन्मध्ये पद्मिनी श्वेतसहस्रदलपद्मयुक् ॥ १२१ ॥

सहस्रकिरणप्रख्यं तस्यां यत् पद्ममुत्तमम् ।
तन्मध्ये तस्य देवस्य पर्यङ्कं सुमनोहरम् ॥ १२२ ॥

दिव्यास्तरणसंपन्नं दिव्यधूपैस्सुधूपितम् ।
दिव्यपुष्पगन्धयुतं चामरैर्वीजितं भजे ॥ १२३ ॥

सृष्टयादिक्रीडारहितं योगरूपं गणेश्वरम् ।
योगनिद्रां प्रकुर्वाणं नानालंकारशोभितम् ॥ १२४ ॥

कोटिचन्द्रनिभं नागभूषणं सोमभूषणम् ।
रम्भास्तम्भनिभं शुण्डादण्डं रदनसुन्दरम् ॥ १२५ ॥

दिव्याम्बरं फालनेत्रं किरीटकटकान्वितम् ।
चिन्तामणिभूषिताङ्गं दिव्यमालाविभूषितम् ॥ १२६ ॥

दिव्यगन्धानुलिप्ताङ्गं भावयेऽहं गणेश्वरम् ।
सिद्धिबुद्धी सिद्धिहेतू पादौ संवहतो भजे ॥ १२७ ॥

आग्नेय्यां तु गणक्रीडास्थानं चातिमनोहरम् ।
चिन्तामण्यादिरत्नैश्च निर्मितं भावयाम्यहम् ॥ १२८ ॥

तत्र सिंहासने संस्थं सिद्धिबुद्धिसमन्वितम् ।
रक्तवर्णं गजमुखं त्रिनेत्रं सोमभूषणम् ॥ १२९ ॥

सर्वाभरणशोभाढ्यं कस्तूरीतिलकोज्ज्वलम् ।
चिन्तामणिधरं कण्ठे रक्तवस्त्रविराजितम् ॥ १३० ॥

पुष्करे कलशं पाशं परशुं पङ्कजं सृणिम् ।
वहन्तं वेदहस्तैश्च स्वानन्दमयविग्रहम् ॥ १३१ ॥

स्वस्वानन्दमयं ध्याये ब्रह्मभूयपदप्रदम् ।
नैर्ऋत्यां गणनाथस्य स्थानं चातिमनोहरम् ॥ १३२ ॥

चिन्तामण्यादिरत्नैश्च निर्मितं ज्ञानरूपकम् ।
नानालङ्कारसंयुक्तं भावये गृहमुत्तमम् ।। १३३ ।।
तत्र सिह्मासने श्रेष्ठे पद्मे तीव्रादिसंधृते ।
भद्रासने सन्निषण्णं सिन्दूरारुणविग्रहम् ।। १३४ ।।
गजाननं फालचन्द्रं भग्नवामरदं विभुम् ।
दिव्यपीताम्बरधरं सोमसूर्याग्निलोचनम् ।। १३५ ।।
चिन्तामणिं कण्ठदेशे धारकं भूषणोज्वलम् ।
अभीतिमंकुशं पाशं धारकं च विषाणकम् ।। १३६ ।।
संश्लिष्टं सिद्धिबुद्धिभ्यां स्वाङ्कगाभ्यां सदा मुदा ।
स्वात्मानुसन्धानसुखे संस्थितं ज्ञानविग्रहम् ।। १३७ ।।
ज्ञानयोगप्रदं ध्याये केवलं निर्गुणात्मकम् ।
गणाधिपस्य वेश्मादि रम्यं वायुदिशि स्थितम् ।।१३८।।
चिन्तामण्यादिरत्नैश्च निर्मितं कामदायकम् ।
तत्र सिह्मासने पद्मे तीव्रादिशक्तिसन्धृते ।। १३९ ।।
वीरासने सन्निषण्णं गजवक्त्रं त्रिलोचनम् ।
फालचन्द्रं कम्बुकण्ठं तुन्दिलं पीनवक्षसम् ।। १४० ।।
रक्तं रक्ताम्बरधरं रक्तपुष्पैस्सुपूजितम् ।
रक्तगन्धानुलिप्ताङ्गं सुगन्धतिलकोज्वलम् ।। १४१ ।।
भग्नदक्षिणदन्ताढ्यं सर्वभूषणभूषितम् ।
पाशांकुशवररदशोभिचारुचतुर्भुजम् ।। १४२ ।।
उपविष्टसिद्धिबुद्धिशोभिपार्श्वद्वयान्वितम् ।
युवराणमन्त्रिसेनेशगणकाद्यैः परिवृतम् ।। १४३ ।।

चिन्तामणिलसत्कण्ठं चिन्तितार्थप्रदायकम् ।
बिन्दुप्रणवदेहाढ्यं चतुर्विधजगन्मयम् ।। १४४ ।।

जगज्जीवेशजनकं भावयेऽहं गणाधिपम् ।
देवस्य सन्निधौ संस्थे सुरेन्द्रनीलनिर्मिते ।। १४५ ।।

दिव्यगेहे गणेशाभिमुखेनैव सुसंस्थितम् ।
नीलपर्वतसंकाशं मूषकाकृतिधारकम् ।। १४६ ।।

चतुर्ब्रह्ममयं देवं सर्वान्तर्यामिणं विभुम् ।
चौर्येण देहिभोगानां भोक्तारं परमेश्वरम् ।। १४७ ।।

पादकण्ठपृष्ठभागलाङ्गूलादिषु भूषितम् ।
मयूरानन्तसिह्माश्वगजाखुवृषहंसकैः ।। १४८ ।।

विमानरथपक्षीशवाहनाद्यैस्समावृतम् ।
मूषकेशमहं ध्याये वाहनं ब्रह्मणस्पतेः ।। १४९ ।।

द्वितीयावरणे पूर्वदिशि रत्नगृहे वरे ।
सिह्मासने सन्निषण्णं वक्रतुण्डं गजाननम् ।। १५० ।।

फालचन्द्रं त्रिनयनं भग्नदक्षिणदन्तकम् ।
पाशांकुशवररदान् बिभ्राणं मोदकं करैः ।। १५१ ।।

रक्तवस्त्रधरं रक्तगन्धपुष्पसुशोभितम् ।
बिन्दुब्रह्मगतं सिद्धिबुद्धिभ्यां शोभिपार्श्वकम् ।। १५२ ।।

सृष्ट्यादिक्रीडानिरतं वक्रतुण्डमहं भजे ।
आग्नेय्यां संस्थिते गेहे बहुशोभाविराजिते ।। १५३ ।।

दिव्यपीठे सन्निषण्णं दिव्याभरणभूषितम् ।
दिव्यवस्त्रधरं दिव्यगन्धसिन्दूरधारकम् ।। १५४ ।।

सिन्दूरसन्निभं श्लिष्टं शक्तिभ्यां सर्वदा मुदा ।
भग्नवामरदं पाशसृणिदन्ताभयान् फलम् ।। १५५ ।।

बिभ्राणं चित्रलीलाढ्यमेकदन्तमहं भजे ।
दक्षिणे संस्थिते गेहे नानारत्नविनिर्मिते ।। १५६ ।।

सुखासने सन्निषण्णं सिद्धिबुद्धिसमन्वितम् ।
चन्द्रचूडं त्रिनयनमेकदन्तं महोदरम् ।। १५७ ।।

चतुर्भुजं मोहहरं वेदगानप्रियं सदा ।
वेरं रूपमहं ध्याये गणेशानं महोदरम् ।। १५८ ।।

नैर्ऋतौ संस्थिते रत्नगेहे पीठे सुसंस्थितम् ।
गजाननं चतुर्बाहुं त्रिनेत्रं सोमभूषणम् ।। १५९ ।।

दिव्याम्बरधरं दिव्यभूषणैरुपशोभितम् ।
दिव्यगन्धानुलिप्ताङ्गं कस्तूरीतिलकोज्वलम् ।। १६० ।।

पाशांकुशवराभीतिशोभिचारुभुजान्वितम् ।
आज्ञामुद्रां दधानं तं मन्त्रिसेनेशपूर्वगैः ।। १६१ ।।

सेवितं साक्षिभावाढ्यं सर्वाज्ञाकारकं विभुम् ।
परतोत्थानधर्माढ्यं सांख्यब्रह्मस्वरूपकम् ।। १६२ ।।

गजाननमहं ध्याये सिद्धिबुद्धिसमन्वितम् ।
पश्चिमे दिव्यगेहे तु चिन्तामणिविनिर्मिते ।। १६३ ।।

रत्नमञ्चे सुखासीनं विलासनिरतं सदा ।
सिद्धिबुद्धियुतं शाक्तब्रह्मस्थं मोदकप्रियम् ।। १६४ ।।

जगद्रूपमयं भक्ष्यं भक्षकं रक्षणाय च ।
लम्बोदरमहं ध्याये गजवक्त्रं चतुर्भुजम् ।। १६५ ।।

वायव्यां संस्थिते स्थाने सिद्धिबुद्धिसमन्वितम् ।
दिव्यवस्त्रपरीधानं दिव्यभूषाविराजितम् ।। १६६ ।।

मायासङ्गविरहितं शक्तिभ्यां केलिकारकम् ।
सौरब्रह्मस्थितं ध्याये विकटं बीजवक्त्रकम् ।। १६७ ।।

कौबेर्यां दिव्यगेहस्थे सहस्रदलपङ्कजे ।
शयानं सिद्धिबुद्धिभ्यां स्वोदरे स्थाप्य विष्टपम्।।१६८।।

प्रबुद्धच विश्वमखिलं सृजन्तं पालकं पुनः ।
सम्भब्रह्मस्थितं ध्याये विघ्नराजं गजाननम् ।। १६९ ।।

ऐशान्यां दिव्यगेहे तु सहस्रस्तम्भराजिते ।
साक्षिभावतया स्थित्वा दृष्ट्वा विश्वं चराचरम्।।१७०

अहङ्कारं तु संहृत्य जगतां ब्रह्मणामपि ।
आत्मानन्देन नृत्यन्तं सहस्रब्रह्मसंस्थितम् ।। १७१ ।।

धूम्रवर्णमहं ध्याये गजवक्त्रं चतुर्भुजम् ।
विनायकविरूपाक्षक्रूरकर्मापराजितान् ।। १७२ ।।

गजग्रीवचण्डवेगक्रूरचण्डपराक्रमान् ।
विनायकान् मित्रभावं संप्राप्तान् ब्रह्मणस्पतेः ।।१७३।।

तृतीयावरणे संस्थान् भावये दिव्यरूपिणः ।
आवृतित्रयसंयुक्तं नानाभृत्यगणान्वितम् ।। १७४ ।।

पञ्चायुधदेववरैर्दिव्यमूर्तिसमन्वितैः ।
शोभितं द्वारपालाभ्यां स्वानन्दपट्टणं भजे ।। १७५ ।।

स्वानन्दपत्तनस्यैव वामे सिद्धिपुरं वरम् ।
चिन्तामणिरत्नवरैर्निर्मितं भावयाम्यहम् ।। १७६ ।।

तत्र चिन्तामणिगृहे चिन्तामणिविनिर्मिते ।
सिह्मासने पद्ममध्ये सुखासीनां शुचिस्मिताम् ॥१७७॥

तप्तकाञ्चनसंकाशां त्रिनेत्रां चन्द्रभूषणाम् ।
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचाम् ॥ १७८ ॥

कस्तूरीतिलकोद्भासिनिटिलां पद्मलोचनाम् ।
कन्दर्पचापसंकाशभ्रूलतापरिशोभिताम् ॥ १७९ ॥

चिन्तामणिविरचितताटङ्कयुगलान्विताम् ।
मणिदर्पणसंकाशकपोलां काङ्क्षितार्थदाम् ॥ १८० ॥

शरच्चाम्पेयपुष्पाभनासिकां दिव्यगन्धिकाम् ।
चिन्तामणिविरचितनासाभरणभासुराम् ॥ १८१ ॥

ताम्बूलपूरितस्मेरवदनां मृदुभाषिणीम् ।
सुपक्वदाडिमीबीजरदनां चारुहासिनीम् ॥ १८२ ॥

नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदाम् ।
कम्बुवृत्तसमच्छायकन्धरां नादरूपिणीम् ॥ १८३ ॥

गणेशबद्धमांगल्यसूत्रशोभितकन्धराम् ।
सुवर्णकुम्भयुग्माभकुचां विघ्नेशमोहिनीम् ॥ १८४ ॥

पद्मद्वयवराभीतिशोभिचारुचतुर्भुजाम् ।
हेमतन्तुसमुद्भूतवस्त्राढ्यां श्यामकञ्चुकाम् ॥ १८५ ॥

वज्रमाणिक्यमकुटकटकादिविभूषिताम् ।
चिन्तामणिसुशोभाढ्यराजमुद्राङ्गुलीयकाम् ॥ १८६ ॥

चिन्तामणिकण्ठभूषां रत्नकल्हारमालिकाम् ।
बृहन्नितम्बविलसज्जघनां रत्नमेखलाम् ॥ १८७ ॥

सुवर्णरत्नरचितमुक्तारत्नोड्डियाणकाम् ।
सौभाग्यजातशृङ्गारमध्यमां सृष्टिकारिणीम् ।।१८८ ।।

गणेशज्ञातसौभाग्यमार्दवोरुद्वयान्विताम् ।
सुमुक्तामकुटाकारजानुद्वयविराजिताम् ।। १८९ ।।

इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकाम् ।
गूढगुल्फां कूर्मपृष्ठजयिष्णुप्रपदान्विताम् ।। १९० ।।

सुपद्मरागसंकाशचरणां चिन्तितार्थदाम् ।
नखदीधितिसञ्छन्ननमज्जनतमोगुणाम् ।। १९१ ।।

पदद्वयप्रभाजालपराकृतसरोरुहाम् ।
शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजाम् ।। १९२ ।।

श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिकाम् ।
मरालीं मन्दगमनां महालावण्यशेवधिम् ।। १९३ ।।

ब्रह्मभूयसिद्धिपीठसंस्थितां मञ्जुभाषिणीम् ।
भक्तरक्षणदाक्षिण्यकटाक्षां करुणायुताम् ।। १९४ ।।

गणेशालिङ्गनोद्भूतपुलकाङ्गीपुरातनाम् ।
सिद्धिभिश्शक्तिभिर्लक्ष्मीयोगिनीभिस्सुसेविताम् ।।१९५।।

श्रींकाररूपिणीं ध्याये भक्तहर्षप्रदायिनीम् ।
महाबुद्धिपुरं रम्यं स्वानन्दपुरदक्षिणे ।। १९६ ।।

चिन्तामणिमयं शोभासंयुतं भावयाम्यहम् ।
चिन्तामणिगृहे मध्ये चिन्तामणिविनिर्मिते ।। १९७ ।।

रत्नसिंहासने पद्मे सन्निषण्णां पराम्बिकाम् ।
कुन्दकर्पूरसंकाशां त्रिनेत्रां चन्द्रशेखराम् ।। १९८ ।।

निजदेहप्रभापूरमज्जत्स्वानन्दपट्टणाम् ।
पद्मचंपकपुन्नागसौगन्धिकलसत्कचाम् ॥ १९९ ॥
चिन्तामणिसुविलसद्धेमकोटीरमण्डिताम् ।
अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिताम् ॥ २०० ॥
मुखचन्द्रकलङ्काभमृगनाभिविशेषकाम् ।
वदनस्मरमाङ्गल्यगृहतोरणझिल्लिकाम् ॥ २०१ ॥
वक्त्रलक्ष्मी परीवाहचलन्मीनाभलोचनाम् ।
नवचम्पकपुष्पाभनासादण्डविराजिताम् ॥ २०२ ॥
ताराकान्तितिरस्कारिनासाभरणभासुराम् ।
कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहराम् ॥ २०३ ॥
ताटङ्कयुगलीभूततपनोडुपमण्डलाम् ।
चिन्तामणिशिलादर्शपरिभाविकपोलकाम् ॥ २०४ ॥
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदाम् ।
दिव्यकुन्दाङ्कुराकारदन्तपङ्क्तिद्वयोज्वलाम् ॥२०५॥
ताम्बूलपूरितस्मेरवदनां मञ्जुभाषिणीम् ।
मन्दस्मितप्रभापूरमज्जद्धेरम्बमानसाम् ॥ २०६ ॥
अनाकलितसादृश्यचुबुकश्रीविराजिताम् ।
कम्बुवृत्तसमच्छायकन्धरां करुणायुताम् ॥ २०७ ॥
गणेशबद्धमाङ्गल्यतन्तुशोभितकन्धराम् ।
रत्नग्रैवेयकेयूरकटकादिविभूषिताम् ॥ २०८ ॥
विघ्नेश्वरप्रेमरत्नमणिप्रतिपणस्तनीम् ।
नाभ्यालवालरोमालिलताफलकुचद्वयाम् ॥ २०९ ॥

लक्ष्यलोमलताधारतासमुन्नेयमध्यमाम् ।
स्तनभारनमन्मध्यपट्टबन्धवलित्रयाम् ॥ २१० ॥

कनकाग्रयुतश्वेतवस्त्रभास्वत्कटीतटीम् ।
समुत्तुङ्गपीनकुचां सुपीतवस्त्रकञ्चुकाम् ॥ २११ ॥

सहस्रदलसंयुक्तपद्मपुस्तकधारिणीम् ।
वरदाभयहस्ताब्जां वीणागानरतां मतिम् ॥ २१२ ॥

चिन्तामणिसुविलसद्राज्ञीमुद्राप्रधारिणीम् ।
चिन्तामणिकण्ठभूषां रत्नहारसमन्विताम् ॥ २१३ ॥

नवरत्नसुसंयुक्तहेमचम्बकमालिकाम् ।
विघ्नेशज्ञातसौभाग्यमार्दवोरुद्वयान्विताम् ॥ २१४ ॥

सुवज्रमकुटाकारजानुद्वयविराजिताम् ।
मुक्ताफलपरिक्षिप्तस्मरतूणाभजङ्घिकाम् ॥ २१५ ॥

गूढगुल्फां कूर्मपृष्ठजयिष्णुप्रपदान्विताम् ।
नखदीधितिसञ्छन्ननमज्जनतमोगुणाम् ॥ २१६ ॥

पदद्वयप्रभाजालपराकृतसरोरुहाम् ।
शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजाम् ॥ २१७ ॥

श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिकाम् ।
मरालीमन्दगमनां महालावण्यशेवधिम् ॥ २१८ ॥

ब्रह्मविद्यां पीठसंस्थां स्मितास्यां मञ्जुभाषिणीम् ।
हैयङ्गवीनहृदयां करुणापूरितेक्षणाम् ॥ २१९ ॥

विघ्नेशालिङ्गनोद्भूतपुलकाङ्गीं परात्पराम् ।
सरस्वतीकलाविद्याबुद्धिभिः परिवारिताम् ॥ २२० ॥

ओंकाररूपिणीं ध्याये भक्ताभीष्टप्रदायिनीम् ।
पूर्वभागे गणेशस्य पुरं चातिमनोहरम् ।। २२१ ।।

चिन्तामणिरत्नमयं भावये सर्वमोहदम् ।
चिन्तामणिगृहे मध्ये दिव्यसिह्मासने वरे ।। २२२ ।।

सन्निविष्टं गुणेशानं गणेशतनयं विभुम् ।
सर्वालङ्कारशोभाढ्यं हेमवर्णं चतुर्भुजम् ।। २२३ ।।

युवराजपदे संस्थं सर्वदा भावये मुदा ।
श्यामवर्णं मन्त्रिपदे संस्थितं भावयाम्यहम् ।। २२४ ।।

लाभं बालरूपधरं सिद्धिपुत्रमहं भजे ।
पश्चिमे गणकस्यैव पुरश्चातिमनोहरम् ।। २२५ ।।

सेनापतिं रक्तवर्णं वसुबाहुविराजितम् ।
चतुर्भुजं तं गणकं गुरूणां गुरुमव्ययम् ।। २२६ ।।

श्वेतवर्णं बालरूपधरं बुद्धिसुतं वरम् ।
लक्षसंज्ञं सदा भक्त्या भावये परया मुदा ।। २२७ ।।

एवं पञ्चपुराण्येव यन्त्रे प्रोक्तानि वर्तुले ।
त्रिकोणेषु चेशकोणे संस्थितान् दिव्यवेश्मसु ।। २२८ ।।

ब्रह्मप्रियश्च स्वानन्दभोक्तारं सर्वगं तथा ।
ज्ञानरूपं सर्वविदं तथा योगप्रियं वरम् ।। २२९ ।।

सगणान् शक्तिसंयुक्तान् किंकरान् भावयाम्यहम् ।
आग्नेये दिव्यकोणे तु ग्रहेषु शोभनेषु च ।। २३० ।।

अतिकालं महाकालं कालं विघ्नगणान्वितान् ।
चतुर्विधेषु विश्वेषु भजे व्याप्य सुसंस्थितान् ।। २३१ ।।

तथा पश्चिमकोणे तु नानामोहप्रदेषु च ।
वैनायकीं मयूरां च विद्यां च स्वस्वरूपिणीम् ॥२३२॥

अविद्यामपि बौद्धिं च महामायां भजाम्यहम् ।
त्रिकोणस्य बहिर्भागे मलजं गजसंभवम् ॥ २३३ ॥

पुष्टीशं नागरिकेशपदगान् भावयाम्यहम् ।
षट्कोणेषु स्थितान् मोदप्रमोदसुमुखदुर्मुखान् ॥ २३४ ॥

अविघ्नविघ्नकर्तॄंश्च सगणान् शक्तिसंयुतान् ।
स्वानन्देशगणेशस्य भावये दूतसत्तमान् ॥ २३५ ॥

षट्कोणसन्धिभागेषु संस्थिताश्चाङ्गदेवताः ।
सर्वज्ञादिमहासिद्धीर्भावये सर्वदा मुदा ॥ २३६ ॥

सुप्रभूतं सुवक्त्रं च वामनं शंखपालकम् ।
उग्रं कुम्भोदरं चैव गिरिदण्डं च भैरवम् ॥ २३७ ॥

पद्माष्टदलकेष्वेव संस्थितान् मन्त्रिणो भजे ।
वरदं चापि वीरं च लम्बोष्ठं हस्तिवक्त्रकम् ॥ २३८ ॥

विनायकं चैकदन्तं तुन्दिलं गणनायकम् ।
विघ्नेशं गजकर्णं च भक्षप्रियमहोदरौ ॥ २३९ ॥

शूरं चैव महाशूरौ तथा क्षिप्रप्रसादनम् ।
विकटं षोडशारेषु संस्थितान् सैनिकान् भजे ॥ २४० ॥

संस्थितान् प्रथमे वृत्ते शक्तिकान् गणकान् प्रभोः ।
पञ्चाशद्वर्णदेवांश्च भजे शक्तिसमन्वितान् ॥ २४१ ॥

शस्त्रदेवान् द्वितीये तु संस्थितान् भावयाम्यहम् ।
तथा तृतीयवृत्ते तु स्थितानस्त्रानहं भजे ॥ २४२ ॥

प्रथमे भूपुरे संस्थान् लाभलक्षं च क्रूरकम् ।
बौद्धिं च गणनाथस्य भजे सालसुरक्षकान् ।। २४३ ।।

ब्रह्माणं शंकरं विष्णुं सूर्यं च गजवक्त्रकान् ।
द्वितीयभूपुरे संस्थान् भजामि सालरक्षकान् ।। २४४ ।।

शूरं चैव महाशूरं बलं च प्रबलं तथा ।
वीरं चैव महावीरं जयं च विजयं तथा ।। २४५ ।।

तृतीयभूपुरद्वारि संस्थान् द्वारपतीन् भजे ।
इदमावरणस्तोत्रं गणेशस्य परात्मनः ।। २४६ ।।

संपूज्य गणपं भक्त्या यः पठेद्भावपूर्वकम् ।
संप्राप्य सकलान् भोगानन्ते ब्रह्मपदं व्रजेत् ।। २४७ ।।

एकार्णगणनाथस्य षोडशावरणस्तवम् ।
प्रातर्मध्यंदिने सायं षट्कालेष्वथवा क्रमात् ।। २४८ ।।

यः पठेद् गाणपो भक्त्या पुरुषार्थचतुष्टयम् ।
लब्ध्वा क्रमेण गाणेशं नैजं धाम लभेद् ध्रुवम् ।।२४९।।

इति षोडशावरणस्तवकथनम्

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये द्वादशोऽध्यायः

## त्रयोदशोऽध्यायः

### त्रिशतीनामस्तोत्रनिरूपणम्

नारदादय ऊचुः—

एकार्णगणनाथस्य त्रिशतीं वद भास्कर ! ।

सूर्य उवाच—

एकार्णमन्त्रवत्सर्वं ऋष्यादिकमुदीरितम् ।
छन्दोऽनुष्टुप् कीर्तितं च स्वानन्देशस्तु देवता ॥ १ ॥

गणेश्वरो गणक्रीडो गणनाथो गणाधिपः ।
गजाननो गणपतिर्नित्यानित्यो निरामयः ॥ २ ॥

निर्मलो निष्कलो नित्यो नादमध्ये प्रतिष्ठितः ।
निधिर्निधिप्रियपतिर्नादातीतो निधिप्रदः ॥ ३ ॥

नदीनदभुजो नादजनको विघ्ननायकः ।
विनायको विरूपाक्षो वरदो विश्वपालकः ॥ ४ ॥

विघ्नकृद्विघ्नचरणो गजदन्तो गजध्वनिः ।
गणराजो गजश्रीदो गणपूज्यो गणेष्टदः ॥ ५ ॥

नागाननो निम्ननाभिर्नित्यानन्दो निरङ्कुशः ।
नलिनीकामुको नित्यं नित्यानित्यावतंसितः ॥ ६ ॥

पूर्णानन्दः परं धाम परमात्मा परात्परः ।
परं पदं पशुपतिस्तत्त्वंपदनिरूपितः ॥ ७ ॥

तत्त्वानां परमं तत्त्वं तारकस्तारकान्तकः ।
तारकान्तरसंस्थानस्तारकान्तकपूर्वजः ॥ ८ ॥

हिरण्मयपुरान्तस्थो हृदयालाननिश्चलः ।
हृत्पद्मकर्णिकाशाय्यर्ककेलिसरोवरः ॥ ९ ॥

हेरम्बो हवनो हव्यो विधाता विश्वतोमुखः ।
विकर्ता विश्वतश्चक्षुर्वन्द्यो वेदान्तगोचरः ॥ १० ॥

मदोत्कटो मयूरेशो मोहिनीशो महाबलः ।
महागणपतिर्मेघनादो हृत्पद्मसंस्थितः ॥ ११ ॥

हंसो हस्तिपिशाचीशो हृल्लेखामन्त्रमध्यगः ।
हर्षो हव्यकव्यभुक्च कपर्दी कलभाननः ॥ १२ ॥

कर्मसाक्षी कर्मकर्ता कल्पः कर्माग्रपूजितः ।
वक्रतुण्डो विघ्नराजो विद्यादो विजयस्स्थिरः ॥ १३ ॥

विश्वकर्ता विश्वमुखो कामदाता कटङ्कटः ।
कल्पकः कुमारगुरुः किरीटिकुलपालनः ॥ १४ ॥

वैमुख्यहतदैत्यश्रीर्वराहरदनो वशी ।
वागीश्वरीपतिर्वाचासिद्धो वायुसुकीलकः ॥ १५ ॥

नन्दिप्रियो नगसुतानन्दनो निजसंस्थितः ।
नष्टद्रव्यप्रदो नादो नारायणसुपूजितः ॥ १६ ॥

उच्छिष्टगण उच्छिष्टः उच्छिष्टगणनायकः ।
उपेन्द्र उडुभृन्मालिरुदारस्त्रिदशाग्रणीः ॥ १७ ॥

पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः ।
प्रत्यूहाज्ञानविज्ञानः प्रत्यूहहिमहव्यभुक् ॥ १८ ॥

प्रत्यूहाम्भोधिकालाग्निः प्रत्यूहगरलामृतः ।
मृत्युञ्जयो मुक्तिदाता महानादो मदोत्कटः ॥ १९ ॥

मदनावत्याश्रितांघ्रिर्मुद्गरायुधधारकः ।
शाकलश्शम्भुतनयः शक्तिजश्शम्भुहास्यभूः ॥ २० ॥

शिवासुखावहश्शम्भुतेजोभूश्शम्भुकोपहा ।
वाणीजिह्वो व्योमनाभिः वाग्मी वासवनासिका ॥

वैनायकसहचरो विधृतालिसमूहकः ।
स्तवस्स्तुतिपरस्स्तव्यस्स्तुतितुष्टस्स्तुतिप्रियः ॥ २२ ॥

महालक्ष्मीप्रियतमो मातुलिङ्गधरो महान् ।
मदलावत्याश्रिताङ्घ्रिर्महाबुद्धिर्मनोरमः ॥ २३ ॥

मोहिनीमोहनो ज्येष्ठो ज्येष्ठराजो जगन्मयः ।
ज्येष्ठपूजितो ज्येष्ठेशो ज्येष्ठराजपदे स्थितः ॥ २४ ॥

षडक्षरष्षडाधारष्षट्चक्रोपरिसंस्थितः ।
षडृतुकुसुमस्रग्वरः षण्मुखष्षण्मुखाग्रजः ॥ २५ ॥

रौद्रीमुद्रितपादाब्जो रुष्टचित्तप्रसादनः ।
रुद्रप्रियो रुद्रपत्निपुत्रो रुद्रशिरोधरः ॥ २६ ॥

रत्नमण्टपमध्यस्थो जपपूजनतोषितः ।
जप्यो जपो जपपरो जिह्वासिह्मासनप्रभुः ॥ २७ ॥

जितेन्द्रियेष्टसन्दाता ब्रह्मेशो ब्रह्मणस्पतिः ।
ब्रह्माण्डकुम्भो ब्रह्मस्थो ब्रह्मचारी बृहस्पतिः ॥ २८ ॥

हंसो वरो हस्तिपतिः हर्षदो हव्यकव्यभुक् ।
हादिविद्याशक्तिपतिर्हृल्लेखामन्त्रमध्यगः ॥ २९ ॥

नामपारायणप्रीतो नामनिष्ठवरप्रदः ।
नामंदार्चनसन्तुष्टो नागेन्द्रतनयो नटः ॥ ३० ॥

निजानन्दसन्निषण्णो बालकेलिकुतूहली ।
ब्रह्ममूर्द्धा ब्रह्ममुखो ब्रह्माण्डावलिमेखलः ॥ ३१ ॥
बृहदारण्यसंवेद्यो ब्रह्मणां ब्रह्मणस्पतिः ।
मयूरनायको मायापतिर्मूषकवाहनः ॥ ३२ ॥
मन्दारपूजनप्रीतो मन्दारकुसुमप्रियः ।
मन्दारमूलसञ्जातो नागभूषणभूषितः ॥ ३३ ॥
नागहारकटीसूत्रो नागयज्ञोपवीतवान् ।
नागराजयोगदाता नागकन्यासुशान्तिदः ॥ ३४ ॥
नारायणार्चितपदो संयोगानन्दविग्रहः ।
सृष्टिस्थितिलयक्रीडस्सर्वभेषजभेषजम् ॥ ३५ ॥
सिन्दूरितमहाकुम्भस्सामगानरतस्सुखी ।
तत्पदस्तत्पदाराध्यस्तत्पदार्थस्वरूपवान् ॥ ३६ ॥
तत्त्वमस्याकृतिधरस्तत्त्वमस्यर्थविग्रहः ।
तत्त्वमस्यर्थसंवेद्यो ह्यानन्दमूर्तिधारकः ॥ ३७ ॥
आधारपीठ आमोद आश्रिताभीष्टदायकः ।
आदिमध्यान्तरहितः आखुराजमहारथः ॥ ३८ ॥
निजभक्तप्रियतमो नरनारायणार्चितः ।
नारायणश्रीपूर्वाङ्गो नटराजसुपूजितः ॥ ३९ ॥
निरालम्बयोगगम्यो निदिध्यासवरप्रियः ।
श्रींकारशक्तिसंयुक्तः श्रीपतिश्रीनिकेतनः ॥ ४० ॥
श्रींकारविग्रहश्श्रीदश्श्रीसिद्धिबुद्धिविनायकः ।
विराड् विश्वो वेदपतिर्वेदकर्ता विराट्सुतः ॥ ४१ ॥

विराट्पतिरूर्ध्वलोकगत ऊर्ध्वविनायकः ।
ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः ॥ ४२ ॥

ऊनषोडशवर्षाढ्यस्तिर्यग्गतिविनाशकः ।
तिथिमात्रसुसंपूज्यस्स्थतिमात्रवरप्रदः ॥ ४३ ॥

तत्त्वेष्टदस्तत्त्वपतिस्तत्त्वातत्त्वविवेकदः ।
भीमरूपो भूतपतिर्भूपतिर्भुवनेश्वरः ॥ ४४ ॥

भ्रूक्षेपदत्तलक्ष्मीको भूतिदस्सोमभूषणः ।
स्वतन्त्रस्सत्यसंकल्पस्सत्यसंकल्पदायकः ॥ ४५ ॥

स्वसंवेद्यश्च सर्वज्ञो दण्डभृद्दण्डनायकः ।
दक्षयज्ञप्रमथनो दयावान् दैत्यमोहनः ॥ ४६ ॥

दिव्यवैभवसंदाताऽसुरकुञ्जरभेदनः ।
साक्षी समुद्रमथनस्सदसद्व्यक्तिदायकः ॥ ४७ ॥

स्वसंवेद्यासंप्रज्ञातयोगगम्यस्वदक्षिणः ।
दन्तप्रभिन्नाभ्रमालो दैवार्थनृगजाकृतिः ॥ ४८ ॥

दंष्ट्रालग्नद्वीपघटो दैत्यवारणदारणः ।
दुरासदगर्वहरो दिवोदासवरप्रदः ॥ ४९ ॥

नेतिकर्ता नेतिपदो नेतिब्रह्मवरप्रदः ।
नेतिस्वानन्दपददो नेतिशक्तिसमन्वितः ॥ ५० ॥

नेत्यसंप्रज्ञातमययोगलभ्यसुविग्रहः ।
ओंकारशक्तिसहितः ओंकारसुखराजितः ॥ ५१ ॥

ओंकारवाच्य ओंकार ओंकारपूर्णविग्रहः ।
ओंकारमयविश्वात्मा गंकारमन्त्रविग्रहः ॥ ५२ ॥

गंकारजपसन्तुष्टो गंकारभूमरूपवान् ।
गंकारो गंमन्त्रवेद्यो गंब्रह्मस्थितिदायकः ।। ५३ ।।

इदं वैनायकं नाम्नां त्रिशति श्रुतिकीर्तितम् ।
ऋङ्मन्त्रसंभवं वेदसारं गणककीर्तितम् ।। ५४ ।।

इदं ब्राह्मे मुहूर्ते वा जपान्ते देवसन्निधौ ।
प्रातर्मध्यंदिने सायं पूजान्ते वाऽथ यः पठेत् ।। ५५ ।।

धनधान्यं पशून् पुत्रान् रूपं विद्यां बलं श्रियम् ।
आरोग्यं धर्ममर्थं च कामं मोक्षमवाप्नुयात् ।। ५६ ।।

अयुतावर्तनादस्य भवेत्सिद्धिर्निरन्तरम् ।
एकाक्षरं समुच्चार्य चतुर्थ्यन्तं तु नाम वै ।। ५७ ।।

स्वाहापदं समुच्चार्य होमः कार्यो विधानतः ।
द्वितीयान्तं तर्पणं तु तर्पयामीति शब्दतः ।। ५८ ।।

तथैव मार्जनं कार्यं मार्जयामीति तत्परम् ।
पुरश्चर्यां नरः कृत्वा भुक्तिं मुक्तिमवाप्नुयात् ।।

इति त्रिशतीनामस्तोत्रनिरूपणम्

## अष्टोत्तरशतनामनिरूपणम्

नारदादय ऊचुः—

अष्टोत्तरशतं नाम्नां ब्रूहि प्रज्ञामनोरम! ।

सूर्य उवाच—

इक्षुसागरमध्यस्थो निजलोकनिवासकृत् ।
स्वानन्दभवनाधीशो निजानन्दगृहे स्थितः ।। ६० ।।

चिन्तामणिमण्टपस्थो दिव्यसिह्मासनाश्रयः ।
पद्मकिंजल्कसंविष्टस्स्वयंज्योतिस्स्वरूपवान् ।। ६१ ।।

तीव्रशिरोद्धृतपदो ज्वालिनीमौलिलालितः ।
नन्दानन्दितपीठश्रीः भोगदाभूषितासनः ।। ६२ ।।

सकामदायिनीपीठस्स्फुरदुग्रासनाश्रयः ।
तेजोवतीशिरोरत्नस्सत्यानित्यावतंसिनः ।। ६३ ।।

सविघ्ननाशिनीपीठस्सर्वशक्त्यम्बुजे स्थितः ।
ज्योतिर्मध्ये सुखासीनस्तत्त्वंपदसुविग्रहः ।। ६४ ।।

जपाकुसुमसंकाशश्शुण्डादण्डविराजितः ।
गजाननो ब्रह्ममूर्द्धा जगद्देहश्शुचिस्मितः ।। ६५ ।।

कुटिलालकशोभाढ्यस्सोमसूर्याग्निलोचनः ।
फालचन्द्रश्शूर्पकर्णो दन्तद्वयविराजितः ।। ६६ ।।

स्तबकाकारकुम्भाग्रो लम्बोष्ठो लम्बनासिकः ।
ह्रस्वनेत्रत्रयो लम्बकर्णो निबिडमस्तकः ।। ६७ ।।

कम्बुकण्ठो बृहद्बाहुः पीनवक्षाः पिचण्डिलः ।
निम्ननाभिश्चतुर्बाहुस्स्थूलोरुः प्रोल्लसत्कटिः ।। ६८ ।।

श्लिष्टजानुः पीनजंघो पद्मपादद्वयान्वितः ।
उन्नतप्रपदो गूढगुल्फस्संवृतपार्ष्णिकः ।। ६९ ।।

रक्तवस्त्रधरः पीतरक्तवस्त्रोत्तरीयकः ।
हेमतन्तुसमुद्भूतब्रह्मसूत्रत्रयान्वितः ।। ७० ।।

भानुकोटिप्रतीकाशरत्नमौलिविराजितः ।
रत्नकुण्डलशोभाढ्यश्शूर्पश्रुतिविभूषणः ।। ७१ ।।

दन्तालंकारसंयुक्तः फालपट्टविराजितः ।
चिन्तामणिरत्नमयकेयूरकटकान्वितः ॥ ७२ ॥

चिन्तामणिसुरचितराजमुद्राङ्गुलीयकः ।
चिन्तामणिकण्ठभूषो रत्नहारसमन्वितः ॥ ७३ ॥

चिन्तामण्यग्रसंयुक्तकटिसूत्रविराजितः ।
शिञ्जानमणिमञ्जीररत्नपादुकसंयुतः ॥ ७४ ॥

दूर्वाशम्यर्कमन्दारकुसुमैस्सुविराजितः ।
सर्वाभरणशोभाढ्यस्सुगन्धतिलकोज्वलः ॥ ७५ ॥

रत्नगन्धविलिप्ताङ्गो रक्तमन्दारमालिकः ।
पाशांकुशपरशूनां धारकः पद्मधारकः ॥ ७६ ॥

पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः ।
स्मितवक्त्रस्सुन्दराङ्गो मृदुमञ्जुलभाषकः ॥ ७७ ॥

श्वेतातपत्ररुचिरश्वेतचामरवीजितः ।
महासिद्धिमहाबुद्धिशोभिपार्श्वद्वयान्वितः ॥ ७८ ॥

गकारमस्तकोपेतो णकारजठरान्वितः ।
ईशपादद्वययुतो निर्गुणब्रह्मवक्त्रकः ॥ ७९ ॥

सगुणब्रह्मदेहाढ्यो निजानन्दकलेबरः ।
समष्टिव्यष्टिसंज्ञाढ्यब्रह्मकुम्भस्थलान्वितः ॥ ८० ॥

त्रयीमयनेत्राधरो महाकारणशुण्डकः ।
बिन्दुकण्ठस्सांख्यकर्णश्चतुर्ब्रह्मभुजान्वितः ॥ ८१ ॥

जीवब्रह्मपादयुतस्सोऽहंब्रह्मविषाणवान् ।
भुक्तिमुक्तिरूपचिन्तामणिभूषणभूषितः ॥ ८२ ॥

गणेश्वरो गणक्रीडो गणनाथो गणाधिपः ।
वक्रतुण्डश्चैकरदो गजवक्त्रो महोदरः ॥ ८३ ॥

लम्बोदरो धूम्रवर्णो विकटो विघ्ननायकः ।
विनायको महावाक्यलभ्ययोगसुखात्मकः ॥ ८४ ॥

इदमष्टोत्तरशतं नाम्नां गणककीर्तितम् ।
यः पठेद्भक्तिभावेन भुक्तिमुक्तिं लभेन्नरः ॥ ८५ ॥

यः पूजयेदनेनैव स्वानन्देशगजाननम् ।
दूर्वांकुरैश्शमीपत्रैश्श्वेतार्ककुसुमैश्च वा ॥ ८६ ॥

मन्दारकुसुमैर्वापि पुष्पैरन्यैश्शुभाक्षतैः ।
संप्राप्य विपुलान् भोगानन्ते ब्रह्मपदं व्रजेत् ॥ ८७ ॥

इति अष्टोत्तरशतनामनिरूपणम्

## महासिद्ध्यष्टोत्तरशतनामस्तोत्रम्

नारदादय उचुः—

अष्टोत्तरशतं नाम्नां महासिद्धेर्वद प्रभो! ।

सूर्य उवाच—

स्वानन्दभवनान्तस्थहर्म्यस्था गणपप्रिया ।
संयोगस्वानन्दब्रह्मशक्तिसंयोगरूपिणी ॥ ८८ ॥

अतिसौन्दर्यलावण्या महासिद्धिर्गणेश्वरी ।
व्रजमाणिक्यमकुटकटकादिविभूषिता ॥ ८९ ॥

कस्तूरितिलकोद्भासिनिटिला पद्मलोचना ।
शरच्चाम्पेयपुष्पाभनासिका मृदुभाषिणी ॥ ९० ॥

लसत्काञ्चनताटङ्कयुगला योगिवन्दिता ।
मणिदर्पणसंकाशकपोला कांक्षितार्थदा ॥ ९१ ॥

ताम्बूलपूरितस्मेरवदना विघ्ननाशिनी ।
सुपक्वदाडिमीबीजरदना रत्नदायिनी ॥ ९२ ॥

कम्बुवृत्तसमच्छायकन्धरा करुणायुता ।
मुक्ताभा दिव्यवसना रत्नकल्हारमालिका ॥ ९३ ॥

गणेशबद्धमांगल्यमंगला मंगलप्रदा ।
वरदाभयहस्ताब्जा भवबन्धविमोचिनी ॥ ९४ ॥

सुवर्णकुम्भयुग्माभसुकुचा सिद्धिसेविता ।
ब्रह्मश्नितम्बविलसज्जघना जगदीश्वरी ॥ ९५ ॥

सौभाग्यजातशृङ्गारमध्यमा मधुरस्वना ।
दिव्यभूषणसन्दोहरञ्जिता रणमोचिनी ॥ ९६ ॥

पारिजातगुणाधिक्यपदाब्जा परमात्मिका ।
सुपद्मरागसंकाशचरणा चिन्तितार्थदा ॥ ९७ ॥

ब्रह्मभावमहासिद्धिपीठस्था पङ्कजासना ।
हेरम्बनेत्रकुमुदचन्द्रिका चन्द्रभूषणा ॥ ९८ ॥

सचामरशिवावाणीसव्यदक्षिणवीजिता ।
भक्तरक्षणदाक्षिण्यकटाक्षा कमलासना ॥ ९९ ॥

गणेशालिङ्गनोद्भूतपुलकाङ्गी परात्परा ।
लीलाकल्पितब्रह्माण्डकोटिकोटिसमन्विता ॥ १०० ॥

वाणीकोटिसमायुक्तकोटिब्रह्मनिषेविता ।
लक्ष्मीकोटिसमायुक्तविष्णुकोटिप्रपूजिता ॥ १०१ ॥

गौरीकोटिसमायुक्तशम्भुकोटिसुसेविता ।
प्रभाकोटिसमायुक्तकोटिभास्करवन्दिता ।। १०२ ।।

भानुकोटिप्रतीकाशा चन्द्रकोटिसुशीतला ।
चतुष्षष्टिकोटिसिद्धिनिषेवितपदाम्बुजा ।। १०३ ।।

मूलाधारसमुत्पन्ना मूलबन्धविमोचिनी ।
मूलाधारैकनिलया योगकुण्डलिभेदिनी ।। १०४ ।।

मूलाधारा मूलभूता मूलप्रकृतिरूपिणी ।
मूलाधारगणेशानवामभागनिवासिनी ।। १०५ ।।

मूलविद्या मूलरूपा मूलग्रन्थिविभेदिनी ।
स्वाधिष्ठानैकनिलया ब्रह्मग्रन्थिविभेदिनी ।। १०६ ।।

मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ।
अनाहतैकनिलया रुद्रग्रन्थिविभेदिनी ।। १०७ ।।

विशुद्धिस्थाननिलया जीवभावप्रणाशिनी ।
आज्ञाचक्रान्तरालस्था ज्ञानसिद्धिप्रदायिनी ।। १०८ ।।

ब्रह्मरन्ध्रैकनिलया ब्रह्मभावप्रदायिनी ।
षट्कोणाष्टदलयुतश्रीसिद्धियन्त्रमध्यगा ।। १०९ ।।

अन्तर्मुखजनानन्तफलदा शोकनाशिनी ।
अव्याजकरुणापूरपूरिता वसुधारिणी ।। ११० ।।

दारिद्र्यनाशिनी लक्ष्मीस्सर्वपापप्रणाशिनी ।
भुक्तिसिद्धिर्मुक्तिसिद्धिस्सुधामण्डलमध्यगा ।। १११ ।।

चिन्तामणिस्सर्वसिद्धिः कमलावल्लभा शिवा ।
सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीर्वरप्रदा ।। ११२ ।।

रमानन्दा महालक्ष्मीर्विभूतिर्भक्तिवर्धनी ।
अष्टोत्तरशतं नाम्नां महासिद्धेरिदं वरम् ।। ११३ ।।

आज्ञया गणनाथस्य गणकेन प्रकीर्तितम् ।
यः पठेद् गाणपो भक्त्या पूजयेद्वा सुनामभिः ।
धर्ममर्थं च कामं च लब्ध्वा मोक्षवाप्नुयात् ।। ११४ ।।

इति महासिद्ध्यष्टोत्तरशतनामस्तोत्रम्

## महाबुद्ध्यष्टोत्तरशतम्

नारदादय ऊचुः—

अष्टोत्तरशतं नाम्नां महाबुद्धेवद प्रभो! ।

सूर्य उवाच—

मूलवह्निसमुद्भूता मूलाज्ञानविनाशिनी ।
निरुपाधिमहामाया शारदा प्रणवात्मिका ।। ११५ ।।

सुषुम्णमुखमध्यस्था चिन्मयी नादरूपिणी ।
नादातीता ब्रह्मविद्या मूलविद्या परात्परा ।। ११६ ।।

सकामदायिनी पीठमध्यस्था बोधरूपिणी ।
मूलाधारस्थगणपदक्षिणाङ्गनिवासिनी ।। ११७ ।।

विश्वाधारा ब्रह्मरूपा निराधारा निरामया ।
सर्वाधारा साक्षिभूता ब्रह्ममूला सदाश्रया ।। ११८ ।।

विवेकलभ्या वेदान्तगोचरा मननातिगा ।
स्वानन्दयोगसंलभ्या निदिध्यासस्वरूपिणी ।। ११९ ।।

विवेकादिभृत्ययुता शमादिकिंकरान्विता ।
भक्त्यादिकिंकरीजुष्टा स्वानन्देशसमन्विता ।। १२० ।।

महावाक्यार्थसंलभ्यगणेशप्राणवल्लभा ।
तमस्तिरोधानकरी स्वानन्देशप्रदर्शिनी ॥ १२१ ॥
स्वाधिष्ठानगता वाणी रजोगुणविनाशिनी ।
रागादिदोषशमनी कर्मज्ञानप्रदायिनी ॥ १२२ ॥
मणिपूराब्जनिलया तमोगुणविनाशिनी ।
अनाहतैकनिलया गुणसत्वप्रकाशिनी ॥ १२३ ॥
अष्टाङ्गयोगफलदा तपोमार्गप्रकाशिनी ।
विशुद्धिस्थाननिलया हृदयग्रन्थिभेदिनी ॥ १२४ ॥
विवेकजननी प्रज्ञा ध्यानयोगप्रबोधिनी ।
आज्ञाचक्रसमासीना निर्गुणब्रह्मसंयुता ॥ १२५ ॥
ब्रह्मरन्ध्रपद्मगता जगद्भावप्रणाशिनी ।
द्वादशान्तैकनिलया स्वस्वानन्दप्रदायिनी ॥ १२६ ॥
पीयूषवर्षिणी बुद्धिस्स्वानन्देशप्रकाशिनी ।
इक्षुसागरमध्यस्था निजलोकनिवासिनी ॥ १२७ ॥
वैनायकी विघ्नहन्त्री स्वानन्दब्रह्मरूपिणी ।
सुधामूर्तिस्सुधावर्णा केवला हृद्गुहामयी ॥ १२८ ॥
शुभ्रवस्त्रा पीनकुचा कल्याणी हेमकञ्चुका ।
विकचाम्भोरुहदललोचना ज्ञानरूपिणी ॥ १२९ ॥
रत्नताटङ्कयुगला भद्रा चम्पकनासिका ।
रत्नदर्पणसंकाशकपोला निर्गुणात्मिका ॥ १३० ॥
ताम्बूलपूरितस्मेरवदना सत्यरूपिणी ।
कम्बुकण्ठी सुबिम्बोष्ठी वीणापुस्तकधारिणी ॥ १३१ ॥

गणेशज्ञातसौभाग्यमार्दवोरुद्दयान्विता ।
कैवल्यज्ञानसुखदपदाब्जा भारती मतिः ।। १३२ ।।

वज्रमाणिक्यकटककिरीटा मञ्जुभाषिणी ।
विघ्नेशबद्धमांगल्यसूत्रशोभितकन्धरा ।। १३३ ।।

अनेककोटिकेशार्कयुग्मसेवितपादुका ।
वागीश्वरी लोकमाता महाबुद्धिस्सरस्वती ।। १३४ ।।

चतुष्षष्टिकोटिविद्याकलालक्ष्मीनिषेविता ।
कटाक्षकिंकरीभूतकेशबृन्दसमन्विता ।। १३५ ।।

ब्रह्मविष्णवीशशक्तीनां दृशा शासनकारिणी ।
पञ्चचित्तवृत्तिमयी तारमन्त्रस्वरूपिणी ।। १३६ ।।

वरदा भक्तिवशगा भक्ताभीष्टप्रदायिनी ।
ब्रह्मशक्तिर्महामाया जगद्ब्रह्मस्वरूपिणी ।। १३७ ।।

अष्टोत्तरशतं नाम्नां महाबुद्धेर्वरान्तकम् ।
यः पठेद्भक्तिभावेन विद्यां बुद्धिं श्रियं बलम् ।
संप्राप्य ज्ञानमतुलं ब्रह्मभूयमवाप्नुयात् ।। १३८ ।।

इति बुद्ध्यष्टोत्तरशतम्

## मानसपूजाकल्पनिरूपणम्

नारदादय ऊचुः—

कल्पं मानसपूजायां वद नो दिननायक ! ।

सूर्य उवाच—

कल्पो मानसपूजायाः प्रोक्तो गृत्समदेन वै ।
चतुरशीतिश्लोकैश्च संग्रहं तस्य वो ब्रुवे ।। १३९ ।।

सत्यानन्दविराजिते निजगृहे रक्तांबुजे संस्थितं
सत्ये ज्योतिषि विघ्नराजममलं रक्तं सदा साक्षिणम् ।
कण्ठाधस्सगुणं परात्मवदनं युक्तं प्रियाभ्यां मुदा
बिभ्राणं वरदाभये निजकरैः पाशांकुशौ तं भजे ।। १४० ।।

रत्नैस्सुदीप्तैः प्रतिबिम्बितं तं
पश्यामि चित्तेन विनायकं च ।
तत्रासनं रत्नसुवर्णयुक्तं
संकल्प्य देवं विनिवेशयामि ।। १४१ ।।

सिद्ध्या च बुद्ध्या सह विघ्नराज!
पाद्यं कुरु प्रेमभरेण सर्वैः ।
तोयं सुवासै रचितं गृहाण
चित्तेन दत्तं च सुखोष्णभावम् ।। १४२ ।।

प्रवालमुक्ताफलहाटकाद्यै-
स्सुसंस्कृतं ह्यन्तरभावकेन ।
अनर्घ्यमर्घ्यं सफलं कुरुष्व
मया प्रदत्तं गणराजढुण्ढे! ।। १४३ ।।

कर्पूरतैलादिसुवासितं तु
संकल्पितं तोयमथो गृहाण ।
आचम्य तेनैव गजानन त्वं!
कृपाकटाक्षेण विलोकयाशु ।। १४४ ।।

शुद्धं त्रियुक्तं मधुपर्कमाद्यं
संकल्पितं भावयुतं गृहाण ।
तोयेन चाचम्य विनायक! त्वं
भक्तान् सुरक्ष भक्तेश! चाशु ॥ १४५ ॥

देवं सुखोष्णेन जलेन चाहं
गङ्गातीर्थाहृतकेन केडचम् ।
चित्तेन शुद्धेन च स्नापयामि
स्नानं मया दत्तमथो गृहाण ॥ १४६ ॥

अग्नौ विशुद्धे प्रगृहाण वस्त्रे
मौल्यातिगे ते मनसा मया वै ।
दत्ते परिच्छाद्य निजात्मदेहं
ताभ्यां मयूरेश! जनांश्च रक्ष ॥ १४७ ॥

यज्ञोपवीतं त्रिगुणस्वरूपं
सौवर्णमेवं ह्यहिनाथभूतम् ।
भावेन दत्तं गणनाथ! तत्त्वं
सूत्रं गृहाणोद्धृतिकारणाय ॥ १४८ ॥

उद्यद्दिनेशाभमथो गृहाण
सिन्दूरकं ते मनसा प्रदत्तम् ।
सर्वाङ्गसंलेपनमादरात् त्वं
हेरम्ब! चित्तेन कुरुष्व पूर्णम् ॥ १४९ ॥

किरीटपूर्वाणि सुभूषणानि
भक्तेच्छया मानसकल्पितानि ।

संभूषयाम्येव तवाङ्गकेषु
रत्नानि धातुप्रभवाणि डुण्ढे! ।। १५० ।।

सुचन्दनं रक्तममोघवीर्यं
सुघर्षितं ह्यष्टसुगन्धमुख्यैः ।
युतं मया कल्पितमेकदन्त!
गृहाण ते त्वङ्गविलेपनार्थम् ।। १५१ ।।

लिप्तेषु वैचित्र्यमथाष्टगन्धै-
रङ्गेषु तेऽहं प्रकरोमि चित्रम् ।
मां पाहि चित्तेन विनायक! त्वं
रक्तं ततो वर्तुलमेव फाले ।। १५२ ।।

आज्येन वै कुङ्कुमकेन रक्तान्
सूक्ष्माक्षतांस्ते परिकल्पयामि ।
फाले गणाध्यक्ष! गृहाण पाहि
भक्तान् सुभक्तिप्रिय! दीनबन्धो! ।। १५३ ।।

गृहाण भोश्चम्पकमालती-
स्थलपङ्कजान्यम्बुजपङ्कजानि ।
पुष्पोपरि त्वं मनसा गृहाण
हेरम्ब! मन्दारशमीदलानि ।। १५४ ।।

दूर्वांकुरान् वै मनसा प्रदत्तान्
पञ्चत्रिपत्रान्वितकार्द्रभूतान् ।
श्वेतांश्च विघ्नेश्वर! संख्यया त्वं
हीनांश्च सर्वोपरि संगृहाण ।। १५५ ।।

दशाङ्गभूतं मनसा मया ते
धूपं प्रदत्तं गजराज! चाग्नौ ।
मां पाहि सौरभ्यकरं परेश-
सिद्धया च बुद्धया सह संगृहाण ।। १५६ ।।

दीपं सुवर्त्या युतमादरात्ते
दत्तं मया मानसकं गृहाण ।
विघ्नेश! कर्पूरभवं गृहाण
तैलादिसंभूतममोघदृष्टे! ।। १५७ ।।

भोज्यं तु लेह्यं गणराज! पेयं
चोष्यं च नानाविधषड्रसाढ्यम् ।
हेरम्ब! नैवेद्यमथो गृहाण
संकल्पितं चापि फलानि ढुण्ढे! ।। १५८ ।।

अष्टाङ्गयुक्तं गणनाथ! दत्तं
ताम्बूलकं ते मनसा मया वै ।
संकल्प्य विघ्नेश्वर! संगृहाण
नासाशुक्तत्तुण्डविशोधनार्थम् ।। १५९ ।।

गृहाण लम्बोदर! दक्षिणां ता-
मसंख्यभूतां मनसा प्रदत्ताम् ।
सुवर्णरत्नादिकमुख्यभूतां
प्रभो! जगद्कृत्स्नमिदं सुपाहि ।। १६० ।।

आरार्तिकं त्वेतदवारदीपं
कर्पूरभूतं प्रकरोमि पूर्णम् ।

चित्तेन लम्बोदर! तद् गृहाण
ह्यज्ञानध्वान्ताघहरं निजानाम् ।। १६१ ।।

गणेश! वैघ्नेश्वरकैस्सुमन्त्रै-
स्सुमन्त्रितं पुष्पदलप्रभूतम् ।
गृहाण चित्तेन मया प्रदत्त-
मपारवृत्त्या त्वथ मन्त्रपुष्पम् ।। १६२ ।।

प्रदक्षिणाः मानसकल्पितास्ताः
गृहाण लम्बोदर! भावयुक्ताः ।
असंख्यभूताः विविधस्वरूपाः
दासान् सदा रक्ष भवार्णवाद्वै ।। १६३ ।।

नतिं ततो विघ्नपते! गृहाण
साष्टाङ्गकाद्यां विविधस्वरूपाम् ।
संख्याविहीनां मनसा कृतां ते
सिद्धया च बुद्धया परिपालयाशु ।। १६४ ।।

करोमि यद्यच्च तदेव दीक्षा
गणेश्वरस्यास्तु सदा परेश! ।
प्रसीद नित्यं तव पादभक्तं
कुरुष्व मां ब्रह्मपदे दयालो! ।। १६५ ।।

इति मानसपूजाकल्पनिरूपणम्
इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये त्रयोदशोऽध्यायः

## चतुर्दशोऽध्यायः

## चतुर्विधदीक्षासंस्कारसिद्धिमार्गकथनम्

नारदादय ऊचुः—

शिवादयः पञ्च देवा देवा इन्द्रपुरोगमाः ।
मुनयो योगिनस्सिद्धा मानवा अपि विष्टपे ॥ १ ॥

सर्वे गाणपतास्सूर्य! तेषु केचन सत्तमाः ।
गार्ग्यमुद्गलबल्लालप्रमुखाः पूर्णगाणपाः ॥ २ ॥

आधिकारिकपुरुषा मुख्यदेवा मुनीश्वराः ।
गार्ग्यो नाम मुनिवरो विभूतिपदधारकः ॥ ३ ॥

मयूरेशगणेशस्य सखा ब्रह्मविदुत्तमः ।
केन पुण्यप्रभावेण सखाभूद् ब्रह्मणस्पतेः ।
तदुपासनमार्गं नः कृपया वद भास्कर! ॥ ४ ॥

सूर्य उवाच—

गार्ग्यस्तु पूर्वजनुषि काशिक्षेत्रे द्विजोऽभवत् ।
सुशील इति विख्यातो भृगुवंशसमुद्भवः ॥ ५ ॥

जेगीषव्यं यतिं सिद्धं स्कन्दशिष्यं तु शाम्भवम् ।
कस्मिंश्चिद्दिवसे भक्त्या पप्रच्छ विनयेन तम् ॥ ६ ॥

स्वानन्देशः कश्यपस्य सुतो भूत्वा नृदेहवान् ।
अस्मिन् पुरे काशिराजगृहे स्थित्वा पुरस्थितैः ॥७॥

चिक्रीड बालकैस्सार्धं तस्मिन् सक्ताश्च बालकाः ।
ब्रह्मज्ञानं ब्रह्मभूयसिद्धिं लब्ध्वा सुदुर्लभम् ॥ ८ ॥

स्वानन्दभवनं प्रापुरिति पौरा वदन्ति च ।
सखिभावसुखं मर्त्यलोकेऽतिदुर्लभं विभो! ।। ९ ।।

अहमिच्छामि तल्लब्धुमुपायं वद मे विभो ! ।
इति तत्प्रार्थनां श्रुत्वा प्रत्युवाच मुनीश्वरः ।। १० ।।

उपासनं गणपतेर्नाहं जानामि सत्तम! ।
जन्मनाहं महाशैवशिवोपासनसंयुतः ।। ११ ।।

क्रमेण योगमार्गस्थोऽभवं शैवं परात्परम् ।
सहजं स्वस्वरूपं च ज्ञात्वाहं तन्मयोऽभवम् ।। १२ ।।

योगशान्तिमलब्ध्वाहं ब्रह्म ज्ञात्वा सदाशिवात् ।
संयोगस्वानन्दरूपं गणेशं ब्रह्मणस्पतिम् ।। १३ ।।

गाणेशयोगनिरतो भूत्वा गाणपतोऽभवम् ।
गणेशस्य प्रसादेन योगशान्तियुतोऽभवम् ।। १४ ।।

इदानीं पूर्णगाणेशो योगमार्गपरायणः ।
अहं मम गुरुश्शंभुः पूर्वदेवो महेश्वरः ।। १५ ।।

शिवस्य दक्षिणामूर्तेर्मनुं तुभ्यं ददाम्यहम् ।
तेन तोषय गौरीशं तवाभीष्टसुसिद्धये ।। १६ ।।

उपासनं गणेशस्य प्रयच्छेत् परमेश्वरः ।
इत्युक्त्वा च मनुं दत्वा प्रययौ योगिसत्तमः ।। १७ ।।

सुशीलस्तोषयामास मनुना परमेश्वरम् ।
प्रसन्नो दक्षिणामूर्तिः काश्यां तु ज्ञानमण्टपे ।। १८ ।।

उपासनाक्रमं तस्मै प्रददौ ब्रह्मणस्पतेः ।
तदद्य वः प्रवक्ष्यामि यूयं शृणुत सादरम् ।। १९ ।।

शिव उवाच—

सुशील! मम शिष्यस्त्वं शृणु वेदरहस्यकम् ।
सूक्ष्ममार्गं पूर्णगाणपत्यसिद्ध्यै जगत्तले ।। २० ।।

षड्विधा गाणपी दीक्षा बाह्यदीक्षा चतुर्विधा ।
आन्तरा द्विविधा प्रोक्ता योगनिर्वाणरूपिणी ।।२१।।

आन्तरा द्विविधा ज्ञानयोगिनां परिकीर्तिता ।
उपासकानां कथिता बाह्यदीक्षाश्चतुर्विधाः ।। २२ ।।

बाह्ये समयदीक्षा तु प्रथमा चेति कीर्तिता ।
षडर्णैकाक्षरयोरेकस्य ग्रहणं क्रमात् ।। २३ ।।

दीक्षा समयसंज्ञा स्याद् गाणेशत्वप्रदायिनी ।
यथैव ब्रह्मगायत्री ब्राह्मणैर्गृह्यते शुभा ।। २४ ।।

तथा गाणपतो मन्त्रो गृहीतव्यो विधानतः ।
चौलादीनि यथाङ्गानि गायत्रीग्रहणे द्विज! ।। २५ ।।

दीक्षाङ्गानि तथा वेदशास्त्रेषु कथितानि च ।
पूर्वं तु मन्त्रदीक्षायास्संस्काररूपकाणि च ।। २६ ।।

पुराणं वाथ माहात्म्यं सूक्तं गाणपतं वरम् ।
सहस्रनामस्तोत्रं वा त्रिशतीस्तोत्रकं च वा ।। २७ ।।

नवार्णादिषु मन्त्रेषु चैकं ग्राह्याणि भावतः ।
दशवारावर्तनं तु पुराणस्य प्रकीर्तितम् ।। २८ ।।

सहस्रनामस्तोत्रस्य शीर्षसूक्तकयोरपि ।
सहस्रावर्तनं प्रोक्तं तेषां सिद्ध्यै महात्मभिः ।। २९ ।।

अयुतं कथितं विप्र! त्रिशतीस्तोत्रकस्य च ।
एवं कृत्वा पुरश्चर्यां दशांशक्रमतः क्रमात् ।। ३० ।।

ऋचा होमस्स्मृतस्सूक्ते खण्डहोमस्तु शीर्षके ।
नामस्तोत्रे तु नाम्ना च सर्वत्र स्वाहया सह ।। ३१ ।।

'गणानां त्वे'ति मन्त्रेण पुराणादिषु वै क्रमात् ।
मन्त्राणां मध्यसंख्या वा कार्या विधिपुरस्सरम् ।।३२।।

चातुर्लक्षक्रमेणैव मन्त्रसिद्ध्यै द्विजोत्तम! ।
पञ्चाशद्वर्णमन्त्रस्य जपसंख्या निरूपिता ।।३३।।

वर्णानुसारतः कार्या त्रैराजिकमार्गतः ।
एकाक्षरस्य मन्त्रस्य कार्या सिद्धिस्ततः परम् ।। ३४ ।।

एकाक्षरस्य मन्त्रस्य पुरश्चर्या दश स्मृताः ।
दशलक्षजपस्तस्य पुरश्चर्याः प्रकीर्तिताः ।। ३५ ।।

कीलकं पञ्चरं वर्म हृदयं जपकर्मणि ।
अङ्गानि कथितान्येव तथैवावरणस्तवम् ।। ३६ ।।

अयुतावर्तनादेव कीलके सिद्धिमाप्नुयात् ।
वर्मादिषु तदर्द्धेन नरस्सिद्धिमवाप्नुयात् ।। ३७ ।।

अन्वयान्ते तु ह्येतेषां होमाद्याः परिकीर्तिताः ।
नारिकेलेक्षुचिपिटकलमाधान्यसक्तवः ।। ३८ ।।

गुलयुक्ततिलान्नं च मोदकं घृतपाचितम् ।
द्रव्याष्टकमिति प्रोक्तं गणेशहोमकर्मणि ।। ३९ ।।

समिदन्नाज्यद्रव्याणि शस्तानि त्रीण्यपि द्विज! ।
दूर्वाहोमः प्रशस्तस्स्यात् नारिकेरस्य सत्तमः ।। ४० ।।

तथा मोदकहोमश्च लाजश्चापि प्रविश्रुतः ।
अर्चनग्रहणं विप्र! दीक्षा वैशेषिकी स्मृता ।। ४१ ।।

वारमासवत्सराख्यव्रतानि च यथामति ।
अनुष्ठेयानि भक्त्या च प्रीतये ब्रह्मणस्पतेः ।। ४२ ।।

एकभक्तिर्नक्तपूजा कार्या वारव्रते द्विज! ।
गणेशस्य प्रियकरो भौमवारः प्रकीर्तितः ।। ४३ ।।

सिद्धिबुद्धिगणेशानां शुक्रवारः प्रियो मतः ।
वारव्रते रात्रिकाले दिवि वा परमात्मनः ।। ४४ ।।

नित्याद्विशेषनैवेद्यैः कार्यं त्रिशतिनामभिः ।
शुक्लपक्षचतुर्थ्यां तु ह्युपवासपुरस्सरम् ।। ४५ ।।

मोदकानां च नैवेद्यैः सहस्रनामभिर्वरैः ।
अर्चनं गणनाथस्य कर्तव्यं भावपूर्वकम् ।। ४६ ।।

अभिषेके विशेषेण द्रव्याणि विनियोजयेत् ।
एवं कृष्णचतुर्थ्यां तु रात्रिकाले प्रकीर्तितम् ।। ४७ ।।

पञ्चम्यामेव होमस्तु द्वयोः कार्यो द्विजार्चनैः ।
गाणेशेषु कीर्तितेषु समीपे समास्थितस्य च ।। ४८ ।।

संवत्सरस्यैकवारं यात्रा कार्या विधानतः ।
भूमिस्वानन्दक्षेत्रस्य क्षेत्रराजस्य सत्तम! ।। ४९ ।।

द्वादशाब्दे त्रिवारं वा चैकवारमथापि वा ।
यात्रा कार्या विधानेन संस्काराः पञ्च विश्रुताः ।।५० ।।

वारव्रतानां त्रिशतैस्तस्य सिद्धिः प्रकीर्तिता ।
चतुर्थीनामर्द्धशतैस्सिद्धिः प्राप्ता न संशयः ।। ५१ ।।

श्रावणे मासपूजायां दश सिद्धिप्रदायिनी ।
मयूरेशस्य यात्रा तु त्रिभिस्सिद्धिप्रदा मता ।। ५२ ।।

पूजार्थं मूर्तिग्रहणं महावैशेषिकी मता ।
श्वेतार्कमूलसम्भूता गजदन्तमयी ह्यथ ।। ५३ ।।

निष्कामपूजने शस्ता दीक्षितस्य विधानतः ।
यन्त्रार्चनं सिद्धिबुद्धिजपो नित्याग्निहोत्रकम् ।
गणेशवैश्वदेवं च गाणेशतर्पणं तथा ।। ५४ ।।

महावैशेषसिद्धये—

यन्त्रार्चनस्य संसिद्धिस्सहस्रवारपूजनात् ।
ब्राह्मणस्पत्ययज्ञस्य सकृदाचरणेन वै ।। ५५ ।।

तस्य सिद्धिस्तु कथिता कारणाद्विधिपूर्वकम् ।
इष्टीनामपि होमानां सिद्ध्यै षोडश कीर्तिता ।।५६।।

नित्याग्निहोत्रं संसिद्ध्येत्सहस्रदिनहोमतः ।
वैश्वदेवं तर्पणं च तथा सिद्ध्येन्न संशयः ।। ५७ ।।

दशोपनिषदो विघ्नाः प्रस्थाने प्रथमास्स्मृताः ।
तथा गीताद्वयं प्रोक्तं प्रस्थाने तु द्वितीयके ।। ५८ ।।

गणेशदर्शनं शास्त्रं सूत्ररूपं तृतीयकम् ।
त्रयाणां ग्रहणं विप्र! ज्ञानदीक्षेति कथ्यते ।। ५९ ।।

शतवारावर्तनेन तेषां सिद्धिः प्रकीर्तिता ।
तेषामर्थविचारस्तु दशवारेण सिद्ध्यति ।। ६० ।।

दशवारोपदेशेन शिष्याणां तत्त्वदायकम् ।
सिद्ध्येदिति मुनीशानाः प्राहुर्वेदान्तपारगाः ।। ६१ ।।

आगत्य वेददीक्षाढ्यं शास्त्रज्ञानं तु हृद्गतम् ।
अस्माकं संमतं चेति वदन्ति च यदा द्विजाः ।। ६२ ।।

तस्य ज्ञानं तदा जातं वेदान्तशास्त्रसम्भवम् ।
मायूरे तु गुहासंस्थो गणेशो ब्रह्मणस्पतिः ।। ६३ ।।

दत्वा दर्शनं तस्य मोचयामि भवार्णवात् ।
मा भैषीरिति प्रीत्या च यदा वदति सत्तम ।। ६४ ।।

उपासनामार्गसिद्धिः पूर्णा जाता तदा ध्रुवम् ।
निदिध्यासोऽपि ज्ञानस्य संपूर्णो नात्र संशयः ।। ६५ ।।

एवं क्रमेण गणपं साधयेद्यस्तु सत्तम ! ।
स च मैत्रीमवाप्नोति गणेशेन धरातले ।। ६६ ।।

मोक्षार्थी निजलोकं च प्राप्नुयान्नात्र संशयः ।
उपासनापूर्णसिद्धिहीनो नैजं तु नाप्नुयात् ।। ६७ ।।

दीक्षाप्रशंसासिद्ध्यर्थं दीक्षया नैजमाप्नुयात् ।
एवं पुराणकल्पेषु कथितं तन्न तत्त्वकम् ।। ६८ ।।

एकैकसंस्कारमार्गाद् गमनं सिद्धिपूर्वकम् ।
पिपिलिकामार्ग इति कथ्यते वेदपारगैः ।। ६९ ।।

सर्वानुष्ठानमार्गाद् गमनं तु विहङ्गमः ।
यथा रोचसि ते विप्र! तथा कुरु ममाज्ञया ।। ७० ।।

सूर्य उवाच—

एवं श्रुत्वा द्विजः प्राह पक्षिमार्गो मम प्रियः ।
दीक्षादयस्तथा देया भवता परमेश्वर! ।। ७१ ।।

प्रार्थनां तस्य संश्रुत्य महेशो मुनिगणान्वितः ।
भाद्रपदशुक्लपक्षप्रथमायां विधानतः ।। ७२ ।।

भक्त्यादिपूर्वसंस्कारान् कारयामास हृष्टधीः ।
द्वितीयायां चकारायं दीक्षां समयसंज्ञिकाम् ।। ७३ ।।

महावैशेषिकां दीक्षां दशसंस्कारसंयुताम् ।
तृतीयायां ततः प्रीत्या चतुर्थ्यां ज्ञानसंज्ञिकाम् ।।७४।।

कारयित्वा मुनीशानैस्तिरोऽभूत् परमेश्वरः ।
सर्वदीक्षास्सुसंप्राप्य सुशीलो ब्राह्मणोत्तमः ।
अभजद् गणराजं सः भजने निरतस्सदा ।।७५।।

इति चतुर्विधदीक्षासंस्कारसिद्धिमार्गकथनम्

## द्वादशवार्षिकोपासनाविधिनिरूपणम्

नारदादय ऊचुः—

उपासनं गणेशस्य कथं चक्रे द्विजोत्तमः ।
अनुष्ठानक्रमं तस्य ब्रूहि नो दिननायक! ।। ७६ ।।

सूर्य उवाच—

तुरीययामे चोत्थाय नित्यं ब्राह्मणसत्तमः ।
प्रक्षाल्य पादौ हस्तौ च गण्डूषेण मुखं ततः ।। ७७ ।।

द्विराचम्य भस्मना च सर्वाङ्गोद्धूलनं क्रमात् ।
कृत्वा ध्यात्वा गणेशानं संपूज्य मनसा क्रमात् ।।७८।।

यथाशक्ति स्तुतिं कृत्वा गुरुं ध्यात्वा ततः परम् ।
पञ्चायतनदेवानां पठित्वा पञ्चरत्नकम् ।। ७९ ।।

भूमिप्रार्थनपूर्वं तु सुप्रभातस्य पञ्चकम् ।
नैर्ऋतिं च दिशं गत्वा मलमूत्रं विसृज्य च ।। ८० ।।

आस्यशुद्धिं दन्तशुद्धिं जिह्वाशुद्धिं विधानतः ।
कृत्वा गङ्गाजले स्नात्वा विधिना सङ्ग्रहेण च ।।८१।।

वस्त्रद्वयं ततो धृत्वा सिन्दूरोद्धूलनेन च ।
तिलकं रक्तगन्धेन धृत्वाक्षान् गाणपान् क्रमात् ।।८२।।

भूतशुद्ध्यादिकं कृत्वा सन्ध्यां चक्रे गणेशितुः ।
पठित्वा कीलकं वर्म गायत्रीं शतसंख्यया ।। ८३ ।।

संभूयैकाक्षरं चक्रे रससाहस्रसंख्यया ।
चतुर्विंशतिवर्णाढ्यमन्त्रं स्वानन्दतोषकम् ।। ८४ ।।

सहस्रसंख्यया जप्त्वा पठित्वा हृदयं ततः ।
उपास्य वर्णसन्ध्यां च जप्त्वा च वेदमातरम् ।। ८५ ।।

गाणेशाग्निं ततो हुत्वा संकल्प्य ब्रह्मयज्ञकम् ।
दूर्वाशमीसमित्पुष्पकुशाहरणहेतवे ।। ८६ ।।

बहिर्गच्छेत्तदा सूक्तं गाणेशं स्तवराजकम् ।
सहस्रनामत्रिशतीवेदपादस्तवादिकम् ।। ८७ ।।

जप्त्वा तानि समाहृत्य पूजा देवस्य सन्निधौ ।
ब्राह्मणस्पत्यऋङ्मन्त्रैः कुर्याच्च वन्दनं द्विजः ।। ८८ ।।

उपनिषत्सु चैकां च गाणकत्रयपूर्वकम् ।
दर्शने पादमेकं च गीतास्वध्यायमेककम् ।। ८९ ।।

भावपूर्वं पठेद्विप्रस्तात्पर्यं कथयेदपि ।
गणेशतर्पणं कुर्यात् पूजार्थं प्रारभेत्ततः ।। ९० ।।

पूजां तु मानसीं कृत्वा बाह्यपूजामुपक्रमेत् ।
अभिषेकं दिनं कुर्याच्छोणभद्रस्य केवलम् ।। ९१ ।।

शुक्रवारे तु यन्त्रस्य शोणभद्रयुतस्य च ।
प्रतिमायन्त्रशोणानां चतुर्थ्योरपि सत्तमः ।। ९२ ।।

नित्यं शुद्धजलेनापि तथा गन्धोदकेन च ।
सक्षीरेण शुक्रवारे सपञ्चामृतकैरपि ।। ९३ ।।

चतुर्थ्योश्च द्विजेशानो श्रावणे मासि पूजने ।
सुगन्धतैलेक्षुरसैः तथा फलरसैरपि ।। ९४ ।।

पञ्चामृतैर्गन्धतोयैर्गणेशमभिषेचयेत् ।
सूक्तशीर्षमुखानां च जपं कुर्याद्विशेषतः ।। ९५ ।।

अर्चनं तु दिनं कुर्यात् पुष्पाद्यैः शतनामभिः ।
दूर्वार्चनं द्विवारं वै एकविंशतिनामभिः ।। ९६ ।।

शुक्रवारे तु त्रिशतीनामभिर्भक्तिपूर्वकम् ।
कृष्णपक्षचतुर्थ्यां तु सहस्रनामभिः क्रमात् ।। ९७ ।।

एकार्णनामसाहस्रैश्शुक्लपक्षे द्विजोत्तमः ।
नित्यं तु मासपूजायां संभूय यन्त्रके वरे ।। ९८ ।।

संभूय नामसाहस्रैः कुर्यादर्चनमादरात् ।
भाद्रशुक्लचतुर्थ्यां तु मध्याह्ने द्विजसत्तमः ।। ९९ ।।

संभूयैव च दूर्वाभिः गकारैः पत्रपूजनम् ।
सहस्रनामभिः कुर्याद्भक्त्या पुष्पार्चनं द्विजः ।। १०० ।।

नित्यं यद् भुज्यते चान्नं तत्तु देवनिवेदनम् ।
शुक्रवारे तु सिद्धान्नं नारिकेलफलादिकम् ।। १०१ ।।

नित्यान्नेन युतं भक्त्या क्रियते देवतुष्टये ।
शुक्लपक्षचतुर्थ्यां तु सिद्धान्नं च तिलान्नकम् ।। १०२ ।।

फलान्यपि मोदकानि नैवेद्यं ब्रह्मणस्पतेः ।
कृष्णे शुद्धान्नमपि च क्रियते परमादरात् ।। १०३ ।।

पञ्चम्यां तु विशेषेण नानाभक्ष्यपुरस्सरम् ।
क्रियन्ते मोदकादीनि तुष्टये द्विजदेवयोः ।। १०४ ।।

अन्ते ह्यावृतिदेवानां जप्यन्ते मनवोऽपि च ।
ततः कृत्वा वैश्वदेवं गाणपं ब्राह्मणोत्तमः ।। १०५ ।।

अर्घ्यं दत्वा गणेशाय समाप्य पूजनं ततः ।
षोडशावृतिस्तोत्रेण तोषयेद् गणनायकम् ।। १०६ ।।

पूजादौ पञ्जरस्यैव जपं कुर्याद् द्विजोत्तमः ।
भुक्त्वाऽध्यायत्रयं पश्चात् पठेदपि पुराणके ।। १०७ ।।

वृत्तिकार्यं ततः कार्यं कुर्यात् कुटुम्बरक्षणम् ।
सायमस्तमनात्पूर्वं सन्ध्यां गाणपतीं वराम् ।। १०८ ।।

कृत्वा जपादिकं सर्वं संग्रहेण द्विजोत्तमः ।
वर्णसन्ध्यां वह्निकार्यं कृत्वा च विधिपूर्वकम् ।। १०९ ।।

डुण्ढिराजालयं गत्वा संसेव्य विधिपूर्वकम् ।
मन्त्रं चाधमभावेन जप्त्वा सेवां समाप्य च ।। ११० ।।

गमनागमने काले मन्त्राङ्गेष्ववशिष्टकान् ।
जपेद् गृहे स्थितां स्वात्मदेवतां संप्रपूज्य च ।। १११ ।।

पञ्चोपचारैः पश्चात्तु किञ्चिद्भक्ष्यादिकं ततः ।
भुक्त्वा पुराणतात्पर्यं द्विजेभ्यः कथयेन्मुदा ।। ११२ ।।

इष्टिं कुर्याच्चतुर्थ्यां तु पञ्चम्यां होममाचरेत् ।
संवत्सरजपानां च पुरश्चर्या विधानतः ॥११३॥

माघे कुर्याद् द्विजश्रेष्ठो ज्येष्ठे यात्रां समाचरेत् ।
कृत्तिकाकृष्णप्रतिपत्समारभ्य द्विजोत्तमः ॥ ११४ ॥

मार्गशीर्षशुक्लपक्षषष्ठ्यन्तं गणनायकम् ।
गुणेशस्य पूजनं च कुर्याद्विधिपुरस्सरम् ॥ ११५ ॥

वैशाखे शुक्लप्रतिपत्समारभ्य द्विजोत्तमः ।
पूर्णिमान्तं पञ्चदशदिनं सिद्धेः प्रपूजनम् ॥ ११६ ॥

रात्रिकाले द्विजः कुर्यात् श्रीलक्ष्मीसूक्तमार्गतः ।
आश्विजे तु नवदिनं रात्रौ बुद्धिप्रपूजनम् ॥ ११७ ॥

वैशाखपूर्णिमायां तु प्रातश्शम्भुसुतार्चनम् ।
आषाढपूर्णिमायां तु कुर्याद् गणकपूजनम् ॥ ११८ ॥

एवं द्वादशवर्षं तु सुशीलो ब्राह्मणोत्तमः ।
उपासनां गणेशस्य प्रचकार दृढव्रतः ॥ ११९ ॥

आगत्य पुरतस्तस्य प्रावदद् गणनायकः ।
त्वन्तूपासनमार्गेषु संसिद्धो नात्र संशयः ॥ १२० ॥

आवयोरन्तरं नास्ति त्वमेवाहं न संशयः ।
त्रेतायुगे पराशक्तेर्भविष्यामि सुतो मुने! ॥ १२१ ॥

भविष्यसि तदा त्वं मे सखा गार्ग्यो महामुनिः ।
योगशान्तिं तदा लब्ध्वा पूर्णयोगी भविष्यसि ॥१२२॥

दिनकल्पान् भुवि स्थित्वा प्रस्थानानां मम द्विज! ।
सहस्रनाममन्त्राणां सूक्तोपनिषदामपि ॥ १२३ ॥

युगे युगे भाष्यकर्ता भविष्यसि ममाज्ञया ।
उपासनाकल्पशास्त्रं करिष्यसि तदा भुवि ।। १२४ ।।

स्वानन्दभवनं पश्चात् प्राप्स्यसि त्वं ममाज्ञया ।
एवमुक्त्वा गणेशानस्तिरोभूच्छक्तिसंयुतः ।। १२५ ।।

सुशीलो योगमार्गेण देहं त्यक्त्वा महामतिः ।
गर्गदेहसमुद्भूतभस्मनो विभुवीक्षणात् ।
संजातो गणनाथस्य मित्रोऽभून्मुनिसत्तमः ।। १२६ ।।

इति द्वादशवार्षिकोपासनविधिनिरूपणम्

## सेवनविधिनिरूपणम्

नारदादय ऊचुः—

आलये गणनाथस्य ब्रूहि नस्सेवने विधिम् ।

सूर्य उवाच—

आलयं गणनाथस्य गत्वा भक्तिपुरस्सरम् ।
सन्निधिस्थवाहनं तं मूषकं प्रार्थयेन्नरः ।। १२७ ।।

सर्वान्तर्यामिन् भगवन्! ईश्वराव्यक्तविग्रह! ।
प्राणिनां हृदये स्थित्वा भोगभोक्तासि चोरवत् ।।१२८

सेवार्थं गणनाथस्य वाहरूपं समास्थित! ।
अनुज्ञां गणनाथस्य सेवार्थं दातुमर्हसि ।। १२९ ।।

ततो गत्वा गणेशानसन्निधिं भक्तपुङ्गवः ।
'गणानान्त्वे'ति मन्त्रैर्वा श्लोकैः पौराणिकैश्च वा ।।१३०।।

स्वमूर्ध्नि कुट्टनं कृत्वा शतान्तं च यथामति ।
नत्वा प्रक्रमणं कृत्वा पुनर्नत्वा यथामति ॥ १३१ ॥

स्तुत्वा जप्त्वा पुनर्नत्वा नमनोन्नमनं ततः ।
कृत्वाभूत्कुट्टनं मूर्ध्नां ततः कृत्वा प्रदक्षिणम् ॥ १३२ ॥

चण्डं च भैरवं वापि विज्ञाप्य सन्निधिं व्रजेत् ।
गजाननपदाम्भोजपरिस्फुरितमानस! ॥ १३३ ॥

सेवाफलं गणेशस्य देहि चण्ड! नमोस्तु ते ।
नग्नभैरव! देवेश! दुष्टशिक्षाविधायक! ॥ १३४ ॥

सेवाफलं गणेशस्य देहि भैरव! ते नमः ।
देवस्य सन्निधौ स्थित्वा गणकं प्रर्थयेत्ततः ॥ १३५ ॥

हंस! हंस! महाभाग! गणनाथस्य पुत्रक! ।
योगिहृत्पद्मनिलय! हंसमन्त्रार्थवाचक! ॥ १३६ ॥

सहस्रारांम्बुजगत! गणक! ब्रह्मणस्पतेः ।
यद्यत्कृतं मया प्रीत्यै गणराजस्य ब्रह्मणः ॥ १३७ ॥

तत्सर्वं कृपया देव! पुस्तके तव लेखय ।
ततो गत्वा बहिर्द्वारं गोपुरस्य विसर्जयेत् ॥ १३८ ॥

उपविश्य द्वारपालान् सेवाकर्तुस्सुरक्षकान् ।
द्वारपाला! महावीरा! महाशूरपुरोगमाः! ॥ १३९ ॥

संस्थिता द्वारदेशेषु गणेशाज्ञाप्रपालकाः! ।
मया निर्वर्तिता यूयं गच्छध्वं तस्य सन्निधिम् ॥१४०॥

सेवनं विधिहीनं तत्तामसं परिकीर्तितम् ।
प्रदक्षिणनमस्कारा ह्यष्टोत्तरशता वराः ॥ १४१ ॥

मध्यमाश्चेति कथिता एकविंशतिसंख्यकाः ।
अधमा द्वादश प्रोक्ता त्रयो वै अधमाधमाः ॥ १४२ ॥

इति सेवनविधिनिरूपणम्

## सिद्धिलक्ष्म्यादीनां भेदकथनम्

**नारदादय ऊचुः—**

शक्तिमायामहालक्ष्मीशब्दैस्सिद्धिं वदन्त्युत ।
पार्वतीं शक्तिशब्देन लक्ष्मीशब्देन भार्गवीम् ।। १४३ ।।

वदन्ति वेदतत्त्वज्ञा भेदं तासु वद प्रभो! ।

**सूर्य उवाच—**

रमा भूमी रतिर्गौरी प्रभाम्बा योगरूपिणी ।
समष्टिसंज्ञका माया सिद्धिरित्यभिधीयते ।। १४४ ।।

मायानामपि माया सा संयोगानन्दरूपिणी ।
आसां च नामभिस्सिद्धिरतो वेदेषु गीयते ।। १४५ ।।

लक्ष्मीशब्दः द्वयोः प्रोक्तः रमासिद्ध्योः श्रुतौ द्विजाः! ।
सिद्धिशब्दो महासिद्धेः न रमायाः प्रकीर्तितः ।।१४६।।

महासिद्धिर्विष्णुपत्न्या साक्षादात्मस्वरूपिणी ।
शक्तिशब्दः एवमेव शक्तेस्सिद्धेः प्रकीर्तितः ।। १४७ ।।

सिद्धिशब्दस्तु न प्रोक्तः वेदे शक्तेर्द्विजोत्तमाः! ।
एवं प्रभारतीभूमिगौर्याद्याः परिकीर्तिताः ।। १४८ ।।

शक्तिलक्ष्मीसुसंयोगरूपिणी सिद्धिनायिका ।
इति प्राहुर्गाणपतास्तुरीयब्रह्मवादिनः ।
तत्तु सत्यं न सन्देह इति योगविदो विदुः ।। १४९ ।।

इति सिद्धिलक्ष्म्यादीनां भेदकथनम्

## बुद्धिवाण्यादीनां भेदकथनम्

नारदादय ऊचुः—

गौरीवाणीमहामायाशब्दैर्बुद्धिं वदन्त्युत ।
गौरीशब्देन गिरिजां वाणीशब्देन भारतीम् ।। १५० ।।

वदन्ति वेदतत्त्वज्ञा भेदमासु वद प्रभो! ।

सूर्य उवाच—

उमा रमा रतिः प्रज्ञा वाचां संयोगरूपिणी ।
समष्टिसंज्ञिका माया महाबुद्धिर्न संशयः ।। १५१ ।।

आसां च नामभिर्बुद्धिस्स्तूयते श्रुतिषु द्विजाः! ।
न स्तूयन्ते बुद्धिनाम्ना शक्तयस्ताश्श्रुतौ क्रमात्।।१५२।।

ब्रह्ममाया द्विधा भिन्ना सिद्धिबुद्धीति भेदतः ।
पत्याश्रयेण तासां तु ज्ञायते भेद उत्तमः ।। १५३ ।।

स्त्रीदेवतानां सर्वासां नामभिः कथ्यते श्रुतौ ।
महासिद्धिस्तथा बुद्धिर्न सिद्धिर्बुद्धिनामभिः ।। १५४ ।।

कथ्यते च तथा बुद्धिर्नोच्यते सिद्धिनामभिः ।
सरस्वती पराशक्तिः संयोगरूपिणीति च ।। १५५ ।।

बुद्धिं प्राहुर्गाणपतास्तुरीयब्रह्मवादिनः ।
मायानां परमा माया बुद्धिर्ज्ञानस्वरूपिणी ।। १५६ ।।

ब्रह्मणो भोगशक्तिस्सा दक्षिणाङ्कमुपाश्रिता ।
बुद्धेरपि मोहदात्री सिद्धिर्मायामयी परा ।। १५७ ।।

बुद्धेरप्युद्योगकर्त्री सिद्धिर्बुद्धेस्समाश्रयात् ।
जगतां सर्जनादीनि करोति ब्रह्मवल्लभा ।। १५८ ।।

सिद्धिं वाञ्छन्ति सर्वेऽपि ब्रह्मण्यपि जगत्सु च ।
विना बुद्धिं न सा लभ्या जगद्ब्रह्म समाश्रिता ॥१५९॥

सर्वत्र कारणं बुद्धिस्तन्नियन्ता गजाननः ।
सर्वकर्त्री सर्वदात्री सिद्धिरेव न संशयः ॥ १६० ॥

इति बुद्धिवाण्यादीनां भेदकथनम्

## दूर्वादिश्रैष्टचतुलसीनिन्द्यकारणनिरूपणम्

नारदादय ऊचुः—

दूर्वां शमीं च मन्दारं श्वेतार्ककुसुमं तथा ।
प्रशंसन्ति गाणपताः पूजने ब्रह्मणस्पतेः ॥ १६१ ॥

तथा निन्दन्ति तुलसीं कारणं तत्र नो वद ।

सूर्य उवाच—

जगतामन्नशक्तिस्तु दूर्वा चेति प्रकीर्त्यते ।
जगद्भोगप्रदं चान्नमिति वेदेषु कथ्यते ॥ १६२ ॥

ब्रह्मभोगप्रदा माया सिद्धिबुद्धिस्वरूपिणी ।
ब्रह्माण्डे मूर्तियुक्तस्य लीलया लोकहेतवे ॥ १६३ ॥

भोगार्थमन्नशक्तिं च समास्थाय परात्परा ।
गणेशशासनादेव दूर्वा शप्ता पराम्बया ॥ १६४ ॥

तृणरूपसुसंयुक्ता पत्ररूपा बभूव सा ।
अतः प्रियतरा दूर्वा गणेशस्य बभूव सा ॥ १६५ ॥

शमी तु प्रकृतिः प्रोक्ता श्वेतार्कः पुरुषस्स्मृतः ।
मन्दारस्तु तुरीयस्स्यादिति वेदविदो विदुः ॥ १६६ ॥

श्वेतार्ककुसुमं चापि मन्दारकुसुमं तथा ।
शमीपत्रं गणेशस्य प्रियाण्यासन् द्विजोत्तमाः! ।।१६७।।
स्त्रीणां पत्रं तु पुष्पं च पुंसां वृक्षस्वरूपिणाम् ।
वरं प्रोक्तं तेन पत्रपुष्पाणि कथितानि च ।। १६८ ।।
देहमोहप्रदा माया तुलसी विष्णुवल्लभा ।
विष्णुशापेन वृक्षत्वं प्राप्य स्वांशेन संस्थिता ।। १६९।।
देहमोहविरहितं गणेशं प्रमथेश्वरम् ।
शिवपुत्रं गणपतिं मोहयितुमुपाक्रमत् ।। १७० ।।
नार्हा भव गणेशस्य ब्रह्मणां ब्रह्मणस्पतेः ।
इति शापं ददौ तस्या भिया सा केशवं ययौ ।।१७१ ।।
अनर्हा सा गणेशस्य बभूव देहमोहदा ।
ब्रह्ममस्तकसंयुक्तस्स्वानन्देशो गजाननः ।। १७२ ।।
जगद्गता विष्णुमुखास्स्मृता मायामुखा इति ।
एक एव गणेशानो ब्रह्ममस्तकधारकः ।। १७३ ।।
मायामुखानां सर्वेषामर्हं स्यात्तुलसीदलम् ।
ब्रह्ममस्तकयुक्तस्य नार्हं तु तुलसीदलम् ।। १७४ ।।
धिक्कृता गणनाथेन तेन निन्द्या प्रपूजने ।
आराध्य गणपं पश्चात् योगमार्गमुपाश्रिता ।। १७५ ।।
विनायकचतुर्थ्यां वै एकविंशतिपत्रकैः ।
अर्हत्वं पूजने प्राप्ता गृहदेववरिष्ठताम् ।। १७६ ।।
बृन्दया रहितं वेश्म वैष्णवानां तथैव च ।
अदीक्षितानां सर्वेषां श्मशानसदृशं स्मृतम् ।। १७७ ।।
शिवपुत्रशापयुता बृन्दा माया तु मोहदा ।
ब्रह्ममूर्ध्ने गणेशाय निन्द्या जाता द्विजोत्तमाः! ।।१७८।।

इति दूर्वादिश्रैष्ठ्यतुलसीनिन्द्यकारणनिरूपणम्

## भूतशुद्धिकथनम्

नारदादय ऊचुः—

भूतशुद्धयादिकं ब्रूहि जपपूजनहेतवे ।

सूर्य उवाच—

आसनं परिकल्प्यैव चेलाजिनकुशोत्तरैः ।
गजाननं सिद्धिबुद्धी गणकं गाणपान् द्विजान् ।। १७९ ।।

नत्वोपविश्यासने तु भूतशुद्धिं समाचरेत् ।
मूलाधारे गणपतिं सिद्धिबुद्धिसमन्वितम् ।। १८० ।।

ओंकारपीठे संविष्टं ध्यात्वा तत्पीठसंश्रिताम् ।
निद्राविष्टां कुण्डलीं तां समुत्थाप्य तदग्निना ।।१८१।।

सुषुम्णारन्ध्रमार्गेण ब्रह्मरन्ध्रगतां स्मरेत् ।
अन्तःकरणगाभासरूपं जीवं हृदि स्थितम् ।। १८२ ।।

हंसमन्त्रेण संयोज्य द्वादशान्तगतेन वै ।
ब्रह्मणा सह पश्चात्तु साधको मनसा स्मरेत् ।। १८३ ।।

पादादिजानुपर्यन्तं चतुष्कोणं सवज्रकम् ।
लंबीजाढ्यं स्वर्णवर्णं नाभ्यन्तं जलमण्डलम् ।। १८४ ।।

वंबीजयुक्तं श्वेताभमर्द्धचन्द्रस्वरूपकम् ।
नाभेर्हृदयपर्यन्तं त्रिकोणं वह्निमण्डलम् ।। १८५ ।।

रंबीजाढ्यं रक्तवर्णं भ्रूमध्यान्तं तु हृत्स्थलात् ।
यंबीजाढ्यं धूम्रवर्णं षट्कोणं वायुमण्डलम् ।। १८६ ।।

भ्रूमध्याद् ब्रह्मरन्ध्रान्तं वृत्तं स्वच्छं मनोहरम् ।
हंबीजयुक्तमाकाशमण्डलं च विचिन्तयेत् ।। १८७ ।।

एवं विचिन्त्य भूतानि क्रमेण पृथिवीं जले ।
जलं वह्नौ तं तु वायौ पवनं व्योम्नि वै क्रमात् ।। १८८

आकाशं ब्रह्मणि परे गुणेशाने विलापयेत् ।
जीवाक्षी स्वयं भूत्वा चिन्तयेत् पापपूरुषम् ।। १८९ ।।

वामकुक्षौ स्थितं कृष्णमङ्गुष्ठपरिमाणकम् ।
ब्रह्महत्याशिरोयुक्तं कनकस्तेयबाहुकम् ।। १९० ।।

मदिरापानहृदयं गुरुतल्पकटीयुतम् ।
तत्संसर्गपदद्वन्द्वमुपपातकरोमकम् ।। १९१ ।।

खड्गचर्मधरं दुष्टमधोवक्त्रं सुदुस्सहम् ।
वायुबीजं स्मरन्वायुं संपूर्यैनं विशोषयेत् ।। १९२ ।।

स्वशरीरयुतं मन्त्री वह्निबीजेन निर्दहेत् ।
वायुना भस्म निस्सार्य बहिर्देशे ततः परम् ।। १९३ ।।

सुधाबीजेन संप्लाव्य सर्वाङ्गं भावयेत् क्रमात् ।
स्मृत्वा गुणेशमात्मानं व्योमादीनि क्रमेण च ।। १९४ ।।

तत्तद्बीजेन जातानि स्थानेषु पूर्ववत्स्मरेत् ।
'सोहं'मन्त्रेण चात्मानं जीवं तु स्थापयेद्धृदि ।।१९५।।

ब्रह्मरन्ध्रात्कुण्डलं तु मूलाधारे तु स्थापयेत् ।
आधारे गणपं ध्यात्वा भूतशुद्धिं समापयेत् ।। १९६ ।।

इति भूतशुद्धिकथनम्

## प्राणप्रतिष्ठानिरूपणम्

नारदादय ऊचु —

प्राणप्रतिष्ठां नो ब्रूहि देवानां स्वात्मनस्तथा ।

सूर्य उवाच—

प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराः ।
ऋषयस्तस्य छन्दांसि चतुर्वेदाः प्रकीर्तिताः ॥ १९७ ॥

प्राणशक्तिर्देवता स्यात् स्थापने विनियोगकः ।
आं बीजं तु ह्रीं शक्तिः क्रों तस्य कीलकं स्मृतम् ।
ह्रामित्यादिदीर्घषट्कैष्षण्न्यासाः परिकीर्तिताः ॥१९८॥

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यंकुशं पञ्चबाणान् ।
बिभ्राणा सृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

पाशांकुशौ समुच्चार्य यादिहान्तं तु बीजकान् ।
'सोऽहं हंसं' तु तत्पश्चात् मूलं तु दशवारकम् ॥२००॥

'जीव इह स्थित' इति ततश्चैवं क्रमेण च ।
'प्राणास्तिष्ठन्तु चात्रे'ति तत एतत्क्रमेण च ॥२०१॥

'उक्त्वेन्द्रियाणि सर्वाणि तिष्ठन्त्वि'ति ततः परम् ।
'असुनीते' वेदमन्त्रं स्पृष्ट्वा बिम्बं सकृज्जपेत् ॥२०२॥

'असुनीते' पुनरस्मासु चक्षुः
पुनः प्राणमिह नो देहि भोगम् ।
ज्योक् पश्येम सूर्यमुच्चरन्त-
मनुमते मृलय३ नस्स्वस्तीति ॥ २०३ ॥

गर्भाधानादिसंस्कारसिद्ध्यर्थं प्रणवं जपेत् ।
ततष्षोडशवारं तु तावन्मूलमनुं जपेत् ॥ २०४ ॥

इति प्राणप्रतिष्ठानिरूपणम्

## गणेशमातृकान्यासनिरूपणम्

नारदादय ऊचुः—

ब्रूहि नो मातृकान्यासं कृपया वेदकीर्तितम् ।

सूर्य उवाच—

मातृकान्यासमन्त्रस्य ब्रह्मदेवो ऋषिस्स्मृतः ।
छन्दस्तु देवी गायत्री मातृका देवता स्मृता ।। २०५ ।।

अंबीजं तु ऋच्छक्तिरेच वै कीलकं स्मृतम् ।
अपर्गाद्यैश्च षड्वर्गैर्न्यासाश्च परिकीर्तिताः ।। २०६ ।।

पञ्चाशद्वर्णभेदैर्विहितवदनदोःकक्षपादाक्षिदेहां
भास्वत्कपर्दापिहितशशिकलामिन्दुकुन्दावदानाम् ।
अक्षस्रक्कुम्भचिह्नां लिखितवरकराम्बजसंस्थां त्रिनेत्रा-
मच्छाकल्पोज्वलाङ्गीं स्तनजघनभरां भारतीं तां नमामि।।

मूर्धफालनेत्रकर्णनासारन्ध्रेषु तत्परम् ।
कपोलोष्ठदन्तजिह्वाचिबुकेषु क्रमेण च ।। २०८ ।।

अकारादि बीजरूपस्वरैस्संपुटितं मनुम् ।
एकाक्षरं न्यस्येन्मन्त्री नमोन्तेन समन्वितम् ।। २०९ ।।

एवं कवर्गपुटितं बाहौ दक्षिणके वरे ।
मूले मध्येऽग्रदेशे तले पृष्ठे क्रमेण च ।। २१० ।।

चवर्गपुटितं वामे चैवमेव न्यसेद् बुधः ।
ऊरुमूले जानुमध्ये जङ्घायां गुल्फके तथा ।। २११ ।।

पादे चापि न्यसेत् पादद्वये मन्त्री क्रमेण च ।
टवर्गेण तवर्गेण कटिपृष्ठद्वयेऽपि च ।। २१२ ।।

पार्श्वद्वये पृष्ठमध्ये पवर्गपुटितं न्यसेत् ।
लिङ्गे बस्त्यां नाभिदेशे चोदरे हृदये तथा ।। २१३ ।।

गले स्कन्धद्वये चैव पुटितं शेषवर्णकैः ।
गलपृष्ठे लकारेण मेरुणा ब्रह्मरन्ध्रके ।। २१४ ।।

एवं बाह्ये मातृकाणां न्यासः प्रोक्तो मनीषिभिः ।
वक्ष्यमाणश्लोकमार्गादान्तरे पुटिता चरेत् ।। २१५ ।।

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के ।
वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हं क्षं तत्त्वार्थरूपं सकलमनुवृतं वर्णरूपं नमामि ।।२१६

आधारेषु पङ्कजानां दलेषु तत्र कीर्तितैः ।
वर्णैश्च पुटितं न्यासं कुर्याद् गाणपतः क्रमात् ।।२१७।।

इति गणेशमातृकान्यासनिरूपणम्

## मन्त्रन्यासकथनम्

नारदादय ऊचुः—

मन्त्रन्यासं गणेशस्य वद नो देशिकोत्तम! ।

सूर्य उवाच—

शिरोवक्त्रकण्ठवक्षोबाहूदरस्थलेषु च ।
पृष्ठे लिङ्गे गुदे चोरुजानुपादद्वयेषु च ।। २१८ ।।

'गणानां त्वा' मन्त्रपदानि विन्यसेन्मन्त्रिसत्तमः ।
ऋषिच्छन्दोदेवबीजशक्तिरेकमनोरपि ।। २१९ ।।

मूर्द्धास्यहृदयबीजपादेषु च न्यसेत्क्रमात् ।
गायत्र्याश्च सप्तपदानि मूर्द्धास्यहृदयेषु च ।। २२० ।।

नाभौ चोर्वोश्च जान्वोश्च पादयोरपि विन्यसेत् ।
एवं न्यासाश्च कथिता गाणेशोपनिषत्सु च ।
अन्ये न्यासास्तान्त्रिकाश्च वैदिकानामनर्हकाः ।।२२१ ।।

इति मन्त्रन्यासादिकरणम्

## द्वारपूजनिरूपणम्

नारदादय ऊचुः—

द्वारपूजाक्रमं ब्रूहि गणेशस्य दिनेश्वर! ।

सूर्य उवाच—

शूरश्चैव महाशूरो बलश्च प्रबलस्तथा ।
वीरश्चैव महावीरो जयश्च विजयस्तथा ।। २२२ ।।

बहिर्गोपुरद्वाराणां चतुर्णां पालकास्स्मृताः ।
द्वितीयगोपुरस्यैव मांजालीश्रीरमेश्वराः ।। २२३ ।।

विरजा पार्वती शम्भुराश्रया शक्तिकामपाः ।
मुक्ता प्रभा भास्करश्च पूर्वादिद्वाररक्षकाः ।। २२४ ।।

तदन्तर्गोपुरद्वारे चतुर्णां वीरसत्तमाः ।
क्रूरबौद्धिलक्षलाभाः कथिता भीमविक्रमाः ।। २२५ ।।

त्रिषु चैकसालसंस्थान् सालद्वयगतांश्च वा ।
सालत्रयस्थितान्वापि पूजयेद्द्वारपूजने ।। २२६ ।।

सर्वत्र सर्वदा देवो गणेशस्सिद्धिबुद्धियुक् ।
अन्तर्गृहद्वारपालौ पुत्रकौ लक्षलाभकौ ।। २२७ ।।

अग्रे तु मूषको देवस्तिष्ठति भक्तपुङ्गवः ।
एते वै सर्वदा पूज्याः पूजने ब्रह्मणस्पतेः ।। २२९ ।।

गणेशस्य पद्ममयी ह्यसत्स्वानन्दरूपिणी ।
सत्स्वानन्दसंज्ञं तु वाहनं ब्रह्मणस्पतेः ।। २३० ।।

समं च सहजं ब्रह्म पुत्रकौ लक्षलाभकौ ।
स्वानन्देशानुभवदसमाधिरूपिणी परा ।। २३१ ।।

महाबुद्धिरिति प्रोक्ता ब्रह्मभूयप्रदायिनी ।
महासिद्धिरिति प्रोक्ता शक्तिस्ते ब्रह्मणस्पतेः ।।२३२।।

इति द्वारपूजानिरूपणम्

शङ्खकलशपूजानिरूपणम्

नारदादय ऊचुः—

कलशस्य पूजनं मे कृपया वद भास्कर! ।

सूर्य उवाच—

सुधापूरितकलशं कलशं चेति कथ्यते ।
अमृतं सद्ब्रह्म सूर्यः असत्कलशरूपकः ।। २३३ ।।

जलयुक्तं तु कलशं शक्तिसूर्यात्मकं स्मृतम् ।
अतो वै कलशं वेदे सर्वरूप इति स्मृतम् ।। २३४ ।।

कलशस्य मुखे रुद्रः कण्ठे विष्णुस्समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणास्स्मृताः ।।२३५।।

कुक्षौ च सागरास्सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदस्सामवेदोऽप्यथर्वणा ।। २३६ ।।

अङ्गैश्च सहितास्सर्वे कलशाम्बुसमाश्रिताः ।
गङ्गे च यमुने तुङ्गे गोदावरि सरस्वति ।। २३७ ।।

कावेरि नर्मदे सिन्धो जलेऽस्मिन् सन्निधिं कुरु ।
संप्रार्थ्यैवं सर्वतीर्थं कमण्डलुसमुद्भवम् ।। २३८ ।।

आवाह्य पूजयेद्भक्त्या गन्धाक्षतसुपुष्पकैः ।
मूलमन्त्रेण तत्तीर्थं दश जप्त्वाभिमन्त्रयेत् ।। २३९ ।।

विशेषरूपकं शङ्खं जलेनानेन पूरयेत् ।
संपूज्य शङ्खं पश्चात्तु प्रार्थयेद्विधिपूर्वकम् ।। २४० ।।

शङ्खं शक्त्यर्कदैवत्यं कुक्षौ वरुणदैवतम् ।
पृष्ठे ब्रह्मात्मकं प्रोक्तमग्रे गङ्गा सरस्वती ।। २४१ ।।

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
पूजितस्सर्वदेवैस्त्वं पाञ्चजन्य! नमोऽस्तु ते ।। २४२ ।।

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवस्समिन्धते ।
विश्वस्यां विशि प्रविविशिवाँ समीमहे स नो मुञ्चत्वंहसः ।।

ऋचा शङ्खं सुसंप्रार्थ्य सर्वं संप्रोक्षयेज्जलैः ।
विशेषार्घ्यपात्रमिति शङ्खं तु परिकीर्तितम् ।। २४४ ।।

शङ्खमध्ये स्थितं तोयं हेरम्बोपरि भ्रामितम् ।
अङ्गलग्नं गाणपानां ब्रह्महत्यायुतं दहेत् ।
इति पूजासमाप्तौ तु कर्तव्यं द्विजसत्तमाः ! ।। २४५ ।।

इति शङ्खकलशपूजानिरूपणम्

## गणेशनित्यपूजानिरूपणम्

नारदादय ऊचुः—

नित्यपूजाविधौ कल्पं ब्रूहि नो ब्रह्मणस्पतेः ।

सूर्य उवाच—

पूजार्थं गणनाथस्य कृत्वा संकल्पमादरात् ।। २४६ ।।
द्वारपूजां ततः कृत्वा घण्टाग्रे मूषकं विभुम् ।
संपूज्य घण्टां संप्रार्थ्य वक्ष्यमाणक्रमेण च ।। २४७ ।।

घण्टाग्रे वासुदेवस्तु जिह्वायां तु सरस्वती ।
पादयोर्ब्रह्मरुद्रौ च पादमूले तु भास्करः ।। २४८ ।।
पञ्चदेवात्मिकां घण्टां विभाव्य त्रिगुणात्मिकाम् ।
'आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।। २४९ ।।
कुर्वे घण्टारवं ह्यत्र देवताह्वानलाञ्छनम्' ।
इत्युक्त्वा भक्तिभावेन कुर्याद् घण्टारवं नरः ।।२५०।।

वेदान्तविद्याखिलविश्वदेह!
विभो! गणेशान! परात्मवक्त्र! ।
गुणेश! पञ्चेश्वरदेववन्द्य!
कवाटमुद्घाटय विघ्नराज! ।। २५१ ।।

एवं मन्त्रं समुच्चार्य कवाटोद्घाटनं चरेत् ।
मूलमन्त्रं ततो जप्त्वा पूजयेत् कलशं ततः ।। २५२ ।।
शङ्खपूजां पीठपूजां कृत्वा भावपुरस्सरम् ।
'उत्तिष्ठ ब्रह्मणस्पते' मन्त्रेणोत्थापनं चरेत् ।। २५३ ।।

'प्रैतु ब्रह्मणस्पते'ति पीठे संस्थापयेत् क्रमात् ।
मूलमन्त्रोक्तध्यानेन हृदि ध्यात्वा गजाननम् ।। २५४ ।।

मानसपूजाकल्पेन पूजयेद्विघ्ननायकम् ।
महागणेशसूक्तेन 'गणानां त्वे'ति मन्त्रतः ।। २५५ ।।

आवाहयेच्च हृद्देशाद् बिम्बमध्ये गजाननम् ।
अभिमन्त्र्य मूलमन्त्रैर्दशवारं ततः परम् ।। २५६ ।।

महागणेशगायत्र्या संस्पृशेत् प्रतिमां ततः ।
केवलं वेदऋग्भिर्वा सूक्तऋग्भिरथापि वा ।। २५७ ।।

द्वाभ्यां वा मूलमन्त्रैश्च उपचाराः प्रकीर्तिताः ।
'ओमित्येकाक्षरं ब्रह्म' 'नतमंहो' ततः परम् ।। २५८ ।।

दश जप्त्वा मूलमन्त्रं स्वर्णसिंहासनं ददेत् ।
'शन्नो देवी' 'त्वया वयमु'क्त्वा मूलेन चाद्यकम् ।।२५९

'अन्यानुदो' गायत्र्या च ददेदर्घ्यं परात्मने ।
'यो नं त्वान्य' व्याहृतिभिराचामत्रयमादिशेत् ।।२६०।।

'अश्मास्य' 'मधुवाता' मन्त्राभ्यां मधुपर्ककम् ।
'सनाता' कांश्चित्सूक्तैश्च स्नापयेत् परमेश्वरम् ।।२६१।।

'ऋतज्येन' 'युवाभ्यां' ददेद्वस्त्रत्रयं प्रभोः ।
'वसं नयेन' सिन्दूरं भूषणं ब्रह्मणस्पतेः ।। २६२ ।।

'यज्ञोपवीतं' 'यो वीर' यज्ञसूत्रे प्रकीर्तिते ।
'ब्रह्मणस्पतेरभवद्' 'गन्धद्वारां' सुगन्धकम् ।। २६३ ।।

'ब्रह्मणस्पते सुयमस्य विश्वहा' चन्दनोपरि ।
'इन्धानो' नाममन्त्रैश्च पुष्पार्चनमथाचरेत् ।। २६४ ।।

गणेशं सिद्धिबुद्धी च लक्षलाभौ च मूषकम् ।
अर्चयेत्सर्वपूजासु गणेशादीन् तथावृतौ ।। २६५ ।।
अर्चनं च सदा कार्यमष्टाढ्यचशतनामभिः ।
'वीरेभि''र्धूर्वंधूपञ्च' 'सिन्धुर'द्दीप्यद्दीपकम् ।। २६६ ।।
'तस्मा अर्षन्ति प्राणाय' निवेदनमुदीरितम् ।
'तस्मा इद्विश्वे' ताम्बूलं स इत्स्वर्णपुष्पकम् ।। २६७ ।।
दूर्वार्चनं ततः कार्यमेकविंशतिनामभिः ।
मूलमन्त्रजपश्चापि कृत्वा नीराजनं चरेत् ।। २६८ ।।
'यो अस्मै' 'सोमो वा' 'न तत्र सूर्यकेति' च ।
'तमुज्येष्ठं' 'न कर्मणा' शीर्षैः पुष्पाञ्जलिं ददेत् ।।
'इयं वा' प्रक्रमे प्रोक्तं 'सक्तुमिव' सूक्तमन्त्रकाः ।
पौराणिका नमस्कारे ह्यादेयद्धृदिवेशिवने ।। २७० ।।
'अग्निर्येने'ति चायं 'बिम्बयन्त'मभिमर्शने ।
अर्घ्यं दत्वा च पूजान्ते गणानां तु बलिं ददेत् ।
वैश्वयुतैर्भक्त्या बलिस्तु वैश्वदेहके ।। २७१ ।।

इति गणेशनित्यपूजाविधिनिरूपणम्

## सिद्धिपूजानिरूपणम्

नारदादय ऊचु.—

महासिद्धिपूजने तु मन्त्रान् नो ब्रूहि भास्कर ! ।

सूर्य उवाच—

द्वारपीठादिकं सर्वं कथितं च गणेशवत् ।
लक्ष्मीसूक्तेन श्रीसिद्धिं बिम्बे चावाहयेन्नरः ।। २७२ ।।

'हिरण्यवर्णा'मासने च 'ताम्म' पाद्ये प्रकीर्तितम् ।
'अश्वपूर्वा'मर्घ्यदाने 'कांसोस्मिता'श्चाचमनीयके ।।२७३

'चन्द्रां प्रभासां' स्नाने च श्रीसूक्तमपि कीर्तितम् ।
तथा लक्ष्मीसूक्तमपि 'ह्यादित्य' वस्त्रदानके ।। २७४ ।।

'उपैतु मां' यज्ञसूत्रसिन्दूरभूषणेषु च ।
'गन्धद्वारां' गन्धदाने 'क्षुत्पिपासां' तथाक्षते ।। २७५ ।।

'मनसः' पुष्पपत्रादिदानेऽपि परिकीर्तितम् ।
अर्चनं नामसाहस्रैस्त्रिशतीशतनामभिः ।। २७६ ।।

'कर्दमेने'व धूपे वै 'आपस्सृजन्तु' दीपके ।
'आर्द्रां यः करिणीं' सिद्धेर्नैवेद्ये परिकीर्तितम् ।।२७७ ।।

ताम्बूले स्वर्णपुष्पे च तदेव परिकीर्तितम् ।
'आर्द्रां पुष्करिणीं' सिद्धेर्नीराजनसुकर्मणि ।। २७८ ।।

'ताम्म' मन्त्रपुष्पदाने प्रक्रमे नमने तथा ।
'श्रियं लक्ष्मीं' च कथितं शेषं गाणपवत्स्मृतम् ।।२७९।।

इति सिद्धिपूजानिरूपणम्

## बुद्धिपूजानिरूपणम्

नारदादय ऊचुः—

महाबुद्धिपूजनेऽपि मन्त्रान् नो वद भास्कर! ।

सूर्य उवाच—

मेधासूक्तेन श्रीबुद्धिं बिम्बे चावाहयेन्नरः ।
'प्र॒णो दे॒वी'त्यास॒ने वै 'आ॒नो॒ दि॒व'सु॒प॒द्यके ।। २८० ।।

'पावकान'स्तथा चार्घ्ये 'चोदयित्र्या'चमे स्मृता ।
'महो अर्ण'स्तथा स्नाने मेधावाक्सूक्तके तथा ।।२८१।।

'चत्वारि वाग्'वस्त्रदाने 'यद्वाग्वदन्ति'भूषणे ।
यज्ञसूत्रे च सिन्दूरे 'देवीं वाचं' सुगन्धके ।। २८२ ।।

'उत त्वपश्य'न्नक्षतायां पुष्पे 'चाम्बितमे' स्मृतम् ।
शतत्रिशतिसाहस्रनामभिश्चापि चार्चनम् ।। २८३ ।।

'वाचं देवे'ति धूपे तु 'वागक्षरं तु' दीपके ।
'अनन्तानन्ता'न्नैवेद्ये ताम्बूले स्वर्णपुष्पके ।। २८४ ।।

'यामृषयो' नीराजे 'ससर्परि' सुमन्त्रके ।
'ससर्परि' प्रक्रमे च नमने चापि कीर्तिता ।। २८५ ।।

मेधासूक्तेन वा कार्या नमस्कारा विधानतः ।
सिद्धिबुद्धिगणेशानां पूजाकर्मणि सत्तमैः ।। २८६ ।।

सर्वोपचाराः कर्तव्या दशमूलजपेन च ।
वेदमन्त्रज्ञानहीनैः केवलं मूलमन्त्रकैः ।। २८७ ।।

कर्तव्यं पूजनं चेति प्रावदद् गणको गुरुः ।
लक्षलाभमूषकानां गणकाव्यक्तयोस्तथा ।। २८८ ।।

कार्यं पुरुषसूक्तेन पूजनं परमादरात् ।
ब्राह्मणस्पत्यका मन्त्रा गणेशस्य प्रिया मताः ।।२८९।।

गुणेशस्य तथा प्रोक्ता मन्त्राः पौरुषसूक्तकाः ।
गाणपानि च सूक्तानि शस्तानि च द्वयोरपि ।। २९० ।।

इति बुद्धिपूजानिरूपणम्

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये चतुर्दशोऽध्यायः

## पञ्चदशोऽध्यायः

### षट्पञ्चाशत्क्षेत्रनामकथनम्

नारदादय ऊचुः—

गाणेशेष्वपि क्षेत्रेषु मुख्यानि ब्रूहि भारते ।

सूर्य उवाच—

भूमिस्वानन्दनगरं मयूरेशपुरं स्मृतम् ।
सर्वक्षेत्रम् इति प्रोक्तं सर्वाभीष्टप्रदायकम् ॥ १ ॥

अष्टदिक्षु भारतेषु प्रान्तेषु सागरस्य च ।
अष्टविघ्नेशक्षेत्राणि तिष्ठन्ति गणपाज्ञया ॥ २ ॥

कालभेदाद्भिन्ननामसंयुतानि भवन्ति च ।
त्रीण्युत्तरे संस्थितानि हिमालयसमीपतः ॥ ३ ॥

वक्रतुण्डपुरं चेकदन्तं महोदरं तथा ।
गजवक्त्रपुरं चैव विकटं विघ्नराजकम् ॥ ४ ॥

लम्बोदरं धूम्रवर्णं पुरं चेति श्रुतानि वै ।
अदोषाख्यं च परिली विद्याधीशपुरं तथा ॥ ५ ॥

पल्ली च पारिनेत्रं च विज्ञानेशपुरं तथा ।
सिद्धिक्षेत्रं स्थावरं च विजयाख्यपुरं तथा ॥ ६ ॥

एलापुरं च गाणेशं काशी च कश्यपाश्रमम् ।
जीर्णापुरं नामलं च फालचन्द्रं प्रवालकम् ॥ ७ ॥

कर्मेशं राजसदनं कदम्बपुरसंज्ञिकम् ।
अयोध्या मिथिला माया गण्डकी मणिपूरकम् ॥ ८ ॥

प्रयागा पुष्पनगरमवन्ती नर्मदापुरम् ।
माहिष्मती कर्णपुरं कौण्डिन्यपट्टणं तथा ।। ९ ।।

पाराशरं गजपुरं श्रीपुरं बदरीवनम् ।
अम्बापुरं पुण्यपुरं माद्रकं वल्लभेश्वरम् ।। १० ।।

ब्रह्मपुरं सिद्धिपुरं फलिनी गणपट्टणम् ।
त्रिसन्ध्या देवनगरं श्वेतविघ्नेशपट्टणम् ।। ११ ।।

मन्दारमपि श्वेतार्कक्काननं च शमीवनम् ।
गजदन्तपुरं रत्नगिरिश्च वारणावतम् ।। १२ ।।

विन्ध्याद्रिर्नासिकाक्षेत्रं तथा बर्हिष्मतीपुरम् ।
षट्पञ्चाशच्च क्षेत्राणि भारते प्रवराणि च ।। १३ ।।

उपक्षेत्राणि चैतेषां तिष्ठन्ति बहूनि वै ।
सप्तद्वीपेषु वर्षेषु खण्डेषु च मुनीश्वराः! ।। १४ ।।

अष्टविघ्नेशक्षेत्रैश्च मायूरं संस्थितं भवेत् ।
यस्मिन् देशे गाणपतं क्षेत्रं पौराणिकं न हि ।
तदनार्यस्थलं प्रोक्तं निवासान्निरयप्रदम् ।। १५ ।।

इति षट्पञ्चाशत्क्षेत्रनामकथनम्

## क्षेत्रमहिमवर्णनम्

नारदादय ऊचुः—

क्षेत्राणां वैभवं चापि संग्रहेण वद प्रभो! ।

सूर्य उवाच—

भीमाया दक्षिणे तीरे कृष्णानद्यास्तु चोत्तरे ।
कमण्डलुनदीतीरे मयूरेश्वरपट्टणम् ।। १६ ।।

गाणपतेषु क्षेत्रेषु तदेव श्रेष्ठमीरितम् ।
जननान्मरणाच्चैव दर्शनात् स्मरणात्तथा ।। १७ ।।

मोक्षदं हि मयूरेशनगरं सर्वदेहिनाम् ।
प्रलये यत्र विघ्नेशस्सहस्रदलपङ्कजे ।। १८ ।।

चतुर्विधमिदं विश्वमुपसंहृत्य च लीलया ।
कर्णिकायां दिव्यतल्पे सुष्वाप सिद्धिबुद्धियुक् ।। १९ ।।

सृष्ट्यादौ पञ्चदेवेभ्यो वेदेभ्यो विश्वलीलया ।
मूर्तियुक्तो दर्शनं च दत्वा कृत्यानि वै ददौ ।। २० ।।

वधार्थं सिन्धुदैत्यस्य प्रादुर्भूतो धरातले ।
अकरोद्यत्र वसतिं चिरकालं मयूरराट् ।। २१ ।।

शुकमुद्गलभरतपूर्वैस्सिद्धैस्सुपूजितः ।
सर्वक्षेत्रैस्सर्वदेवैस्सर्वतीर्थैर्मुनीश्वरैः ।। २२ ।।

अनुग्रहार्थं लोकानां तत्र तिष्ठति विघ्नपः ।
स्मरणात्सर्वकामानां पूरकोऽयं मयूरपः ।। २३ ।।

कोटिकोटिकोटिकोटिकोटिकोटिप्रमाणतः ।
काशिक्षेत्रादिक्षेत्रेभ्यो वरं प्रोक्तं न संशयः ।। २४ ।।

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
तद्रहस्यमहं वेद्मि वेत्त्ययं नग्नभैरवः ।। २५ ।।

शिवा वेत्ति शिवो वेत्ति केशवो वेत्ति वा न वा ।
एतादृशवैभवाढ्यं मयूरेश्वरपट्टणम् ।। २६ ।।

काञ्चीपुरं गणेशस्य वक्रतुण्डस्थलं स्मृतम् ।
आदिविघ्नेश्वरस्तत्र सिद्धिबुद्धिसमन्वितः ।। २७ ।।

त्रिमूर्तिवरदातायं मत्सरासुरनाशकः ।
सिद्धिबुद्धिपतिमुखास्तिष्ठन्ति मूर्तयोऽपि च ।। २८ ।।

आग्नेयदिक्तटे क्षेत्रमेकदन्तस्थलं वरम् ।
रामेश्वरसमीपे तु महोदरस्थलं स्मृतम् ।। २९ ।।

नैरृतौ केरले देशे गजवक्त्रस्थलं स्मृतम् ।
पश्चिमाम्बोधितीरे तु लम्बोदरस्थलं वरम् ।। ३० ।।

वायव्ये गिरिमूले तु विकटस्य स्थलं महत् ।
उत्तरे गिरिराजस्य मूले विघ्नपतेस्स्मृतम् ।। ३१ ।।

ऐशान्यां गिरिराजस्य मूले धूम्रस्थलं स्मृतम् ।
कलामयानि क्षेत्राणि मायूरस्याष्टसत्तमाः! ।। ३२ ।।

षोडशांशवैभवाढ्यं मायूरस्य न संशयः ।
अदोषाख्यं महत्क्षेत्रं विदर्भदेशके स्मृतम् ।। ३३ ।।

शमीवनं तु तत्रैव शमीमूले गणेश्वरः ।
दशबाहुयुतो देवः शमीगणपतिः प्रभुः ।। ३४ ।।

वक्रतुण्ड इति प्रोक्तस्तत्रैव गणनायकः ।
वरदो वामनस्यैव वामनो गणनायकः ।। ३५ ।।

गौरीगर्भसमुद्भूतो गणेशः परिलीवने ।
विद्याधीशपुरे देवो हेरम्बो राघवार्चितः ।। ३६ ।।

सिन्धुदेशे पल्लिपुरे बल्लालगणनायकः ।
भक्तियोगावतारमूर्तेर्बल्लालस्येष्टदायकः ।। ३७ ।।

पारिनेत्रे मङ्गलेशो भौमेन पूजितो विभुः ।
गोदावरीतटे सिद्धिक्षेत्रं चन्द्रसुपूजितम् ।। ३८ ।।

फालचन्द्रगणेशानो पञ्चकन्यापतिः प्रभुः ।
सिद्धिक्षेत्रे परे विष्णुपूजितस्सिद्धिविघ्नपः ॥ ३९ ॥
विज्ञानेशपुरं गोदावरीतीरे स्थलं वरम् ।
ज्ञानेश्वरस्य क्षेत्रं तत् दत्तयोगिप्रपूजितम् ॥ ४० ॥

स्थावरे गणनाथस्तु चिन्तामणिरिति स्मृतः ।
ब्रह्मणाराधितः पूर्वं कौण्डिन्येन ततः परम् ॥ ४१ ॥
मणिपूरे गणेशानो महागणपतिस्स्मृतः ।
त्रिपुरासुरनाशार्थं शंकरेण प्रपूजितः ॥ ४२ ॥

विजयाख्ये पुरे देवः कालानलविनायकः ।
तत्रैव पार्श्वपुत्रस्य विघ्नराजस्थलं स्मृतम् ॥ ४३ ॥
जीर्णापुरसमीपे तु लेखनाद्रौ गणेश्वरः ।
गिरिजासुत इत्येव विश्रुतो गिरिजार्चितः ॥ ४४ ॥
बङ्गालविषये स्थानं गणेशस्य प्रविश्रुतम् ।
त्रिपुरेण पूजितोऽयं प्रवालनगरे वरे ॥ ४५ ॥
सहस्रार्जुनशेषाभ्यां प्रवालगणनायकः ।
आशापूरकविघ्नेशो नामले क्षेत्रसत्तमे ॥ ४६ ॥
भ्रुसुण्डिनार्चितो देवस्सदने राजपूजिते ।
वरेण्यतनयो देवो राजपुत्रस्तथैव च ॥ ४७ ॥

एलापुरे तु लक्षेशस्स्कन्देनैव प्रपूजितः ।
काश्यां तु डुण्ढिविघ्नेशो दुरासदविनाशकः ॥ ४८ ॥
कश्यपस्य सुतो देवो विनायक इति श्रुतः ।
आश्रमे कश्यपस्यैव काशीक्षेत्रसमीपतः ॥ ४९ ॥

कर्मेश्वरे स्थले देवो मल्लालः कपिलात्मकः ।
कमलासुरसंहर्ता प्रोक्तः कमलविघ्नपः ।। ५० ।।

चिन्तामणिगणेशानो सुरेन्द्रेण प्रपूजितः ।
कदम्बनगरे क्षेत्रे देशे वै दर्भसंज्ञके ।। ५१ ।।

अयोध्यानगरे क्षेत्रे देवो गणपतिस्स्मृतः ।
सूर्यवंशसमुद्भूतैः पूजितो भक्तिभावतः ।। ५२ ।।

मिथिलायां गणेशानो दूर्वागणपतिस्स्मृतः ।
त्रिशिराजनकादीनां ब्रह्मज्ञानप्रदायकः ।। ५३ ।।

गण्डकीनगरे देवो चक्रपाणिप्रपूजितः ।
मयूरेशस्सिद्धिबुद्धिकल्याणसुन्दरस्स्मृतः ।। ५४ ।।

मायापुरे गणेशानो दक्षानुग्रहकारकः ।
ओंकारगणनाथस्तु प्रयागायां प्रकीर्तितः ।। ५५ ।।

कपिलेन स्थापितोऽयं पूर्णयोगसुसिद्धये ।
पाटलीनगरप्रान्ते वने पृष्ठकसंज्ञिके ।। ५६ ।।

वरदाख्यगणेशस्तु देवो गृत्समदार्चितः ।
आवन्त्यकपुरक्षेत्रे गणेशो मुक्तिदायकः ।। ५७ ।।

नर्मदाभूमिभागे तु क्षेत्रं तु नर्मदापुरम् ।
तस्मिन् क्षेत्रे गणपतिश्शोणभद्रविनायकः ।। ५८ ।।

माहीष्मत्यां गणपतिर्हैहयैः परिपूजितः ।
कर्णपूरे शूर्पकर्णः कौण्डिन्यपट्टणे वरे ।। ५९ ।।

वरदो दक्षराजस्य कौण्डिन्यपट्टणे स्मृतः ।
सौराष्ट्रे देवनगरे सोमकान्तवरप्रदः ।। ६० ।।

पाराशरे गणेशानः पराशरसुतस्स्मृतः ।
हस्तिनानगरे देवो गजाकारसमुद्भवः ।। ६१ ।।

काश्मीरे तु श्रीनगरे देवो लक्ष्मीगणेश्वरः ।
अम्बापुरे गणेशानो हेरम्बोऽम्बासुतस्स्मृतः ।। ६२ ।।

बदरीवनपार्श्वेषु नानाक्षेत्राणि सन्ति च ।
नारायणनरव्यासमुखानां वरदायकः ।। ६३ ।।

तथा पुण्यपुरे क्षेत्रे धर्मसिद्धिप्रदो विभुः ।
माद्रके गणनाथस्तु प्रोक्तः क्षिप्रप्रसादनः ।। ६४ ।।

वल्लभेशस्य क्षेत्राणि सन्त्यष्ट भारतेऽखिले ।
वल्लभेशपुरं तेषु मुख्यं चेति प्रकीर्तितम् ।। ६५ ।।

तथा ब्रह्मपुरे क्षेत्रे देवो ब्रह्मगणाधिपः ।
सिद्धाश्रमे गणेशानस्सर्वसिद्धिप्रदायकः ।। ६६ ।।

मन्दारविपिने चेरे मन्दारगणनायकः ।
श्वेतार्कविपिने देवो मद्रे श्वेतार्कविघ्नपः ।। ६७ ।।

फलिनीविपिने प्रोक्तः षण्मुखो गणनायकः ।
षण्मुखाख्यनदीतीरे पूजितष्षण्मुखेन च ।। ६८ ।।

हरिद्रागणनाथस्तु कथितो गणपट्टणे ।
त्रिसन्ध्याक्षेत्रके देवो गुणेशश्शक्तिनन्दनः ।। ६९ ।।

श्वेतविघ्नेशनगरे चोले श्वेतविनायकः ।
गजदन्तपुरं प्रोक्तं केरले गजकानने ।। ७० ।।

गजदन्तगणेशानो नानाखेलकरः प्रभुः ।
कोङ्कणे रत्नगिर्यां तु रत्नगर्भगणेश्वरः ।। ७१ ।।

विन्ध्याद्रौ शक्तिविघ्नेशो दुर्गागणपतिस्तथा ।
नासिकायां गणेशानो मदोत्कट इति स्मृतः ।। ७२ ।।

पूजितो मन्मथेनैव पूर्ववद्देहलब्धये ।
गजदन्तगणेशानः कथितो वारणावते ।। ७३ ।।

बर्हिष्मत्यां गणेशानः कथितो ब्रह्मणस्पतिः ।
पञ्चषष्टिक्षेत्राकाणि मुख्यान्यद्य स्मृतानि च ।। ७४ ।।

मयूरेशं वरं क्षेत्रं सर्वाधारमिति स्मृतम् ।
अष्ट विघ्नेशक्षेत्राणि तदुपक्षेत्राकाणि च ।। ७५ ।।

उपक्षेत्राणि सप्ताद्य ह्येकैकस्य स्मृतानि च ।
एकैकस्य क्षेत्रस्य षट्पञ्चाशत् स्मृतानि च ।
अनेकानि च क्षेत्राणि शैवादिक्षेत्रसंश्रयात् ।। ७६ ।।

इति क्षेत्रमहिमनिरूपणम्

## उत्सवक्रमनिरूपणम्

नारदादय ऊचुः—

मायूरादिषु क्षेत्रेषु नित्यपूजोत्सवादिकम् ।
कथं कार्यं गणेशस्य तद् ब्रूहि दिननायक! ।। ७७ ।।

सूर्य उवाच—

उषःकाले गणेशस्य पूजनं सौरमीरितम् ।
प्रातःकाले पद्मजस्य पूजनं सौरमीरितम् ।। ७८ ।।

प्रदोषे तु पराशक्ते रात्रौ तु केशवस्य च ।
अर्द्धयामे सिद्धिबुद्धयोः पूजनं चेति कीर्तितम् ।। ७९ ।।

उषःकालादिकालेषु षट्सु वै ब्रह्मणस्पतिम् ।
सूर्याद्यान् पञ्चदेवांश्च सार्थं च पूजयन्ति वै ॥ ८० ॥

भूमिस्वानन्दनगरे मयूरेशं गजाननम् ।
सर्वेष्वपि च क्षेत्रेषु गाणपेषु न संशयः ॥ ८१ ॥

अभिषेकस्तु कर्तव्यो विशेषदिवसेषु च ।
विशेषेण गणेशस्य चतुर्थ्योरपि पर्वसु ॥ ८२ ॥

शुक्लपक्षचतुर्थ्यां तु कर्तव्यो वरदोत्सवः ।
संकष्टहारकस्यैव चतुर्थ्यां कृष्णपक्षके ॥ ८३ ॥

एकाक्षरगणपतेस्स्वानन्देशस्य ब्रह्मणः ।
सिद्धिबुद्धियुतस्यैव कार्यो मासोत्सवः क्रमात् ॥ ८४ ॥

आरभ्य श्रावणे शुक्लचतुर्थी विधिपूर्वकम् ।
भाद्रपदचतुर्थ्यन्तं दिने तस्मिन् रथोत्सवः ॥ ८५ ॥

पञ्चम्यामवभृथकं कथितं शास्त्रकोविदैः ।
कार्तिके कृष्णपक्षस्य प्रतिपद्दिवसे वरे ॥ ८६ ॥

मार्गशीर्षे शुक्लपक्षषष्ठचन्तं तु विधानतः ।
एकविंशद्दिनं कार्यो गणेशस्य महोत्सवः ॥ ८७ ॥

सप्तम्यां त्ववभृथं स्यादुत्सवस्य मुनीश्वराः! ।
चिन्तामणिद्वीपपतेरुत्सवोऽयं प्रकीर्तितः ॥ ८८ ॥

विनायकद्वितीयाया चैत्रे तु सिद्धिमङ्गलम् ।
विनायकदशम्यां तु वैशाखे बुद्धिमङ्गलम् । ८९ ॥

स्थलाभिमानमूर्तेस्तु वैशाखे तु महोत्सवः ।
अथवा स्थलमूर्तेस्तु कार्यास्सर्वोत्सवाः क्रमात् ॥ ९० ॥

जन्मोत्सवस्तु प्रथमे द्वितीये बालकौतुकम् ।
तृतीये सर्वविधार्थैः पूजनं परिकीर्तितम् ।। ९१ ।।

सञ्चारस्तु बहिर्देशे चतुर्थे परिकीर्तितम् ।
कल्याणं सिद्धिबुद्ध्योश्च पञ्चमे परिकीर्तितम् ।। ९२ ।।

इष्टपूर्तिस्स्वाश्रितानां षष्ठे वै कथितं बुधैः ।
सप्तमे दैत्यनाशं स्यादष्टमे सर्वतोषणम् ।। ९३ ।।

महोत्सवस्तु नवमे दशमेऽवभृथं स्मृतम् ।
मासेष्वपि च सर्वेषु प्रोक्तश्चायं महोत्सवः ।। ९४ ।।

चतुर्थीतिथिमारभ्य कर्तव्यो मुनिसत्तमाः! ।
रथोत्सवश्चतुर्थ्यां तु गणेशस्य यथा भवेत् ।। ९५ ।।

तथा पूर्वं समारभ्य कर्तव्योऽयं महोत्सवः ।
आज्ञासभा तु स्वानन्दे कर्तव्यः प्रथमेऽहनि ।। ९६ ।।

द्वितीयदिवसे देवस्सिंह्यारूढो भवेत्ततः ।
तृतीये शेषसंरूढश्चतुर्थे शिखिवाहनः ।। ९७ ।।

पञ्चमे मूषकारूढष्षष्ठे तु शिबिकागतः ।
सप्तमे तु गजारूढो ह्यष्टमे तुरगे स्थितः ।। ९८ ।।

नवमे तु रथारूढो भवेदेव महोत्सवे ।
वक्रतुण्डादिमूर्तीनामष्टानां दिवसेषु च ।। ९९ ।।

स्वानन्देशस्य नवमे कथितोऽयं महोत्सवः ।
एवमुत्सवमार्गश्च कथिता मुनिसत्तमाः! ।। १०० ।।

इत्युत्सवक्रमनिरूपणम्

## स्थलतारतम्यकथनम्

नारदादय ऊचुः—

स्थलानां तारतम्यं च वद नो दिननायक! ।

सूर्य उवाच—

स्वायम्भुवं तथा दिव्यं ब्राह्ममार्षञ्च चासुरम् ।
भाक्तं च मानवं चेति सप्तधा गाणपं स्थलम् ॥१०१॥

इच्छया गणनाथस्य संभूतं स्थलमुत्तमम् ।
स्वायम्भुवमिति प्रोक्तं गणकेन पुरा मम ॥ १०२ ॥

पञ्चदेवादिदेवैश्च तपसा निर्मितं स्थलम् ।
दिव्यमित्येव कथितं ब्रह्मविष्णुमहेश्वरैः ॥ १०३ ॥

पञ्चभिर्व सर्वदेवैस्सह वा मुनिभिस्सह ।
स्थलं ब्राह्ममिति प्रोक्तं दिव्यं तु त्रिविधं मतम् ॥

शिवादिपञ्चदेवैस्तु निर्मितं तु पृथक् पृथक् ।
दिव्येशमिति विख्यातमिन्द्रादिदेवनिर्मितम् ॥ १०५ ॥

दिव्यामरमिति प्रोक्तं गन्धर्वनागपूर्वकैः ।
कृतं दिव्यमिति प्रोक्तं दैत्यराक्षसपूर्वकैः ॥ १०६ ॥

आसुरं चेति कथितं सिद्धयोगिमुनीश्वरैः ।
आर्षमित्येव कथितं रचितं क्षेत्रमुत्तमम् ॥ १०७ ॥

आविर्भूय मर्त्यकुले भक्त्युपासनसिद्धिगैः ।
बल्लालपूर्वगैर्भक्त्या रचितं भाक्तमीरितम् ॥ १०८ ॥

देवप्रसादसिद्ध्यर्थं मानवैस्स्थापितं वरम् ।
मानवं चेति कथितं गणकेन महात्मना ॥ १०९ ॥

गाणेशेष्वपि क्षेत्रेषु भूमिः स्वानन्दपट्टणम् ।
स्वायम्भुवमिति प्रोक्तं सम्भूतं स्वेच्छया प्रभोः ॥ ११०

अष्टविघ्नपक्षेत्राणि ब्राह्माणि वेदवाक्यतः ।
काशीमणिपुरादीनि दिव्यानि द्विजोत्तमाः! ।। १११ ।।

कदम्बश्वेतविघ्नेशपूर्वाणि च पराणि वै ।
दिव्यामरस्थलान्येव प्रवालपूर्वकाणि च ।। ११२ ।।

दिव्यानि विजयादीनि ह्यार्षाणि मुनिसत्तमाः! ।
गणेशपुरपूर्वाणि चासुराणि न संशयः ।। ११३ ।।

पल्लिकर्मपुरादीनि भाक्तानि द्विजसत्तमाः ! ।
मानवानि स्थलान्यत्र न स्मृतानि च योगिभिः ।। ११४

निर्मातॄणां तु तपसा क्षेत्राणां मुनिसत्तमाः! ।
सिद्धिप्रभावभेदेन क्षेत्रवैभवमस्ति च ।। ११५ ।।

मानवेभ्यश्च क्षेत्रेभ्यो दानवीयं वरं स्मृतम् ।
तेभ्यो दिव्यं वरं प्रोक्तमेभ्यश्च भाक्तमुत्तमम् ।।११६।।

दिव्यामरमतश्श्रेष्ठं तस्मादार्षं वरं स्मृतम् ।
अस्माद्दिव्यं वरं श्रेष्ठं ततो ब्राह्मं प्रकीर्तितम् ।।११७।।

सर्वेभ्यश्च वरं स्थानं स्वायम्भुवमिति स्मृतम् ।
भूमिस्वानन्दनगरात् क्षेत्रं नास्ति त्रिविष्टपे ।। ११८ ।।

एकेन कालभेदेन स्थलं भिन्नं जगत्तले ।
भिन्नकार्यसुसिद्ध्यर्थं निर्मितं च भवेद्द्विजाः! ।। ११९ ।।

इति स्थलतारतम्यकथनम्

## क्षेत्रेषु पूजाधिकारिनिरूपणम्

नारदादय ऊचुः—

केषु केषु स्थलेष्वेव पूजने केऽधिकारिणः ।

सूर्य उवाच—

मानवेषु स्थलेष्वेव शूद्रा वै मूर्तिपूजने ।
अधिकारिण इति च कथिता भक्तितत्पराः ॥ १२० ॥

अन्यस्थलेषु सर्वेषु वर्णत्रयसमुद्भवाः ।
स्वात्मार्थपूजने विप्रा अधिकारिण ईरिताः ॥ १२१ ॥

परार्थपूजने क्षत्रवैश्यजातिसमुद्भवाः ।
नाधिकारयुताः प्रोक्ताः परार्थपूजने क्षितौ ॥ १२२ ॥

ब्राह्मणाः पदजाश्चापि ह्यधिकारसमन्विताः ।
मर्त्यस्थलं विनाऽन्यत्र पदजा नाधिकारिणः ॥ १२३ ॥

महाविशेषदीक्षाढ्या वेदमार्गेण वैदिकाः ।
गार्ग्यकल्पानुसारेण द्विजानां तु त्रिवर्णिनाम् ॥ १२४ ॥

वेदकर्मरतानां तु गाणेशानां महात्मनाम् ।
ऋत्विग्भावं समास्थाय पूजने चाधिकारिणः ॥१२५॥

आलयेषु च सर्वेषु प्राहैवं गणको गुरुः ।
प्रतिलोमानुलोमजानां शूद्राणां तु स्थलेषु च ॥ १२६ ॥

ऋत्विग्भावं प्रसोढुं वै गुरवश्चाधिकारिणः ।
गाणेशब्राह्मणा लोके गुरवश्चेति कीर्तिताः ॥ १२७ ॥

तन्त्रशास्त्रानुसारेण तेषां तु पूजनं स्मृतम् ।
तेषां हिताय कथितं तन्त्रं वैनायकं वरम् ।
गणकेन पुरा विप्राः! लोकानां हितकाम्यया ॥ १२८ ॥

इति क्षेत्रेषु पूजाधिकारिनिरूपणम्

## गुरूणां जन्मकथनम्

नारदादय ऊचुः—

गाणेशब्राह्मणोत्पत्तिं कृपया वद भास्कर! ।

सूर्य उवाच—

गुरुश्च परमगुरुः परात्परगुरुस्तथा ।
परमेष्टिगुरुश्चैव परब्रह्मगुरोर्विभोः ॥ १२९ ॥

गणकस्यैव शिष्यास्ते केशसूर्यांशसम्भवाः ।
द्वापरापरसन्ध्यासु काले कृतयुगस्य च ॥ १३० ॥

अनुग्रहार्थं लोकानां गुणेशस्यैव शासनात् ।
कश्यपात्रिभरद्वाजकौशिकानां कुलेऽभवन् ॥ १३१ ॥

अधीत्य वेदशास्त्राणि ब्रह्मचर्यं समास्थिताः ।
समावर्तनकं कृत्वा तपोमार्गरता बभुः ॥ १३२ ॥

तेषां पितरः कन्याः निश्चित्य दारकर्मणि ।
आगत्य पुत्रान् ददृशुः तपसि संस्थितान् तथा ॥१३३॥

किञ्चित्कालं प्रतीक्ष्यैव कर्तव्यं दारकर्म च ।
इति प्राहुः कन्यकानां पितृभ्यो ब्राह्मणोत्तमाः! ॥१३४॥

असंस्कृता कन्यकास्ता दशमाब्दे सुदैवताः ।
रजोयुक्ता बभूवुश्च पितरस्तेन दुःखिताः ॥ १३५ ॥

बभूवुश्च गुरूणां तु चतुर्णां गणको गुरुः ।
प्रदत्वा दर्शनं प्रीत्या प्रावदद्धर्षपूर्वकम् ॥ १३६ ॥

मनोभावस्तु भवतां मया ज्ञातो न संशयः ।
युष्मदर्थं कन्यकाश्च तिष्ठन्ति च निमन्त्रिताः ॥ १३७॥

इदानीं ताश्च संभूता रजोयुक्ताः पितुर्गृहे ।
अनर्हा ग्रहणे ताश्च विधिवद्दारकर्मणि ॥ १३८ ॥

गान्धर्वविधिना तासु समुत्पाद्य सुतान् वरान् ।
पश्चादागत्य सन्यासग्रहणे चाधिकारिणः ॥ १३९ ॥

भविष्यथ शासनान्मे सद्य एव न संशयः ।
एवं गणकशासनं ते श्रुत्वा गत्वा तदाज्ञया ॥ १४० ॥

उत्पाद्य तासु पुत्रांश्च पुत्रीश्चापि पृथक् पृथक् ।
तासामनुमतेनैव पितॄणां च मतेन च ॥ १४१ ॥

गणकाश्रमपदं गत्वा तमेव शरणं ययुः ।
सन्यासं प्राप्य गणकाद्दिव्यज्ञानसमन्विताः ॥ १४२ ॥

लोकेषु पूज्यतां प्रापुर्योगसिद्धा मुनीश्वराः ।
चतुर्णां वंशजा मर्त्या लोकेषु गुरवस्स्मृताः ॥ १४३ ॥

चतुर्णां शासनेनैव तन्त्रमार्गानुसारिणः ।
गाणेशब्राह्मणास्ते वै गाणेशस्थलमाश्रिताः ॥ १४४ ॥

गणेशपूजानिरताः प्रतिलोमानुलोमयोः ।
शुद्राणामपि गुरवो बभूवुर्भूतले द्विजाः! ॥ १४५ ॥

पठने वेदशास्त्राणां कथिता नाधिकारिणः ।
वेदमात्रजपे ते वै कथिताश्चाधिकारिणः ॥ १४६ ॥

उद्वाहादिषु सर्वेषु स्मार्तकेषु द्विजोत्तमैः ।
उक्तवेदमनून् वक्तुं कथिताश्चाधिकारिणः ॥ १४७ ॥

जपार्चनपूर्वकाणि तान्त्रिकाणि न संशयः ।
औपासनपूर्वकाणि नास्ति तेषां द्विजोत्तमाः! ॥१४८॥

तन्त्रशास्त्रेषु कथितस्तेषां कर्मक्रमो द्विजाः! ।
गुरूणां वंशजा एते गणेशब्राह्मणा वराः ॥ १४९ ॥

गुरवश्चेति कथिता तन्त्राचारपरा भुवि ।
एवं गुरूणां जन्माद्याः कथितास्सङ्ग्रहेण च ॥ १५० ॥

इति गुरूणां जन्मकथनम्

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे
सिद्धिबुद्धिहृदये पञ्चदशोऽध्यायः

## षोडशोऽध्यायः

### चिन्तामणिद्वीपवर्णनम्

नारदादय ऊचुः—

कारणब्रह्मलोकाख्यं कार्यस्वानन्दसंज्ञिकम् ।
कुत्र तिष्ठति नो ब्रूहि कृपया विघ्ननायक! ॥ १ ॥

सूर्य उवाच—

ब्रह्माण्डं व्याकृतं विप्राः! पाञ्चभौतिकरूपकम् ।
अष्टावरणसंयुक्तमिति वेदविदो विदुः ॥ २ ॥

महदव्यक्ताहङ्कारा जाग्रदादित्रिरूपकाः ।
त्रिदेहाभिमानधराः पञ्चदेवात्मकास्स्मृताः ॥ ३ ॥

जाग्रत्स्वाप्नसुसौषुप्तब्रह्मणां त्रिविधात्मनाम् ।
महिमा प्रतिब्रह्माण्डे ब्रह्मलोक इति स्मृतः ॥ ४ ॥

अयं कार्यब्रह्मलोको न तु कारणमुच्यते ।
एवं चानेककोटीनि ब्रह्माण्डानि परात्मनः ॥ ५ ॥

गुणेशस्यैव देहे तु तिर्यगूर्ध्वमयं क्रमात् ।
लम्बन्ते गुणपश्चायं तुरीयधारकस्स्मृतः ॥ ६ ॥

गुणेशस्यैव महिमा वेदादिषु विशेषतः ।
कारणब्रह्मलोकोऽयमित्येव परिकीर्तितः ॥ ७ ॥

गुणेशः कथ्यते वेदे प्रज्ञाभेदेन पञ्चधा ।
तुर्यदेहमयी प्रज्ञा प्रथमा तत्र कीर्तिता ॥ ८ ॥

तद्देहाभिमानधरप्रज्ञा क्षेत्रज्ञसंज्ञिका ।
द्वितीया चेति कथिता द्वयोस्साम्यस्वरूपिणी ॥ ९ ॥

देहजीवसमा तावदधरा प्रोक्ता तृतीयका ।
अधिकृच्च त्रयाणां वै चतुर्थी कथिता बुधैः ।। १० ।।

चतुर्णामपि संयोगे प्रज्ञा सा पञ्चमी स्मृता ।
पञ्चप्रज्ञायुतश्चायं गुणेशस्तुर्यधारकः ।। ११ ।।

अस्यैव महिमा वेदे प्रज्ञाभेदेन पञ्चधा ।
प्रोक्तत्वात्सद्गतश्चायं पञ्चधा परिकीर्तितः ।। १२ ।।

तुर्यदेहमयी माया स्वरूपं ब्रह्मतुर्यकम् ।
शाक्तं ब्रह्मेति कथितं तत्राभिमानधारकम् ।। १३ ।।

जीवभावधरं तुर्यं सौरं ब्रह्मेति कथ्यते ।
उभयोस्समभावाढ्यं वैष्णवं ब्रह्म कथ्यते ।। १४ ।।

तुरीयं शाम्भवं ब्रह्म त्रयाणां कारणात्मकम् ।
चतुर्विधानां संयोगरूपकं गाणपं मतम् ।। १५ ।।

पञ्चमं चेति कथितं वेदशास्त्रविशारदैः ।
एवं तुरीयं ब्रह्मैव प्रज्ञाभेदेन पञ्चधा ।। १६ ।।

अम्बिका भास्करो विष्णुर्महेशो गणनायकः ।
एवं नाममूर्तियुक्तो बभूव स्वपदे विभुः ।। १७ ।।

कारणब्रह्मलोके तु महिमा कमलापतेः ।
त्रिपाद्विभूतिवैकुण्ठभवनं चेति कीर्तितम् ।। १८ ।।

तथा विभूतिकैलासो लोकस्स्यात् पार्वतीपतेः ।
सर्वलोकमणिद्वीपं पराशक्तेः प्रकीर्तितम् ।। १९ ।।

परसूर्यलोक एव भास्करस्य प्रकीर्तितः ।
चतुर्णामपि संयोगमहिमारूपकम् वरम् ।। २० ।।

चिन्तामणिद्वीपमिति कथ्यते वेदपारगैः ।
कारणब्रह्मलोके तु तुरीयस्थितिरूपके ॥ २१ ॥

मध्ये चिन्तामणिद्वीपं चतुस्संयोगरूपकम् ।
विष्णुशम्भुशक्तिसूर्यलोकाः पूर्वादिदिक्षु च ॥ २२ ॥

तिष्ठन्ति द्वारभूताश्च पुरुषार्थपदेषु च ।
एक एव गुणेशानो यथा वै पञ्चधा स्मृतः ॥ २३ ॥

तस्य लोकस्तथा वेदे पञ्चधा परिकीर्तितः ।
चिन्तामणिद्वीपवरं तेषु मध्ये प्रतिष्ठितम् ॥ २४ ॥

इक्षुसागरमध्यस्थं तुर्यज्योतिस्स्वरूपकम् ।
इच्छया गणनाथस्य निरालम्बेन तत्स्थितम् ॥ २५ ॥

चिन्तामणिमयै रत्नैर्निर्मितं द्वीपमुत्तमम् ।
तेन चिन्तामणिद्वीपमिति तत्स्थानमुच्यते ॥ २६ ॥

सृष्टयादिक्रीडासक्तस्य गणेशस्य स्थलं स्मृतम् ।
चिन्तामणिद्वीपसंज्ञं परं ज्योतिस्स्वरूपकम् ॥ २७ ॥

मूलस्थानं तु तन्मध्ये चिन्तामणिमये गृहे ।
मध्यदेशे गुणेशानश्चतुर्भुजविराजितः ॥ २८ ॥

गजाननस्त्रिनयनः फालचन्द्रः पिचण्डिलः ।
शक्तिद्वययुतस्तत्र ज्योतिर्मध्ये तु तिष्ठति ॥ २९ ॥

गजाकारो वामपार्श्वे समष्टिभावधारकः ।
तथैव दक्षिणे पार्श्वे व्यष्टिभावधरो विभुः ॥ ३० ॥

नराकारः परं ज्योतिस्स्वरूपेण विराजतः ।
ज्ञानस्थाने गणेशानो दशबाहुविराजितः ॥ ३१ ॥

श्वेतवर्णस्तथाज्ञायां दशबाहुविराजितः ।
रक्तवर्णश्च सर्वत्र दिव्यसिह्मासनोपरि ।। ३२ ।।

पद्मासने तु किञ्जल्ककर्णिकासु सुसंस्थिताः ।
तीव्रादिशक्तयस्ताभिर्धृते पीठे गुणेश्वरः ।। ३३ ।।

सन्तिष्ठति दिव्यरूपधरश्शक्तिसमन्वितः ।
मूलस्थाने गणेशानस्सिद्धिबुद्धिसमन्वितः ।। ३४ ।।

पाशांकुशफलरदमोदकान् पञ्चहस्तकैः ।
धारको हेमवर्णाढ्यो ह्यान्यवर्णैश्च संयुतः ।। ३५ ।।

ज्ञानस्थाने परंज्योतिर्मध्ये देवो गजाननः ।
श्वेतवर्णश्श्वेतवस्त्रभूषणादिविराजितः ।। ३६ ।।

अभयं कल्पवल्लीं च ज्ञानमुद्राक्षसूत्रके ।
पूर्णपात्रं मुद्गरं च कम्बुं च मातुलिङ्गकम् ।। ३७ ।।

कुठारं चूतकलिकां पुष्करे कलशं तथा ।
बिभ्राणो दशहस्तैश्च विद्याज्ञानप्रदायकः ।। ३८ ।।

त्रिनेत्रश्चन्द्रचूडाढ्यो दन्तैकपरिशोभितः ।
सरस्वतीमहालक्ष्मीशोभिपार्श्वद्वयान्वितः ।। ३९ ।।

एवं चाज्ञासभायां तु रक्तवर्णो गजाननः ।
बीजापूरं गदामिक्षुचापं शूलं सुदर्शनम् ।। ४० ।।

अब्जपाशोत्पलव्रीहिमञ्जरीश्च स्वदन्तकम् ।
धारको दशहस्तैश्च लक्ष्मीवाणीसमन्वितः ।। ४१ ।।

स्थानत्रययुतः प्रोक्तः प्रासादो गुणपस्य च ।
पृथक् पृथक् किंकराश्च त्रयेष्वपि प्रकीर्तिताः ।। ४२ ।।

प्रासादद्वारपालौ तौ षडास्यनग्नभैरवौ ।
प्रासादस्यास्य वामे तु सिद्धिलक्ष्म्याः प्रकीर्तितः ॥४३॥

दक्षिणे तु महावाण्या बुद्धिदेव्याः प्रकीर्तितः ।
पुरतो वाहनानां च पृष्ठे तु गणकस्य च ॥ ४४ ॥

धर्मार्थकाममोक्षाख्यमण्टपेषु चतुर्षु च ।
विष्णुशम्भुशक्तिसूर्यास्सेवन्ते संस्थिता मुदा ॥ ४५ ॥

विघ्नेशवीरशूराश्च वरदश्चेभवक्त्रकः ।
लम्बोदरश्चैकदन्तस्तथा क्षिप्रप्रसादनः ॥ ४६ ॥

एते वैनायकाः प्रोक्ता मित्रभावमुपाश्रिताः ।
दशायुधदेवताश्च तिष्ठन्ति तद्बहिस्स्थले ॥ ४७ ॥

रमया च रमेशानो गौर्या च गिरिजेश्वरः ।
रत्या च रतिनाथोऽपि भूम्या भूमिवराहकः ॥ ४८ ॥

पुष्टया च पुष्टिविघ्नेशः ततो वै परिकीर्तिताः ।
मोदो ऋद्धिशक्तियुतः प्रमोदस्तु समृद्धियुक् ॥ ४९ ॥

कान्तियुक्तस्तु सुमुखो दुर्मुखो मदनावती- ।
युतो विघ्नो महावीरो मदद्रवापतिर्वरः ॥ ५० ॥

विघ्नकर्ता द्राविणीशः ततो वै परिकीर्तिताः ।
वसुधारा वसुमती शङ्खपद्मनिधी ततः ॥ ५१ ॥

सर्वज्ञत्वमहासिद्धिर्सर्वेशत्वमयी तथा ।
अनादिबोधरूपा च ह्यलुप्तशक्तिरूपिणी ॥ ५२ ॥

स्वतन्त्रत्वमहासिद्धिरनन्तशक्तिरूपिणी ।
एवं षट्सिद्धयः प्रोक्तास्ततो वै तद्बहिस्स्थले ॥ ५३ ॥

ततो नानागणाः प्रोक्ता वीराश्चण्डपराक्रमाः ।
जया च विजया चैव नित्या च ह्यजिता तथा ॥५४॥

चण्डी विलासिनी चैव तथा चैव सुमङ्गला ।
अनन्ता चेति विख्याताश्शक्तयस्तद्बहिस्स्थले ॥५५॥

इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तथैव च ।
सुभगा ललिता काममालिनी कामिनी तथा ॥ ५६ ॥

सरस्वती तथा गौरी श्रीर्वागीश्वरी तथा ।
नलिनी चापि वामा च ज्येष्ठा रौद्री तथैव च ॥५७॥

वाक्सिद्धिश्च तिष्ठन्ति गुणेशाज्ञाप्रपालकाः ।
इन्द्राद्यायुधदेवाश्च तिष्ठन्ति वज्रपूर्वकाः ।
एवं चिन्तामणिद्वीपवर्णनं संग्रहात्स्मृतम् ॥ ५८ ॥

इति चिन्तामणिद्वीपवर्णनम्

## सिद्धिबुद्ध्यावरणकथनम्

नारदादय ऊचुः—

गुणेशावृतिदेवाश्च भवता परिकीर्तिताः ।
सिद्धिबुद्ध्योरपि तथा वद नो दिननायक! ॥ ५९ ॥

सूर्य उवाच—

अणिमाद्यष्टसिद्धिश्च धर्मसिद्ध्यादिसिद्धयः ।
महासिद्धेश्च किंकर्यो नानाधिकारसंयुताः ॥ ६० ॥

सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीस्सरस्वती ।
श्रीलक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना गजसंज्ञिका ॥ ६१ ॥

महासिद्धेर्महालक्ष्म्यामैत्रीभावमुपाश्रिताः ।
विद्यादेव्यः कलादेव्यो नानाधिपत्यसंयुताः ॥ ६२ ॥

महाबुद्धेस्सरस्वत्याः किंकर्यो वेदकीर्तिताः ।
बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
मेधा च मैत्रीभावश्च महाबुद्धिमुपाश्रिताः ॥ ६३ ॥

इति सिद्धिबुद्ध्यावरणकथनम्

## महागणपतिनवावरणस्तोत्रम्

नारदादय ऊचुः—

यथा स्वानन्दभवनवर्णनज्ञानसिद्धये ।
गणेशावरणस्तोत्रं भवता परिकीर्तितम् ॥ ६४ ॥

तथा चिन्तामणिद्वीपवर्णनज्ञानसिद्धये ।
गणेशावरणस्तोत्रं ब्रूहि नो दिननायक! ॥ ६५ ॥

सूर्य उवाच—

गजाननस्वरूपेण गणेशो गणनायकः ।
चिन्तामणिद्वीपमध्ये विशेषेण विहारकृत् ॥ ६६ ॥

तेनायं वेदशास्त्रेषु कार्यमूर्तिर्गणेशितुः ।
चिन्तामणिद्वीपपतिर्महागणपतिस्स्मृतः ॥ ६७ ॥

महागणपतिं चैनं भावयन्ति च गाणपाः ।
षडर्णमन्त्रवच्चास्य ध्यानादिकमुदीरितम् ॥ ६८ ॥

क्रीडासक्तगणाधीशकरशीकरपूरितम् ।
ऐक्षवाम्भोनिधिं वन्दे तरङ्गकुलसंयुतम् ॥ ६९ ॥

तस्य मध्ये द्वीपवर्यं नौमि रत्नशिलातलम् ।
सेवागतामराधीशयोगिसिद्धसमाकुलम् ॥ ७० ॥

पारिजातकसन्तानमन्दारहरिचन्दनान् ।
सकल्पवृक्षान् तत्रस्थान् नौम्यभीष्टफलप्रदान् ।। ७१ ।।

तत्र चिन्तामणिगृहे सहस्रस्तम्भराजिते ।
आज्ञास्थानमहं ध्याये नानागणनिषेवितम् ।। ७२ ।।

तत्र सिंह्मादिसिंह्मस्य चतुःपादसमन्वितम् ।
पूजयामि विभोः पीठमधर्माद्युपशोभितम् ।। ७३ ।।

तन्मध्ये लिपिसंयुक्तं पलाष्टकसमन्वितम् ।
षट्कोणचक्रमध्यस्थं त्रिकोणाङ्कितकर्णिकम् ।। ७४ ।।

वृत्तभूवलयोपेतविलसत्केसरान्वितम् ।
सर्वशक्त्याख्यकमलं गणेशस्यासनात्मकम् ।। ७५ ।।

तीव्रां च ज्वालिनीं नन्दां भोगदां कामरूपिणीम् ।
उग्रां तेजोवतीं सत्यां तथा विघ्नविनाशिनीम् ।। ७६ ।।

किञ्जल्ककर्णिकामध्ये सर्वाशशोणाङ्गवाससः ।
देवीर्वराभयकराः पीठशक्तिर्गणेशितुः ।। ७७ ।।

गणेशध्याननिरता पीठशक्तीश्च भावये ।
त्रिकोणान्तःकर्णिकायां वृत्ते ज्योतिस्स्वरूपके ।।७८।।

मध्यदेशे गणेशानं सुखासीनं शुचिस्मितम् ।
जपाकुसुमसंकाशं शुण्डादण्डविराजितम् ।। ७९ ।।

गजाननं जगद्वन्द्यं तुन्दिलं चन्द्रशेखरम् ।
उन्नतप्रपदं गूढगुल्फं संवृतपार्ष्णिकम् ।। ८० ।।

पीनजङ्घं श्लिष्टजानुं स्थूलोरुं प्रोल्लसत्कटिम् ।
निम्ननाभिं बृहद्बाहुं तुन्दिलं पीनवक्षसम् ।। ८१ ।।

पीनस्कन्धं कम्बुकण्ठं लम्बोष्ठं लम्बनासिकम् ।
भग्नवामरदं तुङ्गापसव्यदन्तं महाहनुम् ।। ८२ ।।

ह्रस्वनेत्रत्रयं लम्बकर्णं निबिडमस्तकम् ।
स्तबकाकारकुम्भाग्रं रत्नमौलिं निरङ्कुशम् ।। ८३ ।।

सर्पहारकटीसूत्रं सर्पयज्ञोपवीतिनम् ।
सर्पकोटीरकटकं सर्पग्रैवेयकाङ्गदम् ।। ८४ ।।

सर्पकक्षोदराबद्धं सर्पराजोत्तरीयकम् ।
रक्तं रक्ताम्बरधरं रक्तमाल्यविभूषितम् ।। ८५ ।।

रक्तेक्षणं रक्तकरं रक्तताल्वोष्टपल्लवम् ।
रक्तगन्धविलिप्ताङ्गं फाले तत्तिलकोज्वलम् ।। ८६ ।।

शमीश्वेतार्कमन्दारदूर्वाद्यैरुपशोभितम् ।
चिन्तामणिविरचितकेयूरकटकान्वितम् ।। ८७ ।।

चिन्तामणिसुमकुटं रत्नहारसमन्वितम् ।
कण्ठे चिन्तामणियुतं रत्नाभरणशोभितम् ।। ८८ ।।

श्वेतातपत्ररुचिरं श्वेतचामरवीजितम् ।
सर्वावयवसम्पूर्णसर्वलक्षणलक्षितम् ।। ८९ ।।

सर्वाभरणशोभाढ्यं सर्वशोभासमन्वितम् ।
सर्वमङ्गलमाङ्गल्यं सर्वकारणकारणम् ।। ९० ।।

बीजापूरं गदामिक्षुचापं शूलं सुदर्शनम् ।
अब्जपाशोत्फलव्रीहिमञ्जरीस्वरदाङ्कुरान् ।। ९१ ।।

पुष्करे रत्नकलशं नानारत्नप्रपूरितम् ।
दधानं कलशस्थानि नानारत्नानि सर्वदा ।। ९२ ।।

विकिरन्तं स्वभक्तेभ्योऽविरतस्तुतिधारया ।
विघ्नान्धकारसन्दोहविध्वंसनविभाकरम् ।। ९३ ।।

महागणपतिं ध्याये शक्तिद्वयसमन्वितम् ।
वामभागे गणेशस्य सुखासीनां शुचिस्मिताम् ।। ९४ ।।

मुक्ताभां दिव्यवसनां रत्नकल्हारमालिकाम् ।
बिभ्रतीं फुल्लकमलं कृपाविष्कृतवीक्षणाम् ।। ९५ ।।

दिव्यमाल्याम्बरधरां दिव्यगन्धानुलेपनाम् ।
दिव्यशृङ्गारलीलाढ्यां नानारत्नैश्च शोभिताम् ।। ९६

कस्तुरीतिलकोपेतां करुणापूरितेक्षणाम् ।
साधकाभीष्टसर्वार्थसिद्धिदानैकतत्पराम् ।। ९७ ।।

अष्टलक्ष्मीसिद्धिगणनिषेवितपदाम्बुजाम् ।
महालक्ष्मीमहं ध्याये महासिद्धिं परात्पराम् ।। ९८ ।।

दक्षिणे गणनाथस्य सुखासीनां सरस्वतीम् ।
शुद्धस्फटिकसंकाशां हेमचम्पकमालिकाम् ।। ९९ ।।

शुद्धवस्त्रां पीनकुचां कल्याणीं हेमकञ्चुकाम् ।
दिव्याभरणशोभाढ्यां दिव्यगन्धविभूषिताम् ।।१००।।

निटिले तिलकोपेतां हस्ते पङ्कजधारिणीम् ।
हैय्यङ्गवीनहृदयां स्मितास्यां मृदुभाषिणीम् ।। १०१ ।।

कलाविद्याबुद्धिभिश्च निषेवितपदाम्बुजाम् ।
महाबुद्धिमहं ध्याये विद्यालक्ष्मीं सरस्वतीम् ।। १०२।।

अग्रे स्थितं मूषकेशं पर्वताकारविग्रहम् ।
सर्वालङ्कारसंयुक्तं वाहनं भावयाम्यहम् ।। १०३ ।।

पृष्ठभागे प्रभोस्संस्थं शुद्धस्फटिकविग्रहम् ।
अक्षसूत्रं ज्ञानमुद्रां पुस्तकं वरदं तथा ।। १०४ ।।

दधानं गणकं ध्याये गणेशतत्त्वबोधकम् ।
विघ्नेशमपि वीरं च शूरं च वरदं तथा ।। १०५ ।।

इभवक्त्रं चैकदन्तं क्षिप्रकं तुन्दिलं तथा ।
रक्तवर्णान् गजमुखान् त्रिनेत्रान् सोमभूषणान् ।।१०६।।

सर्वाभरणशोभाढ्यान् दशायुधविराजितान् ।
सशक्तिकानहं ध्याये मित्रभूतान् परात्मनः ।। १०७ ।।

नानालंकारसंयुक्तान् नानारूपविराजितान् ।
बीजापूराद्यायुधेशान् शस्त्रास्त्ररूपिणो भजे ।। १०८ ।।

द्वारस्य दक्षिणे पार्श्वे स्थित्वा द्वारस्य रक्षकम् ।
शिखिवाहं तारकारिं षडाननमहं भजे ।। १०९ ।।

द्वारस्योत्तरपार्श्वे तु स्थित्वा द्वारस्य पालकम् ।
सर्वदुष्टशिक्षकं तं भावये नग्नभैरवम् ।। ११० ।।

दिव्यसिंहासने रम्ये रुद्रभागे परात्मनः ।
सुखासने सन्निषण्णं केशवं धर्ममण्टपे ।। १११ ।।

सर्वालंकारशोभाढ्यं चतुर्भुजविराजितम् ।
गणेशाभिमुखे संस्थं भावये शक्तिसम्युतम् ।। ११२ ।।

अग्निभागे गणेशस्य दिव्यसिंहासने वरे ।
उमया संयुतं शम्भुं संस्थितं चार्थमण्टपे ।। ११३ ।।

सर्वालंकारसंयुक्तं त्रिनेत्रं सोमभूषणम् ।
चतुर्भुजमहं ध्याये गणेशाभिमुखे स्थितम् ।। ११४ ।।

नैर्ऋतौ दिव्यपीठे तु संस्थितां काममण्टपे ।
जपाकुसुमसंकाशां चतुर्भुजविराजिताम् ।। ११५ ।।

सर्वालङ्कारसंयुक्तां भुवनेशसमन्विताम् ।
आदिशक्तिमहं ध्याये गणेशाभिमुखे स्थिताम् ।।११६।।

वायुभागे दिव्यपीठे संस्थितं मुक्तिमण्टपे ।
तप्तकाञ्चनसंकाशं चतुर्भुजविराजितम् ।। ११७ ।।

सर्वालंकारशोभाढ्यं कर्मकालनियामकम् ।
हिरण्यपुरुषं ध्याये गणेशाभिमुखे स्थितम् ।। ११८ ।।

सिद्धाश्रमपदं गत्वा श्रुतज्ञानस्य सन्ततम् ।
मननं च निदिध्यासं चक्रुर्भावपुरस्सरम् ।। १४२ ।।

निर्विकल्पसमाधिं च संप्रापुरस्य वैभवात् ।
अद्वैतज्ञासानरूपं लब्ध्वा योगप्रभावतः ।। १४३ ।।

संप्रापुर्योगशान्तिं च ब्रह्मभूतस्वभावकाः ।
अनुग्रहार्थं लोकानां तिष्ठन्त्यद्यापि योगिनः ।। १४४ ।।

श्रीसिद्धिबुद्धिहृदयं गणेशोपास्तिदायकम् ।
ज्ञानदं योगदं चापि शृणुयाच्च पठेच्च वा ।। १४५ ।।

गाणेशज्ञानमतुलं प्राप्नुयान्नात्र संशयः ।
यं यं कामं समुद्दिश्य पठते भक्तिभावतः ।
तं तं काममवाप्नोति प्रसादाद् ब्रह्मणस्पतेः ।। १४६ ।।

ललितोवाच—

ज्ञानामृतपूर्वभागं ज्ञानसारमिति स्मृतम् ।
हृदयत्रयसंयुक्तं गाणेशज्ञानदायकम् ।। १४७ ।।

उद्दालकमुखा विप्राः श्रुत्वा ब्रह्ममुखाम्भुजात् ।
मायूरं क्षेत्रमासाद्य ज्ञानानुभवधारिणः ।
ज्ञानसिद्धिं च संप्रापुर्जीवन्मुक्तियुता बभुः ।। १४८ ।।

शिव उवाच—

एवं स्कन्द! महाभाग! हयग्रीवमुखा वराः ।
शाक्ता गाणपतज्ञानदायकं ब्रह्मभूयदम् ।। १४९ ।।

ज्ञानसारं शक्तिमुखाच्छ्रुत्वा हर्षपुरस्सरम् ।
काञ्चिक्षेत्रसमीपस्थे पूर्वाम्भोधिपश्चिमे ।। १५० ।।

संस्थिते क्षेत्रराजे तु वक्रतुण्डस्य ब्रह्मणः ।
काञ्चिपुरे गाणपते सागरस्य तटे वरे ।। १५१ ।।

सिद्धिबुद्धिपतेः पृष्ठभागे शक्तिं सनायकाम् ।
संपूज्य च महासिद्धिबुद्धिनाथस्य सन्निधौ ॥ १५२ ॥

स्थित्वा ध्यानयोगपरा बभूवुश्शाक्तपुङ्गवाः ।
आविर्भूय पुरस्तेषां सिद्धिबुद्धिपतिः प्रभुः ॥ १५३ ॥

ब्रह्मज्ञानं च तत्सिद्धिं प्रददौ प्रीतिपूर्वकम् ।
हयाननादयश्शाक्ता बभूवर्ज्ञानयोगिनः ॥ १५४ ॥

जीवन्मुक्ता देहधरा लोकानुग्रहतत्पराः ।
त्रिसाहस्रग्रन्थयुतो ज्ञानसारोऽयमुत्तमः ॥ १५५ ॥

यथाश्रुतो यथाज्ञातो गणकस्य मुखाम्बुजात् ।
तथा तुभ्यं मया प्रोक्तो महासेन! ममात्मज! ॥१५६॥

ज्ञानसारमिमं भक्त्या शृणुयाच्च पठेच्च वा ।
दीक्षां गाणपतीं प्राप्य विचार्यार्थं गुरोर्मुखात् ॥१५७॥

ज्ञाने गाणपते सत्यं मम तुल्यो भवेद् ध्रुवम् ।
धर्ममर्थं च कामं च मोक्षं च ब्रह्मभूयकम् ॥ १५८ ॥

लभेत्सत्यं न सन्देह उद्धृत्य भुजमुच्यते ।
तस्मात्सर्वप्रयत्नेन गाणेशैर्मुक्तिकाङ्क्षिभिः ॥ १५९ ॥

पठनीयो ज्ञानसारो ज्ञात्वा चार्थं गुरोर्मुखात् ।
अभक्ताय न देयोऽयं देयः पुत्राय धीमते ॥ १६० ॥

सच्छिष्याय प्रदातव्यो नो चेद्रुष्टो भवाम्यहम् ।
पुत्रप्रीत्या तव प्रोक्तः त्वं तु गाणपतो वरः ।
अस्यैव मननं कृत्वा ज्ञानश्रेष्ठो भविष्यसि ॥ १६१ ॥

इति ज्ञानसारसम्पूर्तिः

इति विनायकरहस्ये ज्ञानामृतकाण्डे पूर्वभागे ज्ञानसारे
सिद्धिबुद्धिहृदये षोडशोऽध्यायः

श्रीगुणेशमहेशस्कन्दगणकमुद्गलहेरंडेभ्यो गुरुभ्यो नमः

—o—